रस्तु । मैवम् । यत्र भेदाभावो भेदकार्यं च प्रमिते तत्रैव भेदप्रतिनिधिविशेषः कल्प्यते न तु प्रमितभेदेषु प्रकृतिजीवेशेषु । न हि सोमवल्लीलाभे पूतिकस्तत्प्रतिनिधिः कल्पनीयः, तस्मान्निर्भेदेऽपि तत्त्वे भेदव्यवहारो विशेषबलादिति सिद्धम् ॥ २२ ॥

अत्राहुः—विग्रहो गुणाश्च स्वरूपादतिरिच्यन्ते इतरथा "यदात्मको भगवांस्तदात्मिका व्यक्तिः" "आनन्दं ब्रह्मणो विद्वान्" ( तै. उप. २-६-१ ) इ-

---

पूर्ववैष्णवाः प्राहुः—नन्विति । तान् प्रत्याख्याति—मैवमिति । प्रमितभेदेष्विति । "ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोगार्थयुक्ता" ( श्वे० उप १–९ ) "भोक्ता भोग्यं प्रेरितारं च मत्वा ( श्वे. उ. १–१२ )" इत्यादिश्रुतिभिर्भोग्यत्वभोक्तृत्वनियन्तृत्वैः प्रमाणितमिथोऽन्यत्वेष्वित्यर्थः ॥ २२ ॥

अत्रेति । अत्र भगवद्वस्तुनिरूपणे त्रिदण्डिनो वदन्तीत्यर्थः । इतरथा विग्रहादेरतिरेकास्वीकारे । यदिति । चिदात्मको भगवान् चिदात्मिका तस्य मूर्तिरित्युभयोश्चित्त्वे सादृश्यमेव न त्वभेदः । एतदुपोद्बलकं च—'मम देहे गुडाकेश' इत्यादि । यदात्मको घटः तदात्मकः करक इतिवत् । तत्र किमात्मक इति पृष्टा स्वयमुत्तरयति—ज्ञानेत्यादि । विशेष्यभूतो धर्मिज्ञानात्मकः । ऐश्वर्यशक्त्योरपृथक्सिद्धधर्मत्वात्तदात्मकश्च स इत्यर्थः । अन्यथा षष्ठीश्रवणं व्याकुप्येत् । इतिशब्दो हेतौ । यस्मात् स ऐश्वर्यशक्तिभ्यां तादृग्भ्यां नित्योपतस्तस्मादनादितत्सिद्धानि तस्मादपृथक्सिद्धानि बुद्ध्वा-

त्यादिश्रुतेः "मम देहे गुडाकेश" ( गी० ) "हरेर्गुणाक्षिप्तमतिः" इत्यादिस्मृतेश्च स्वारस्यभङ्गः । न च विग्रहादेरपि ज्ञानादिरूपत्वं निष्प्रयोजनं प्रमाणेन प्रयोजनमुखानिरीक्षणात् ॥ २३ ॥

विशेष्येण स्वरूपेण सह तस्य संबन्धो नित्योऽपृथक्सिद्धविशेषणत्वात् । नित्यसम्बन्धापेक्षीण्येव स्वरूपानतिरेकित्ववचांसि ॥ २४ ॥

न च विशेष्यविशेषणयोर्ज्ञानादिरूपत्वे नित्यसं-

---

दीनि विशेषणानि वयं लक्षयामहे इत्यर्थः । न चेति । आत्मनो ज्ञानादिरूपत्वेन प्रकाशनादिफले सिद्धे विग्रहादेस्तत्त्ववर्णनं निष्फलमिति न वाच्यम् । विशुद्धसत्त्वरूपत्वन्तु युक्तं वक्तुमिति भावः । प्रमाणेनेति । प्रमाणं हि वस्तुतः स्वभावमपेक्ष्य तत्र प्रवर्तते न तु फलमपेक्ष्येत्यर्थः ॥ २३ ॥

न च विग्रहादेर्भिन्नत्वात् कदाचित् स्वरूपाद्वियोगः स्यादस्मद्विग्रहादिवदिति चेत्तत्राह–विशेष्येणेति । ननु विग्रहादेर्भेदे तदभेदबोधकानि 'नेह नानास्ति किञ्चन' 'अनन्तकल्याणगुणात्मकोऽसौ' इत्यादिवचांसि कथं संगतानि तत्राह–नित्येति ॥ २४ ॥

स्वरूपरूपयोर्भेदकान् धर्मान् वक्तुमाह–न चेति । यथा नारायणस्य वासुदेवादेश्च व्यूहस्य ज्ञानादिरूपत्वान्नित्यसम्बन्धाच्चाभेदस्तथा नारायणस्य तद्विग्रहादेश्च ममा++क्तहेतोरिति न वाच्यमित्यर्थः । तत्र हेतुर्विशेष्यत्वेति । एकं विशेष्यं भगव-

बन्धे च स्वीकृते भेदानुपपत्तिर्विशेष्यत्वविशेषणत्वाभ्यां तयोर्भेदात्। एकं ज्ञानादिमत् परन्तु ज्ञानादिरूपमिति। इतरथा जीवेशयोरभेदापत्तिः॥ २५॥

"यथोदकं दुर्गे वृष्टम्" (कठ० उप० ४-१४) इत्याद्या श्रुतिस्तु पृथक्सिद्धिवादिनं निन्दति। तस्मात् स्वरूपाद्विग्रहस्य गुणानां च भेद एवेति॥ २६॥

नैतदतिचारु, यदित्यादिश्रुतिस्मृतिस्वारस्यभङ्गात्।

---

द्वस्तु परं विशेषणं तद्विग्रहादिवस्तु। पूर्वं चेतनं परन्तु चैतन्यमित्यर्थः। परव्यूहयोस्तु न विशेष्यविशेषणभावोऽस्ति परस्यैव व्यूहात्मनावस्थितेरिति न किञ्चिदवद्यम्। इतरथेति। ज्ञानादिरूपत्वान्नित्यसम्बन्धाच्च भेदास्वीकारे सतीत्यर्थः। तथा च जीवेशभेदावेदकानि 'द्वा सुपर्णा' (श्वे० उ० ४-६) इत्यादिवाक्यानि व्याकुप्येयुः॥ २५॥

ननु गुणभेदवादिनां तदभेदबोधिका श्रुतिः कथं संगता तत्राह—यथोदकमिति। न ह्येषा श्रुतिः गुणान् ब्रह्माभिन्नानाह किन्तु ये तान् पृथक्सिद्धान् प्रकृतिगतान् वदन्ति तान् गर्हयतीत्यर्थः। विज्ञातृत्वादयो गुणाः प्रकृतेरेव न तु पुंसः। किन्तु प्रकृतिसंसर्गात्ते पुंसि भवन्ति जपापुष्पारुण्यमिव स्फटिक इति साङ्ख्याः॥ २६॥

निरस्यति—नैतदिति। अत्र हेतुर्यदिति। यो नारायणः परः स वासुदेवो व्यूह इतिवत् यो भगवान् सा व्यक्तिरिति श्रुते ऋज्वर्थः प्रतीयते। अत एव कल्याणेत्यादिस्मृतेश्च गुणा-

"श्रुतेस्तु शब्दमूलत्वात्" ( ब्र०सू०२-१-२७ ) इति हि नः स्थितिरिति ॥ २७ ॥

सगुणवादिवाक्यानां गुणानुवादित्वेन गुणविधाने तात्पर्य्याभावान्निर्गुणं चैतन्यमेव पारमार्थिक न तु सगुणं ब्रह्मेति दुरुक्तिस्तूपरिष्टान्निराकरिष्यते ॥ २८ ॥

तथा च विग्रहादेः स्वरूपानतिरेकेऽपि विशेषादेव भेदव्यवहारः। प्रवृत्तिनिमित्तभेदादर्थभेदस्तु लौकिकोऽस्माभिः स्वीकृतः। न त्वलौकिके श्रुतिमात्रगोचरे परस्मिंस्तत्त्वे स स्वीकर्तुं शक्यते ॥ २९ ॥

---

भिन्नः परात्मेत्यार्जवेनार्थोऽवगम्यते तस्य भङ्गः स्याद्यदि कष्टकल्पना तत्र विधेयेत्यर्थः। किं चात्मनिष्ठे बुद्धिमनसी विग्रहनिष्ठे त्वङ्गप्रत्यङ्गे प्रसिद्धे तेषां सर्वेषामिहात्मनिष्ठताश्रूयमाणतयोरैक्ये समञ्जसाभाविनीति। श्रुते स्त्विति। ज्ञानं क्षणिकमिति बौद्धाः। ज्ञानं निराकारमिति मायिनः संगिरन्ते। तस्य श्रुतिबलादेव नित्यत्वं साकारत्वं च यूयं ब्रूथेति भावः ॥ २७ ॥

केवलाद्वैतिनः शङ्कामवहेलयन्नाह—सगुणेति। गुणा विग्रहो धर्मश्च। तद्विशिष्टब्रह्मवादिनामित्यर्थः। उपरिष्टाच्चतुर्थे पादे ॥२८॥

प्रकरणमुपसंहरति—तथा चेति। लौकिक इति। ब्राह्मणः श्यामः पाचको डित्थ इति व्याकरणादिशास्त्रोक्त इत्यर्थः। न त्वलौकिके इति। स प्रवृत्तिनिमित्तभेदादर्थभेदः, प्रवृत्तिनिमित्तभेदस्तु विशेषबलादिति बोध्यम् ॥ २९ ॥

तदेवं तथाभूतस्य भगवतो ज्ञानादेवास्य जीवस्य तयोरात्यन्तिकयोः सिद्धिर्न त्वन्यस्मादिति सिद्ध्यति, "तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते अयनाय" (श्वेता० उ० ३–८) इति श्रवणात्, "विद्यैव तु तन्निर्धारणात्" (ब्र० सू० ३–३–४७) इति न्यायाच्च, "प्लवा ह्येते अदृढा यज्ञरूपाः" (मुण्ड० उ० १–२–७) "नास्त्यकृतः कृतेन" (मुण्ड० उ० १–२–१२) "न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः" (महानारा० उ० १०) "यथा दृढैः कर्ममयैः क्रतुभिर्मामनोनिभैः" (भाग १०) "विद्यामान्वीक्षिकीं हित्वा

---

मुख्यं प्रकरणमुपसंहरति—तदेवमिति। तयोः सुखप्राप्ति-दुःखपरिहारयोः। अन्यस्मात् कर्मतः। तमिति पुरुषसूक्ते तं परेशं विदित्वा ज्ञात्वोपास्य च अतिमृत्यु मोक्षं तद्वेदनादन्यः पन्था उपायो अयनाय मोक्षप्राप्तये न विद्यते। यलोपश्छान्दसः विद्यैवेति सूत्रम्। विद्यैव ज्ञानपूर्विकोपासनैव मोक्षहेतुः। कुतः तमेवेत्यादिश्रुतौ तस्यास्तद्धेतुत्वविनिश्चयादित्यर्थः न त्वन्यस्मादित्येतत् समर्थयन् प्राह—प्लवा इति मुण्डके। अदृढा जीर्णाः। नास्त्यकृत इति। अकृतो भगवल्लोकः कृतेन कर्मणा नास्ति न सिध्यति। साध्यसाधनयोस्तयोर्वैरूप्यादित्यर्थः। किन्तु विद्ययैव सिध्यति। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदिति वाक्यशेषात्। न कर्मणेति तैत्तिरीयारण्यके। एके विरक्तास्त्यागेन विरागपूर्वकेण विज्ञानेनेत्यर्थः। यथा दृढैरिति श्रीदशमे शक्र-

तं प्रति भत्राणत्वम्"इत्यादिश्रुतिस्मृतिभ्यः॥ ३० ॥

स्यादेतत्। योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया। ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित्" ( गीता ) इति भगवता त्रिकं निःश्रेयसहेतुरित्युक्तम्। विद्यैव तद्धेतुरिति कथमिति चेत्। उच्यते-कर्मणः साक्षात्तद्धेतुत्वं नास्ति पूर्वोक्तश्रुत्यादिभ्यः।किन्तु चित्तशुद्धिद्वारा तदुभयाङ्गतैव "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" (बृ० उ० ४–४–२२) इत्यादिश्रुतेः, "यथेच्छावासनिरताः सर्वबाधाविवर्जिताः। शुद्धान्तःकरणाः शुद्धाः कर्मानुष्ठाननिर्मलाः॥ शुद्धे च तासां मनसि शुद्धेऽन्तः

---

वाक्यम्। आन्वीक्षिकी आत्मविद्या। तथा च कर्मैव स्वर्गमोक्षहेतुर्विद्या तु तस्य द्वारमिति जैमिनिमतं निरस्तम्॥ ३० ॥

स्यादिति। ज्ञानस्यैव तदुभयहेतुत्वं यत्त्वयोक्तं तदेतत् स्याद्यदि मदुक्तं नोपपद्येतेति शेषः। त्वया किमुच्यते इति चेत्तत्र वक्तव्यमाह–योगा इत्येकादशे। विद्यैवेति। ज्ञानमेवेत्यर्थः। उच्यत इति। तदुभयाङ्गता ज्ञानभक्तिपोषकतेत्यर्थः। तमिति। बृहदारण्यके तं जीवांशिनमीश्वरं वेदानुवचनेन स्वाध्यायपठनेन ब्रह्मचारिणः यज्ञेन दानेन च गृहिणः तपसा वनिन अनाशकेन यतयः। यथेति श्रीवैष्णवे। ब्रह्मणा सृष्टा प्रजा इति बोध्यम्। तासां प्रजानां येन शुद्धेन ज्ञानेन विष्ण्वाख्यं पदं वस्तु

संस्थिते हरौ। शुद्धज्ञानं प्रपश्यन्ति विष्ण्वाख्यं येन तत्पदम्" इत्यादिस्मृतेश्च । किन्तु ज्ञानभक्त्योरेव साक्षात्तद्धेतुत्वम् ॥ ३१ ॥

भक्तिरपि ज्ञानविशेषो भवतीति ज्ञानत्वसामान्यात्तमेवेति विद्यैवेति व्यपदेशः। जातिं पुरस्कृत्य बहुष्वैक्यं व्यपदिश्यते । यदाह भरतः "रसादीनामनन्तत्वाद् भेद एको हि गुण्यते" इति । विवृतं चैतत् । असंलक्ष्यक्रमत्वं जातिमादाय रसादिरेक एव गण्यते । अन्यथा तद्गणनमशक्यं प्रत्येकं भेदबाहुल्यादिति । ज्ञानविशेषे भक्तिशब्दस्य प्रयोगः कौरवविशेषे पाण्डवशब्दवद् बोध्यः ॥ ३२ ॥

अयमत्र निष्कर्षः । विद्यावेदनपर्यायं ज्ञानं द्वि-

---

लभ्यं भवतीति । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति नानार्थवर्गः । साक्षात्तद्धेतुत्वमव्यवधानेन मोक्षकारणत्वमित्यर्थः ॥ ३१ ॥

ननु भगवद्वाक्याज्ज्ञानभक्त्योरुभयोस्तद्धेतुता प्रतीता न तु श्रुतौ सूत्रे च तत्राह—भक्तिरपीति । स्फुटार्थम् । बहुष्वित्युभयोरुपलक्षणम् । विवृतमिति । साहित्यकौमुद्यामिति बोध्यम् । तद्गणनं रसादिसंख्याकरणम् ॥ ३२ ॥

ज्ञानस्य द्वैविध्यं विशदयति-अयमत्रेति । तत्र शुद्धेति । पञ्चाग्निविदः खलु जीवस्वरूपं विज्ञानविज्ञातृपरेशांशमनुदधते । तत्र

विधम्। एकं निर्णिमेषवीक्षणवत्तत्त्वंपदार्थानुभवरूपं, द्वितीयं त्वपाङ्गवीक्षणवद्विचित्रं भक्तिरूपमिति । तत्र शुद्धत्वंपदार्थानुसन्धिनाऽस्य जीवस्य तत्पदभाजोऽपि पतित्यक्तपत्नीवद् भगवत्प्रसादसौभाग्यहीनस्य कैवल्यलक्षणो मोक्षः स्यात् "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्" (बृह०उप० १-४-१२) इत्यादिश्रुतेः ॥ ३३ ॥

तत्पदार्थपरिशुद्धिविज्ञानात्त्वमात्यसैन्याधिपादिवद्यथायथं तत्प्रसादसौभाग्यभाजनस्य तस्य सालो-

---

स्वानुसंधावपि परेशानुसंधिरस्तीति मैवेत्यादिश्रुतिसूत्राभ्यां सहाविरोधः। दृष्टान्तादप्येवं लब्धं-त्यक्तायाः पत्न्याः पतिज्ञानमस्त्येव। कैवल्येति । विशुद्धः सन् तल्लोके तिष्ठतीति नास्य लोकाध्यक्षतेति भावः। आत्मानमिति बृहदारण्यके। पुरुषो जीवश्चेदात्मानं स्वं विजानीयात् ,कथम् अयं विज्ञानविज्ञातृवपुः परेशांशोऽस्मदर्थो भवानीति विद्यात्तदास्य सिद्धः पुमर्थः। अथायं किं वस्त्विच्छन् कस्य कामाय वांछनीयाय शरीरमनुसंज्वरेन्निरन्तरं संतापयेत् । तावता ज्ञानेनायं निर्दुःखः साक्षात्कृततादृगात्मा नास्य काचिद्वाञ्छा यस्त्वस्याश्रीपरेशः सोऽपि पूर्ण एवेति न किंचित् कार्यमस्ति। 'कामः स्मरेच्छयोः काम्ये' इति श्रीधरः ॥ ३३ ॥

तत्पदार्थेति । चिदेकरसपरेशानुभवादित्यर्थः । सालोक्यादीति । लोकाध्यक्षत्वसारूप्यसामीप्यसार्ष्टिलक्षणेत्यर्थः । ए-

'क्यादिलक्षणा मुक्तिर्भवति। "एतद्वै सत्यकाम परं चापरं ब्रह्म यदोंकारः" इत्युपक्रम्य "यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्य्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते एवं हैव स पाप्मभिर्विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते" इति श्रवणात्। शास्त्रीयज्ञानं त्वत्र परत्र च द्वारभूतं स्वीकार्यम्, इतरथा प्रवृत्त्यनुपपत्तेः ॥३४॥

भक्तिरूपेण तु ज्ञानविशेषेण स्नेहसौन्दर्यादिगुणा-

---

तद्वै षट्प्रश्नं पिप्पलादस्य महर्षेर्वाक्यम्। हे सत्यकाम परं नारायणाख्यं अपरं विरिञ्चाख्यं यद् ब्रह्म तदेते देवा योऽयमोंकार इति। ॐकारस्य परब्रह्मत्वं हंसादिवदक्षररूपतदवतारत्वात्। अपरब्रह्मत्वं अपरस्य परकार्यत्वात्। तस्मादोंकारं ब्रह्मद्वयात्मकं जानन् विद्वान् एतेनोंकारेण ध्यानेन परापरयोर्ब्रह्मणोरेकतरमन्वेति। यथाध्यानं लभते पादोदरः सर्वः जीवघनात् सर्वजीवाभिमानिनो विरिचात्परं पुरि परमे व्योम्नि शयं स्थितं नारायणमीक्षते प्राप्नोतीति। अस्य परेशध्यायित्वात् तत्प्रसादाल्लोकाध्यक्षत्वादिकं भवतीति गम्यते। शास्त्रीयं ज्ञानं त्विति। अत्र तत्त्वंपदार्थानुभवरूपे परत्र च भक्तिरूपे विज्ञाने इत्यर्थः। इतरथा शास्त्रीयं ज्ञानं विना तत्र तत्र प्रवृत्तिर्न स्यात्॥३४॥

भक्तिरूपेणेति। निष्कामभक्तिरूपेणेति बोध्यम्। वरि-

ष्वितयुवतिरत्नवद् भगवद्वशीकारप्रसादपात्रस्य तदङ्घ्रिवरिवस्यानन्दलक्षणः पुरुषार्थो भवति । "भक्तिरेवैनं नयते भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी" इति "विज्ञानघनानन्दघना सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति" इति च श्रुतेः, "अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज । साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ मयि निर्बद्धहृदयाः साधवः समदर्शिनः । वशे कुर्वन्ति मां भक्त्या सतस्त्रियः

---

वस्या परिचर्य्या । 'वरिवस्या तु शुश्रूषा परिचर्याप्युपासनम्'इत्यमरः । भक्तिरेवेति माठरश्रुतिः । एनं भक्तं नयति तद्धाम प्रापयति दर्शयति । धामिनं हरिं कुत एव तत्राह—यतः पुरुषो हरिर्भक्तिवशः । कुतस्तद्वश्यत्वं तस्य तत्राह—भक्तिरेवेति । भूयसी सर्वतत्प्राप्तिसाधनेभ्यो वहुतरा श्रेष्ठेत्यर्थः । भक्तेः स्वरूपं निर्दिशन् पुरुषस्य तस्य तद्वश्यतामाह—विज्ञानेति । श्रीगोपालतापिन्यां कृष्णस्य द्वादशी मूर्तिः।भक्तियोगेति। तद्वश्यास्तीत्यर्थः। कीदृशी सेत्याह-विज्ञानघना मूर्तविज्ञानरूपा आनन्दघना मूर्तानन्दरूपा । मूर्त्तौ घन इति पाणिनिसूत्रम् । मूर्त्तौ कावित्यर्थे हन्तेरप् स्याद्घनश्चादेश इति सूत्रार्थः । सैन्धवघनोदधिघनमिति तदुदाहरणम् । भक्तियोगे कीदृशीत्याह—सच्चिदिति । ह्लादिन्यादिसारे इत्यर्थः। अहमिति नवमे भगवद्वाक्यम् । अस्वतन्त्रो जीवो यथा परस्योत्कृष्टस्याधीनस्तथा परेशोऽप्यहं भक्ताधीन इत्यर्थः । भक्ताधीनता मे सुखायैवेति दृष्टान्तेनाह—सत्

सत्पतिं यथा" इत्यादिस्मृतेश्च ॥ ३५ ॥

सालोक्यादेस्तु नेहाभिलाषः स्वतः संभवात् "मत्सेवया प्रतीतं ते सालोक्यादिचतुष्टयम् । नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत कालविप्लुतम्" इति स्मृतेः । भक्तिलक्षणेऽप्येवं पठ्यते "भक्तिरस्य भजनम् । तदिहामुत्रोपाधिनैरास्येनामुष्मिन् मनःकल्पन-

---

स्त्रिय इति ॥ ३६ ॥

अस्या भक्तेर्निष्कामतां दर्शयति—सालोक्यादेरिति । इह निष्कामभक्तिरूपे ज्ञाने । स्वत इति । भोजनेनेव तृप्तेरिति भावः । अत्र प्रमाणं हेतुत्वेनाह—मदिति । नवमे श्रीभगवद्वाक्यम् । इह पूर्वा सेवा साधनभक्तिः परा तु प्रेमभक्तिरिति बोध्यम् । प्रतीतमनुषङ्गलब्धम् । अन्यत् स्वर्गसुखम् । नन्वेषां सालोक्याद्यनिच्छा न युक्ता तस्याप्राकृतत्वेनैष्टव्यत्वात् । सत्यम् । सालोक्यादिस्वभावजं सुखैश्वर्यं नेच्छन्ति सेवाविरोधित्वात् । तदविरोधि चेदिच्छन्त्येव । सेवानुपेतं तत् सुखरूपं सेवोपेतं तु परमसुखरूपं सेव्यस्य तद्रूपत्वादिति । स्वार्थनिपुणत्वमेषामुक्तम् 'आराधनं भगवत ईहमाना निराशिषः । ये तु नेच्छन्त्यपि परन्ते स्वार्थकुशलाः स्मृताः ॥' इति शक्रेण, एवमहैतुक्यव्यवहितेत्यादौ बोध्यम् । एषां भक्तिरकिञ्चनेति तदनुष्ठातृमुखेन पौराणिकैरुच्यते—'न येषां भजनादन्यच्चिकीर्षितमभीप्सितम् । जिज्ञासितं च किञ्चित्ते ज्ञेया निःकिञ्चना बुधैः' इति । भक्तिरस्येति गोपालतापन्याम् । अस्य कृष्णस्य भक्तिरानुकूल्येन श्रवणादिभि-

मेतदेव नैष्कर्म्यम्'' इत्यथर्वशिरसि ''सर्वविधिविनिर्मु-
क्तं तत्परत्वेन निर्मलम्। हृषीकेण हृषीकेशसेवनं
भक्तिरुच्यते'' इति नारदपञ्चरात्रे च ॥ ३६ ॥

एवं च ''यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथे-
तः प्रेत्य भवति'' ''ये यथा मां प्रपद्यन्ते तांस्तथैव
भजाम्यहम्'' ''नायं सुखापो भगवान् देहिनां गोपि-

---

जनम्। अस्मै रोचमाना प्रवृत्तिरानुकूल्यं तथामुष्मिन् कृष्णे मनः कल्प्यते निवेश्यतेऽनेनेति निरुक्तेश्चित्तानुरञ्जनात्मकः श्रवणादिहेतुको भाव इत्यर्थः। उत्तमात्वसिद्धये–तदिहेति। इहलोके परलोके चोपाधेः कृष्णान्यफलेच्छाया नैरास्येन विरहेण कृष्णैकस्पृहया जायमानमित्यर्थः। एतदेव नैष्कर्म्यं नित्यनैमित्तिकादिकर्मानावृतम्। स्वार्थे ष्यञ्। एवशब्दः सकामाया भक्तेर्व्यावृत्तये। यद्वा, अनुषङ्गेन कर्मरूपाविद्यानिवर्तकम्। आयुर्घृतमितिवत् प्रयोगः। सर्वेति। सर्वैरुपाधिभिर्हृषीकेशान्याभिलाषैर्निर्मुक्तम्। निर्मलं कर्मयोगाद्यनाविलं तत्परत्वेनानुकूल्येन विशिष्टम्। हृषीकेशस्य कृष्णस्य हृषीकेण श्रोत्रादीन्द्रियेण सेवनं कायिकं वाचिकं मानसिकं च परिशीलनमित्यर्थः॥ ३६॥

एवमिति। तत्त्वंपदार्थानुसन्धिरूपतया श्रवणादिभक्तितत्साध्यप्रेमरूपतया च ज्ञानद्वैविध्ये सतीत्यर्थः। यथेति छान्दोग्ये। यथाक्रतुर्यादृशोपासनः इतो लोकात्प्रेत्य परलोकमासाद्य तथा तदुपासनानुयायिफलो भवतीत्यर्थः। ये यथेति। ये यथेति श्रीगीतासु। नायमिति श्रीदशमे। अयं गोपिकासुतो यशोदो-

• कासुतः । ज्ञानिनां चात्मभूताना यथा भक्तिमतामिह" इत्यादीनि फलतारतम्यवाक्यानि सङ्गच्छेरन्निति ॥ ३७ ॥

अत्रैवं पुनश्चिन्त्यते भगवद्वशीकारहेतुभूता शक्तिः किंस्वरूपेति—किं प्राकृतसत्त्वमयज्ञानानन्दरूपा किं वा भगवत्स्वरूपज्ञानानन्दरूपा अथवा जैवज्ञानानन्दरूपा उत ह्लादिनीसारसमवेतसंवितसाररूपेति । नाद्यः भगवतो मायावश्यत्वाश्रवणात् स्वतः पूर्णत्वाच्च । न द्वितीयः अतिशयासिद्धेः । नापि तृतीयः जैवयोस्तयोः क्षोदिष्टत्वात् । किन्तु चतुर्थ एवासौ भवेत् ॥ ३८ ॥

---

रस्यो भगवान् कृष्णः देहिनामारुरुक्षुज्ञानिनामात्मभूतानामारूढज्ञानिनां च तथा सुखदो न यथेह गोपिकासुते भक्तिमतामित्यर्थः ॥ ३७ ॥

मायावश्यत्वेति । 'माया परैत्यभिमुखे च विलज्जमाना' इत्यादिस्मृतिभ्यः स्वतः 'पूर्णमदः पूर्णमिदम्' इत्यादिश्रुतिभ्यः । अपूर्णो हि जीवः प्राकृतं ज्ञानानन्दमिच्छति तदर्थमुद्यतते । अतिशयासिद्धेरिति । आनन्दस्वरूपोऽपि भगवान् भक्त्यानन्दातिशयी भवतीति वक्ष्यमाणस्यानन्दाधिक्यस्यासंभवादित्यर्थः । किन्त्विति । चतुर्थस्तदुभयसारात्मा चतुर्थप्रकार एवासौ भक्तिरित्यर्थः ॥ ३८ ॥

भक्तौ खलु भगवान् स्वयमेव वशीभूतस्तिष्ठति तामरसकोशे मधुप इव रसिकयुवत्यां रसिकयुवेवेति श्रुतिस्मृतिभ्यः प्रतीयते। तत्प्रतीतार्थान्यथानुपपत्तिप्रसूतयार्थापत्त्या तु "ह्लादिनीसंधिनीसंवित्त्वय्येका सर्वसंश्रये। ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते" इति श्रीविष्णुपुराणोक्तस्वरूपविशेषभूतह्लादिनीसंवित्-

---

अथ लौकिकदृष्टान्तेन सुखरूपां भगवतो भक्तिवश्यतां ग्राहयति भक्तावित्यादिना। श्रुतिस्मृतिभ्य इति। 'भक्तिवशः पुरुषो भक्तियोगे तिष्ठति' 'अहं भक्तपराधीनः' इत्यादिभ्य इत्यर्थः। तत्प्रतीति। ताभ्यः श्रुत्यादिभ्यः प्रतीतोऽधिगतो यो भगवतो भक्तिवश्यतालक्षणोऽर्थः सोऽन्यथाभक्तेर्भगवत्स्वरूपविशेषभूतह्लादसंवित्सारत्वाभावे नोपपद्येत न सिद्ध्येत् तत्प्रसूतया तदन्यथानुपपत्तिज्ञानरूपयार्थापत्त्या प्रमाणेन तु ह्लादिनीत्यादिवाक्यसिद्धतदुभयसारात्मा भक्तिरिति लभ्यते इत्यर्थः। असिध्यदर्थदृष्ट्या तत्साधकान्यार्थकल्पना ह्यर्थापत्तिः। पीनश्चैत्रोऽह्नि न भुङ्क्ते इत्यत्र यथाऽह्न्यभुञ्जाने चैत्रे पीनत्वमसिध्यत् तत्साधकं तत्र रात्रिभोजित्वं कल्पयति तथा श्रूयमाणं भगवतो भक्तिवश्यत्वमसिध्यत्तत्साधकं भक्तेस्तद्विशेषभूतह्लादसंवित्सारत्वं कल्पयतीति। ह्लादिनीति ध्रुववाक्यम्। जीवाद्वैलक्षण्येनेश्वरं स्तौति—हे भगवन् सर्वसंश्रये निखिलपरमाश्रये त्वयि ह्लादिन्यादित्रिवृत्तिका एकाऽभिन्ना शक्तिर्वर्तते सत्त्वांशेन मनःप्रसादलक्षणाह्लादकरी तमोंऽशेन विषयवियोगादितापकरी रजोंऽशेन त-

सारस्था सेति निश्चीयते ॥ ३९ ॥

तथाच ह्लादसंविदोः समवेतयोः सारो भक्तिरिति सिध्यति । तत्सारत्वं च तन्नित्यपरिकराश्रयकतदानुकूल्याभिलाषविशेषः । इत्थंभूता भक्तिरित्यभिप्रायेणैव सच्चिदानन्दैकरसतया तां विशिनष्टि श्रुतिस्तस्या भगवद्वश्यतां च दर्शयति "विज्ञानघना" इत्यादिना "भक्तिरेवैनं नयते" इत्यादिना ॥ ४० ॥

ननु ह्लादिन्यादिरूपा सा भक्तिर्भगवत्स्वरूपभूताज्ज्ञानानन्दान्नातिरिच्यते यदसौ स्वरूपशक्तिरिति भव-

---

दुभयोदयान्मिश्रत्येवं त्रिगुणप्रकृतिस्त्वयि नो वर्त्तते । कुत इत्याह–गुणेति । मायागुणास्पृष्टेत्यर्थः । सा तु जीवेष्वेव वर्त्तते इति जीवेभ्यस्त्वमन्योऽतिसुखैश्वर्यैर्नित्यर्थः ॥ ३९ ॥

निष्कृष्यति–तथा चेति । समवेतयोरभिन्नयोरित्यर्थः ।एकेत्युक्तेः । तत्सारत्वञ्चेति । ह्लादाभिन्नायाः संविदो यस्तदानुकूल्यांशः स तस्याः सार इत्यर्थः । स च क्षीरसारवत् पुष्पसौरभवच्च बोध्यः । अभिलाषविशेष इति । कृष्णान्यतृष्णाशून्या कृष्णमात्रतृष्णेत्यर्थः ।धर्मभूतज्ञानोद्गतया तादृश्या तत् तृष्णया सह क्षीरनीरन्यायेनैकीभूतस्तदानुकूल्यांशो भक्तिरिति यावत् । सा तथाभूता भक्तिर्नित्ये धाम्नि नित्यपार्षदेषु नित्यं चकास्ति सुरसरिदिव तद्भक्तप्रणाल्या प्रपञ्चेऽप्यवतरतीति भाष्येऽपि भाणितम् । इत्थंभूता वर्णितलक्षणा ॥ ४० ॥

पुनः शङ्कते–नन्विति ! स्वरूपशक्तिरिति । स्वरूपभूता श-

दभिरेवोक्तम् । कथमधुना भगवतस्स्वरूपज्ञानानन्दत्वं भक्तेः प्रत्याख्यायत इति चेत् । अत्राचक्ष्महे—न खलूपगतनिर्विशेषचैतन्यमात्रवदत्र ब्रह्मरूपं स्वीकुर्महे किन्तु स्वरूपशक्तिमदेव, शक्तिश्च स्वरूपानतिरेकिण्यपि तद्विशेषतया च भासतेऽन्यथा तस्य शक्तिरिति व्यपदेशासिद्धेः ॥ ४१ ॥

अवयवावयविभाववदेष प्रत्ययः यथा करचरणाद्यवयविनः कराद्यवयवानामनतिरेकेऽपि तदभावप्रतीतिर्वैदुषी तथैतद्द्रष्टव्यम् । न ह्येषा निर्मूला कल्पना "नेह नानास्ति किञ्चन" इत्यादिश्रुतिस्मृतिभ्यः "प्रतिषेधाच्च" ( ब्र० सू० ) इति न्यायाच्च । तथा च वर्तु-

---

क्तिरित्यर्थः । न खल्विति । पराभ्युपगमेति ।मायित्वीस्वीकृतेत्यर्थः । अत्रेति ।मध्वमुनिसिद्धान्ते इत्यर्थः । किन्त्विति । सत्ता सतीत्यादौ सत्तादीनां सत्ताद्यभिन्नसत्तादिमत्त्ववत् स्वरूपाभिन्नतच्छक्तिमत् स्वीकुर्महे इत्यर्थः ॥ ४१ ॥

विद्वद्दृष्टान्तेनोक्तमर्थं हृद्यारोहयन्नाह—अवयवेति । प्रकटार्थं सांख्यादिमतेनेदं बोध्यं न तु नैयायिकादिमतेन तत्र तयोर्भेदाङ्गीकारादिति भाष्येऽस्य विस्तरः । प्रतिषेधाच्चेति ब्रह्मसूत्रम् । "परास्य शक्तिर्विविधैव श्रूयते" इति शक्तेः स्वरूपाद् भेदे विभातेऽपि स्वाभाविकीति भेदप्रतिषेधान्न गुणगुणिभेद इत्यर्थः । लौकिकदृष्टान्तेनापि निष्कृष्टं ग्राहयन्नाह—तथा च वर्तुलत्वेत्या-

लत्वकोमलत्वादिविशिष्टो यूनो भुजो यथा युवत्याः स्कन्धे निहितस्तयोः परानन्दाय संपद्यते तथा भगवत्स्वरूपविशेषभूतह्लादिन्यादिसारात्मा भक्तिर्भगवत्यपृथग्विशेषणतया भक्ते च पृथग्विशेषणतया सिद्धा तयोरानन्दातिशयाय भवतीति सर्वं निरवद्यम् ॥४२॥

अत्र सन्धिनीसंवितह्लादिन्यो यथोत्तरमुत्कृष्टा ज्ञेयाः । तत्र सदात्मापि यया सत्तां धत्ते ददाति च सा सर्वदेशकालद्रव्यव्याप्तिहेतुः संधिनी, संविदात्मापि

---

दिना । तयोरिति यूनोरित्यर्थः । भुजो यथा यूनोऽभिन्नो युवत्यास्तु भिन्नस्तथा ह्लादिनीसाररूपा भक्तिर्भगवतोऽभिन्ना भक्तात्तु भिन्नेत्यर्थः । पृथग्विशेषणतया भूषणादिवदभिन्नविशेषणभावेनेत्यर्थः । तयोरिति भगवद्भक्तयोः ॥ ४२ ॥

ह्लादिन्यादीनां तिसृणां स्वरूपाणि कार्याणि च वक्ष्यंस्तासामुत्तरोत्तरोत्कर्षबोधाय क्रममाह—अत्रेति । तत्र सदात्मेति । अस्तीत्येवोपलब्धव्य इत्याद्युक्ताऽस्त्यात्मकोऽपि 'यथा सदेव सौम्य' इत्याद्युक्तां सत्ताश्रयतां सत्तां धत्ते द्रव्यकर्मकालस्वभावजीवेभ्यः सत्तां तत्तत्कार्यक्षमतां च ददाति सा सन्धिनी । संविदात्मेति । 'सत्यं ज्ञानम्' इत्याद्युक्तसंविद्रूपोऽपि यया प्रकाशीभूत इतिवद् 'यः सर्वज्ञः' इत्युक्तसंविद्वान् भवति, 'यथैव प्रज्ञा च तस्मात् प्रसृता पुराणी' 'त्वत्तो ज्ञानं हि जीवानाम्' इत्याद्युक्तधर्मभूतज्ञानविशिष्टान् जीवान् करोति सा संवित् । ह्लादात्मेति । "विज्ञानमानन्दं ब्रह्म" इत्याद्युक्तानन्दस्वरूपोऽपि यया "आ-

यया संवेत्ति संवेदयति च सा संवित्, ह्लादात्मापि यया ह्लादते ह्लादयति च सा ह्लादिनीति तत्तत्प्राधान्येन स्फूर्त्तेस्तत्तद्रूपं तस्या एकस्या वैदूर्य्यदवसीयते ॥ ४३ ॥

सा तदुभयसारांशरूपा रतिप्रेमाख्या भक्तिर्भक्ते भगवति चात्मानं निक्षिप्य मिथस्तावनुरञ्जयति । यदुक्तम्—"साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् । मदन्यन्नैव जानन्ति नाहं तेभ्यो मनागपि" इति, "विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितोऽ-

---

नन्दं ब्रह्मणो विद्वान्" इत्युक्तानन्दवान् भवति यया च संविदभिन्नया श्रवणादिभावादिनाम्न्या स्वानुकूल्यभूतया स्वसंमुखान् जीवानानन्दयति "रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इत्याद्युक्तप्रशस्तानन्दभाजः करोति सा ह्लादिनीति । एकस्यास्तस्याः शक्तेस्त्रिधा भानं दृष्टान्तेन ग्राहयति—तत्तदिति । यथैकस्यैव वैदूर्य्यस्य नीलपीतादिरूपसत्ता तथैकस्याः परायाः सन्धिन्यादिरूपतेत्यर्थः ॥ ४३ ॥

भगवति चात्मानं निक्षिप्येति। विशेषहेतुकाद्दास्तवाद् भेदकादिति भावः । साधव इति नवमे भगवद्वाक्यम् । विसृजतीत्येकादशे हरियोगेश्वरवाक्यम् । भक्तेष्वेति । भगवत्कर्तृका भक्तानुकूललक्षणा भक्तिर्भगवद्भक्तिरानन्दसंविद्रूपेत्यर्थः ।

र्यघौघनाशः। प्रणयरसनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः" इति च। भक्तेषु भगवद्भक्तिश्च दर्शिता "एवं स्वभक्तयो राजन् भगवान् भक्तभक्तिमान्। उषित्वादिश्य सन्मार्गं पुनर्द्वारवतीमगात्" इत्यादौ ॥ ४४ ॥

अतएव भक्तानन्दाय तस्य विविधः प्रयत्नोऽपि "मुहूर्तेनापि संहर्तुं शक्तो यद्यपि दानवान्। मद्विनोदार्थं करोमि विविधाः क्रियाः। दर्शनध्यानसंस्पर्शैः मत्स्यकूर्मविहङ्गमाः। स्वान्यपत्यानि पुष्णान्ति तथाहमपि पद्मज" इति तदुक्तेः ॥ ४५ ॥

तस्मात् परमानन्दमयोऽपि ययानन्दाऽतिशयी भवति स्वरूपानन्दं चानुभवति तं तमनुभावयति च

---

एवमिति। श्रीदशमे शुकवाक्यम्। स्वभक्तयोः श्रुतदेवबहुलाश्वयोर्ब्रह्मर्षिराजर्षिवर्ययोर्मिथिलावर्तिनोः। उषित्वा स्थित्वा। तौ प्रति स सन्मार्गमादिश्य ॥ ४४ ॥

अत एवेति। भक्तभक्तिमत्त्वादेव। तस्य भगवतः। मुहूर्तेनेति पाद्मे। दर्शनेति। यथासंख्यमत्रालङ्कारः। दर्शनेन मत्स्यः ध्यानेन कूर्मः संस्पर्शेन विहङ्गमो यथा स्वान्यपत्यानि पुष्णाति तथाहं स्वभक्तानित्यर्थः ॥ ४५ ॥

उपसंहरति—तस्मादिति। यया निरूपितया भक्त्या। ज्ञानफलमिति। तत् पदार्थानुसंधिरूपस्य ज्ञानस्य साध्यमित्यर्थः।

भक्तान्। तस्याः सत्त्वमयानन्दादिरूपत्वं कथमिति परमपुमर्थरूपत्वं भक्तेः सिद्धम्। ज्ञानफलं भगवान् भक्तिफलं तु भक्तिरेव तद्विषया तस्या एवोदग्रानन्दत्वात् ॥ ४६ ॥

आनन्दादिरूपायास्तस्याः कायादितादात्म्येनाविर्भूतायाः क्रियाकारत्वमानन्दचिन्मूर्त्तेः कुन्तलादिप्रतीकत्ववदवसेयम्। कुपितपित्तेन सितामाधुर्य्यमिवाविच्छिन्नसंसारेण तदादिरूपत्वं तस्याः पूर्वं नानुभूयते तत्संसेवया तु क्रमेण तथात्वमनुभूयत इति ॥ ४७ ॥

अतएव सिद्धाना तस्या प्रवृत्त्यनुपरम इत्याह

---

तद्विषया भगवदुद्देश्या। तस्या इति। तदुभयसाररूपाया भक्तेरेवोत्कृष्टसुखरूपत्वादित्यर्थः। अत उक्तं नारदाय भगवता 'सर्वमङ्गलमूर्धन्या पूर्णानन्दमयी सदा। द्विजेन्द्र तव मय्यस्तु भक्तिरव्यभिचारिणी' इति ॥ ४६ ॥

ननु श्रवणादेः क्रियारूपाया भक्तेः कथमानन्दादिरूपत्वं प्रत्येतव्यं तत्राह-आनन्दादीति। कायादीति। भक्तदेहेन्द्रियसंबन्धेनेत्यर्थः। कुन्तलादीति। चिकुरनखराद्यङ्गवदित्यर्थः। 'अङ्गं प्रतीकोऽवयवः' इत्यमरः। तर्हि श्रवणादिभक्तेरानन्दादिरूपत्वं कुतो न प्रतीयते तत्राह–कुपितेति। तदादिरुपत्वमानन्दसंवित्सारत्वम्। पूर्वं संसारदशायाम्। तत्संसेवया श्रवणादिभक्त्यावृत्त्या ॥ ४७ ॥

सिद्धानां विमुक्तानां। आमायणादिति। आमोक्षात्तत्रापि

भगवान् सूत्रकारः 'आप्रायणात् तत्रापि हि दृष्टम्' (ब्र० सू० ४-१-१२) इति । न चैवं भक्तिपुरुषार्थवादिनां भगवत्पुरुषार्थताविगमः तस्यास्तदविनाभावेन तयैव तस्यापि प्राप्तेः । तथाच भक्तिमतां भक्तिविषयो भगवान् पुरुषार्थ इति निष्कृष्टमिति ॥ ४८ ॥

तस्मात् कर्मणश्चित्तशुद्धावुपयोगः ज्ञानभक्तिरूपाया विद्यायास्तु साक्षात्तत्प्राप्ताविति न काचिद्विक्षतिः ॥ ४९ ॥

ये तु केचित् साद्विशेषप्रसङ्गादारम्भत एव भक्तिप्राप्तास्ते पुनर्भक्त्यैव चित्तशुद्धिं तत्साक्षातकृतिं च

---

मोक्षे च भगवत् कैङ्कर्यं शास्त्रेषु दृष्टमित्यर्थः । तस्या इति । भक्तेर्भगवदविनाभावेनैव तद्विषयस्य भगवतश्च लाभादित्यर्थः । एतदेवाह-तथा चेति ॥ ४८ ॥

मुख्यं प्रकरणमुपसंहरति-तस्मादिति । न काचिदिति । मोक्षहेतुतयोक्तयोः कर्मभक्त्योश्चात्र संग्रहान्न काचिदूनतेत्यर्थः ॥ ४९ ॥

सनिष्ठानां परिनिष्ठितानां च कर्मपूर्वां साधनपद्धतिं प्रदर्श्य निरपेक्षाणामकर्मपूर्वां तां दर्शयति-ये त्विति । केचिन्नारदादयः । ते पुनरिति । तेऽकर्मनिष्ठाः द्वितीया इत्यर्थः । 'पुनरप्रथमे भेदे' इति विश्वः । पिबतीति द्वितीये शुकवाक्यम् । तपसेति । तपसा हरिवासरादिव्रतेन ब्रह्मचर्येण मैथुनवर्जनेन श्रद्धया श्रीभागव-

भजन्ते, "पिबन्ति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु संभृतम् । पुनन्ति ते विषयविदूषिताशयं ब्रजन्ति तच्चरणसरोरुहान्तिकम्" इत्यादिस्मरणात् । एतानुद्दिश्य श्रुतिराह—"तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्येत्" इति ॥ ५० ॥

एषा खलु भक्तिरहैतुक्येव तां साधयति न त्वन्यादृशी । "अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे । सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥ दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः । स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः" इत्यादिस्मृतेः ॥ अहैतुकी निष्कामा विशुद्धेति पर्यायाः । अव्यवहिता मधुधारावन्निरन्तरा या भक्तिस्तस्यां सत्यामिति शेषः । मत्सेवनं ममानन्दात्मकस्य भक्तिरसिकस्य प्रेमसेवां विनेत्यर्थः । सालोक्यादिकं तुष्टष्टलभमिवेति तस्येह नाभिलाषः ॥ ५१ ॥

---

तादिशास्त्रार्थदृढविश्वासेन विद्यया नवविधया भक्त्या भावलक्षणया च आत्मानं हरिमान्विष्येत् साक्षाच्चिकीर्षेत् ॥ ५० ॥

तां तद्व्रतोपेतां तत्कृतिम् । अहैतुकीति तृतीये । तस्येहेति । इहाहैतुके भक्तियोगे ।अत्र सालोक्यादितः सेवाया महानुत्कर्षः तद्वतां तत्रानादरात् परानन्दस्य स्वामिनस्तत्र सम्यगनुभवाच्च ॥ ५१ ॥

ननु भक्तेर्निष्कामत्वं न संभवति तत्प्रसादितेन भगवता दीयमानस्यानन्दस्य काम्यत्वात् । यथा भावहावादिप्रसादितेन कान्तेनार्थ्यमानं रतसुखं तरुण्या काम्यते । तच्च कान्तादन्यदेवेति । एवमेव श्रुतिरप्याह "एष एवानन्दयाति रसं ह्येवायं लब्ध्वानन्दी भवति" इति चेत् । मैवम् । भक्तेः फलं चेद् भजनीयादन्यत् स्यात् यथा कान्तादन्यत्तदर्पितं रतसुखं तर्हि सा सफला भवेत् । प्रकृते तु भजनीयो भगवानेव फलं आनन्दात्मत्वात् "आनन्दो ब्रह्मेति व्यजानात्" इति श्रुतेः । किञ्च कान्तस्यानन्दसाधनत्वमेव । भगवतस्त्वानन्दरूपत्वात् फलरूप-

---

भक्तेरहैतुकतामाक्षिपन्नाह—नन्विति । तत्प्रसादितेनेति । तया भक्त्या परितोषितेनेत्यर्थः । आनन्दस्य तेन सह दिव्यरसगन्धाद्यनुभवादागतस्य सुखस्य रूपादन्यथेत्यर्थः । दृष्टान्तेन ग्राहयति—तथेति । भावः प्रेमाङ्कुरः हावस्तु प्रेममंजरी । लक्षणमेषां साहित्यशास्त्राद् बोध्यम् । रतसुखं संभोगानन्दः, तच्च कान्तादन्यदेवेति । सेव्याद् भिन्नं चेत् सेवायाः फलं तर्हि सा सकामेत्युच्यत इति भावः । एष इति । आनन्दयाति सालोक्यादि दत्त्वा सुखयति । दैर्घ्यं छान्दसम् । रसमिति । रसात्तस्मादुपलब्धेन सालोक्यादिनातिसुखी भवतीत्यर्थः । निरस्यति—मैवमिति । भक्तेरित्यादिकमगूढार्थम् । एवं चेति । भगवत आनन्दरूपत्वे सतीत्यर्थः । 'एवं प्रकारोपमयोः' इति श्रीधरः । 'सत्याशिषो हि भगवंस्तव पादपद्ममाशीस्तथानुभजतः पुरुषार्थमूर्तेः । अप्येव-

त्वं निर्विवादम् । एवं च पुरुषार्थमूर्त्तित्वात्मदातृत्वोक्तयो न व्याकुप्येयुः । एष एवानन्दयातीत्यत्रात्मदानेनेति रसमित्यत्र तु रसेनैव तेन लब्धेन सानन्दो भवतीति च व्याख्येयम् ॥ ५२ ॥

स्यादेतत् । भक्तकृतानुकूल्याद् भगवतः स्वरूपोल्लासरूपं सुखं जलकल्लोलवद् भवतीति भाषितमहिकुण्डलाधिकरणे, स्मृतिश्च "प्रीतिः स्वयं प्रीतिमगाद् गयस्य" इति "सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः । प्रीतो व्यमुञ्चदधिदूत्तेत्राभ्यां पुष्करेक्षण" इति च । तेनानू-

---

मार्य भगवान् परिपाति दीनान् वाश्रेव वत्सकमनुग्रहकातरोऽस्मान्' इति ध्रुववाक्ये पुरुषार्थमूर्तित्वं, 'ददात्यात्मानमप्यन' इति निमिनृपवाक्ये आत्मप्रदत्वं च द्रष्टव्यम् । एवमन्यानि च वाक्यानि मृग्यानि ॥ ५२ ॥

पुनराशङ्कते—स्यादिति । प्रीतिरिति पञ्चमे शुकोक्तिः । प्रीतिरानन्दरूपो भगवान् गयस्य राज्ञः स्वभक्तस्य प्रीतिमानन्दमगात् प्राप्तः । सख्युरिति श्रीदशमे शुकवाक्यम् । विप्रर्षेः सुदाम्नःअङ्गसङ्गेनालिङ्गनेन निर्वृतः परमानन्दी सन् प्रीतस्तदीक्ष्यप्रसन्नचेताः । तेनेति । तेनात्यानन्दितेन भगवतानुभूतेन स्वस्य भक्तस्य सुखोल्लासात् सकामा भक्तिः । एतत्सुखकामनया तद्भक्तेः कृतत्वादिति भावः । परिहरति—मन्दमित्यादिना । प्रकटार्थमेतत् । मत्सुखमिति भक्तस्य मम स्वरूपोल्लासलक्षणं सुखमित्य-

भूतेन स्वसुखोल्लासात् सकामत्वं भक्तेः प्राप्तं घट्टकुट्यामिव प्रभातमिति चेत् । मन्दमेतत् । तेनानुभूतेन मत्सुखं स्यादिति विशेषणानुदयात् शुद्धभक्तानाम् । इतरथा तेषामहैतुकीत्यादिवाक्यानां व्याकोपापत्तिः । तत्सुखमेव मत्सुखमिति तु निष्कामितां भक्तेर्नापहन्ति किन्तु पुष्णात्येव तामिति ॥ ५३ ॥

एषा तु भक्तिस्तन्नित्यपरिकरगणादारभ्येदानीन्तनेष्वपि तद्भक्तेषु मन्दाकिनीवत् प्रचरति, अतस्तद्भक्तकृपयैव लभ्येति श्रीभागवतादिसंवादः । तथा च भजनीयस्यानन्दरूपत्वाद् भक्तेर्निष्कामत्वं तदविषयस्य

---

र्थः । इतरथोक्तानङ्गीकारे आनुकूल्यासानन्दितस्य भगवतोऽनुभवेन स्वरूपोल्लासलक्षणस्य भक्तसुखस्याङ्गीकारे सति निष्कामभक्तिप्रतिपादकवाक्यगणव्याकोपादित्यर्थः । एतेनैव मदानुकूल्यसमानन्दितस्य भगवतोऽनुभवेन मदत्यानन्दः स्यादिति भक्तस्य धिषणायामुदितायां सकामत्वं भक्तेः प्राप्तं निवारयितुं तदुल्लासानुभावाभ्युदितेन स्वोल्लासेन पुनस्तत्सुखस्पृहाया वक्तुं शक्यत्वादिति सिद्धान्तिनः कल्पना । मामुल्लासितं वीक्ष्योल्लसितस्य भवतो वीक्षणेन मे महानानन्दः स्यादिति कामनया भक्तस्तमनुकूलयतीत्युक्तेः भक्तेः पुनः सकामत्वं स्यादिति पूर्वपक्षिणः कल्पना च निरस्ता वेदितव्या ॥ ५३ ॥

भक्तिमार्गोऽयं नाधुनिकः किन्त्वनादिरित्याह—एष त्विति ।

तस्य पुरुषार्थरूपत्वं च सिद्धम् ॥ ५४ ॥

नन्वानन्दरूपो भगवानिति नोपयुज्यते सीतादिव्यसनलालसेन तेन वैषयिकानन्दस्य समीहनात् । तस्माच्छब्दस्पर्शादिविषयसेवया वैषयिकं नाम सुखमुपजायते । तदेवेह चामुत्र च स्वर्गशब्दव्यपदेश्यमानन्द इति वेदज्ञा मन्यन्ते । यस्य लिप्सया लोकः सर्वां मर्यादामतिक्रम्य प्रवर्तते भगवतः सुखरूपत्वे तस्य तल्लालसो न स्यात् । सर्वस्य च लोकस्य तल्लिप्सया भाव्यं, न चैतदस्ति विषयालाभात्तदनर्हत्वाच्च । केचित् पङ्ग्वन्धबधिरालसा जरातुराश्चानुकृतवैराग्याः सु-

---

नित्ये धाम्नि स्थिता नित्यपार्षदास्तेभ्यः परंपरया गङ्गाप्रवाहवदिहापि भक्तेरागमादित्यर्थः ॥ ते ह्यवतारावसरे स्वामिना सार्द्धमिहाप्यसीदन्ति रूपान्तरेण ॥ ५४ ॥

भगवत आनन्दरूपत्वात्तदर्थिका भक्तिर्निष्कामेत्यापादितम्। तत्र कर्मठाः शङ्कन्ते—नन्विति । सीतादिव्यसनं व्यासङ्गः । आदिना भामादेर्ग्रहणम् । सीताया व्यसनं श्रीरामायणे, भामायास्तु श्रीहरिवंशे द्रष्टव्यम् । स्वर्गशब्देति । सुखविशेषः स्वर्गो न तु लोकविशेषः इति वेदज्ञा भट्टादयो भगवद्बहिर्मुखा मन्यन्ते । न चेदं जैमिनेर्मतं केवलाद्वैतमिव व्यासस्येति बोध्यम् । यस्येति । वैषयिकस्य सुखस्य । सर्वामिति । लौकिकीं वैदिकीं च । तल्लालसः सीतादिव्यसनतृष्णा तल्लिप्सया भगवत्स्पृहया । न चैतदि-

खिनो वयमिति रिक्तभाषयाऽज्ञान् प्रतारयन्ति। तस्माद्वैदिकैः शुभकर्मभिर्विषयोपलम्भस्तत्सेवया सुखोत्पत्तिर्दुःखहानिस्तु तच्छेषभूत एव दीपप्रकाशस्य तिमिरनिवृत्तिरिवेति चेत् ॥ ५५ ॥

उच्यते— पामरं ब्रवीषि विषयरसिको विशुद्धानन्दानभिज्ञः। अस्ति हि वैषयिकातिरिक्तसुखसंपत्। सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति श्रुतेः। इह हि सुषुप्तिसुखं निर्विषयं प्रतीयते। सार्वलौकिकं चैतत्। एवञ्च जीवस्याणुभूतस्याजन्यसुखरूपत्वे सिद्धे विभोर्भगवतस्तु तादृशविपुलसुखरूपत्वं सिध्यति। "यो वै भूमा तत् सुखम्" ( छा० उप० ) इति, "आनन्दो ब्रह्मेति व्यजानात्" ( उप० ) इति च श्रुतिस्तथा-

---

ति। नैवं दृश्यते किन्तु विषयस्पृहैव दृश्यत इत्यर्थः। तर्हि ज्ञानवैराग्यशास्त्राणि व्यर्थानीति चेदोमित्याह-विषयालाभादिति। रिक्तभाषया व्यर्थवाण्या। शास्त्राणि तदनुष्ठानादीनीति भावः ॥ ५५ ॥

प्रत्याचष्टे—उच्यते इत्यादिना। निर्विषयमिति। न खलु सौषुप्तिकं सुखं शब्दस्पर्शादिभोगजन्यमित्यर्थः। तादृशेति। अजन्येत्यर्थः। किं चेति। 'किंचारम्भेऽपि साकल्ये' इति श्रीधरः। अन्यत् प्रत्याख्यानमारभ्यते कार्त्स्न्येन वा तत् कार्यमित्यर्थः। वैष-

ह। किञ्च वैषयिकं नाम सुखमिन्द्रियैर्विषयग्रहेऽभिनिष्पद्यते तदग्रहे विनश्यतीति सर्वानुभूतं, भगवद्रूपं सुखं तु विषयत्यागेऽभिव्यज्यते तत्परिग्रहे तिरोभवतीति। "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्" ( उप० ) इत्यादिश्रुतेः,"विषयाविष्टचित्तानां विष्ण्वावेशः सुदूरतः। वारुणीदिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात्" इत्यादिस्मृतेश्च ॥ ५६ ॥

वैषयिकं च सुखं तत्प्रतिच्छविरूपमेवेति श्रुतिराह– "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीव-

---

यिकं शब्दादिभोगजन्यम्। नाविरत इति काठके। यो दुश्चरितान्निषिद्धाचारादविरतोऽनिवृत्तः योऽशान्तोऽजितबाहिरिन्द्रियः योऽशान्तमानसोऽजितान्तरिन्द्रियः यश्चासमाहितोऽकृतसमाधिः स एनं परमात्मानं प्रज्ञानेन नाप्नुयात्। तस्य प्रज्ञानं नोदयेदित्यर्थः। विषयेति श्रीभागवते। वारुणीदिग्गतं प्रतीच्यां नष्टम्। ऐन्द्रीं प्राचीं व्रजन् ॥५६॥

यज्ञादिकर्मभिर्विषयोपलम्भस्तैरेव निषेवितैरानन्द इति वादिनः कर्मठान्निराकुर्वन्नाह-वैषयिकं चेति। एतस्यैवेति। भगवत्सांनिध्यात् सत्त्वं सुखात्मना परिणमते तच्चोत्कृष्टैः शब्दादिविषयैर्भुक्तैरभिव्यज्यत इति तस्य भगवद्धेतुकत्वात स तादृश इत्यर्थः। अतएवेति। मोक्षानन्दस्य विषयानन्दस्य च दानादि-

'न्ति'' (बृ.उ.४-३-३२) इति। अत एव सर्वानन्दहेतुत्वं च तस्य सिद्धम्। उपेक्ष्यश्च विषयानन्दः ''सुखमैन्द्रियकं राजन् स्वर्गो नरक एव च। देहिनां यद्यथा दुःखं तस्मान्नेच्छेत तद् बुधः''इत्यादिस्मृतेः। विषयानन्दाय लोकस्य प्रयासः सर्वां मर्यादामुल्लङ्घ्य प्रवृत्तिश्च युज्यते ऽनुभूतत्वात्। भगवतस्तु विशुद्धानन्दरूपस्याप्यननुभूतत्वात्तत्त्वात्तस्मै तामुल्लङ्घ्य प्रवृत्तिर्न समस्ति। कथञ्चिदनुभूते तु तस्मिन् सर्वं परित्यज्य सा दृष्टा यथा-

---

त्यर्थः। सर्वानन्दहेतुत्वं च तस्येति। 'एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्' इत्यादिश्रुतेः। 'स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम्। सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम्' इत्यादि स्मृतेश्च। ततश्च सर्वाच्र्यत्वं तस्यैव व्यज्यते। तर्हि विषयानन्दोऽपि तद्धेतुकत्वान्मोक्षवत् कांक्ष्योऽस्तु, तत्राह-उपेक्ष्यश्चेति। सुखमिति श्रीभागवते। ऐन्द्रियकं विषयग्राहिभिरिन्द्रियैः सिद्धम्। अनियतस्वभावत्वाद्विषयैर्वस्तुतः सुखं नेत्याह श्रीपराशरः। 'वस्त्वेकमेव दुःखायेर्ष्योद्भवाय च। कोपाय च ततस्तस्माद् वस्तु वस्त्वात्मकं कुतः॥ तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते। तदेव कोपाय यतः प्रसादाय च जायते॥ तस्माद् दुःखात्मकं नास्ति न च किञ्चित् सुखात्मकम्। मनसः परिणामोयं सुखदुःखादिलक्षणः' इति। नन्वानन्दश्चेद् भगवान् तर्हि सर्वस्तत्रैव च रमेत न तु विषयानन्दे इति चेत्तत्राह-विषयान-

च कासाञ्चिद् व्रजसुभ्रुवाम् ॥ ५७ ॥

ननु भगवतोऽपि विषयविशिष्टत्वात्तत्तद्विषयसेवाजन्यानन्दाय तेषां तासां च तथा प्रवृत्तिरिति चेत, मन्दमेतत् । तद्विषयाणामपि स्वरूपानन्दानतिरेकात । तथा च श्रुतिः—"नेह नानास्ति किञ्चन" इत्याद्या, स्मृतिश्च "आनन्दमात्रकरपादमुखोदरादिः" इत्याद्या । अत-एव तेषामतिक्षोभकत्वम् । शुद्धभक्तानां तत्त्वज्ञानात्तत्र निष्कामा प्रवृत्तिरित्यभिहितं "अहैतुकाव्यवहिता" इत्या-दिना । सुखसाधने प्रवृत्तिः सकामा, सुखे तु सा निष्का-मेति सर्वाभ्युपगतम् । तस्माद्विपुलानन्दरूपो भगवानि-

---

न्दायेति । तस्मै तामिति । तस्मै भगवते तं प्राप्नुयामित्यर्थः । तां सर्वां मर्यादाम् । कासांचिदन्तर्गृहगतानाम् ॥५७॥

पुनरपि हरेरानन्दरूपतामाक्षिपन्तः कर्मठाः प्राहुः—नन्विति । विषयविशिष्टत्वादुत्तमशब्दस्पर्शादिमत्त्वात् । तेषां शुकादीनां तासां कासाञ्चिद् व्रजसुभ्रुवां च । निरस्यति मन्दमेतदित्यादिना । तद्विषयाणां भगवदभिन्नविग्रहधर्माणां शब्दस्पर्शादीनां तेषां तच्छब्दस्पर्शादीनामत एव स्वरूपानुबन्धित्वादेवातिक्षोभकत्वम् । तत्रेति । भगवति तद्भजन इत्यर्थः । भगवद्भक्तेर्निष्कामतां ग्राहयति-सुखेति । सुखसाधने तरुण्यादौ तन्निष्ठे शब्दादिविषयग्रामे तन्निषेवालक्षणा प्रवृत्तिः सकामा तन्निषेवाजन्याय सुखाय कृतत्वात तज्जन्ये सुखे तु सा निष्कामा । न खलु सुखा-

ति सिद्धः । ईदृशोऽपि स भक्तियन्त्रितः पुरुषार्थत्वाय प्रकाशाय वन्हिरिव मथित इत्यवसेयम् । सीतादीनां तु स्वरूपशक्तिवृत्तिभूतह्लादिनीसारसमवेतसंवित्सारात्मकत्वात्तद्व्यसनलालसेनापि न कोऽपि दोषः ॥ ५८ ॥

ननु पूर्णानन्देन भगवता भक्तैस्तज्ज्ञैरर्प्यमाणाः सेवा गृह्यन्ते इति नोपयुज्यते पूर्णानन्देत्यादिविरोधात् । "नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते । यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः" इति चेत् । मन्देमतत् ।

---

दन्यत् फलमिच्छन् सुखं निषेवते, अतस्तन्निषेवा निष्कामेति सर्वज्ञातमेतदित्यर्थः । तस्मादिति । निष्कामभक्तिविषयत्ववचनादित्यर्थः । ननु परमानन्दो विभुर्भगवान् सर्वत्रास्ति सर्वे कुतो नानन्दिनस्तत्राह—ईदृशोऽपीति । भक्तियन्त्रितो भक्तिगृहीतः । स तत्त्वदृशश्चेत् सीतादिव्यसनी कथं तत्राह—सीतादीनामिति । न कोऽपीति । नानन्दरूपत्वक्षतिरित्यर्थः । तद्व्यसनिता तस्यसंवित्सारात्मतां नातिक्रामतीति भावः ॥५८॥

नन्वस्तूक्तयुक्त्या निष्कामा भक्तिः, सा खलु भगवति न प्रयोज्या तस्य पूर्णत्वेन तद्ग्राहकत्वासंभवादिति शङ्कते-नन्विति । तज्ज्ञैरिति । भगवतः पूर्णत्वादिधर्मज्ञैर्भक्तैस्तस्मिन् सेवाः कथं कार्य्यन्त इति भावः । पूर्णानन्देत्यादीत्यादिना तज्ज्ञत्वाविरो-

"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" "भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्" "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः" "याः क्रियाः संप्रयुक्ताः स्युरेकान्तगतबुद्धिभिः। ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम्" इत्यादिश्रुतिस्मृतिभ्यः। आसु किल तद्भोक्तृत्वशक्तिभक्तार्पितसादरग्रहणयोरवगमात् स्वभावोचितसेवासु भक्तानां प्रवृत्तिरुपयुक्ता भगवता च भोक्त्रा प्रेष्ठानां तेषां ताः सादरग्राह्याः। नैवेति वाक्यं त्वेतदनुकूलत-

---

थश्च। नैवेति श्रीभागवते प्रह्लादवाक्यम्। अयं प्रभुरविदुषो जनादात्मनो मानं पूजां न वृणीते प्राकृतवन्नेच्छति यतो निजलाभपूर्णः किन्तु करुणत्वाद्वृणीते मां संपूज्यायं जगति पूज्योऽस्त्विति करुणया तत्पूजां स्वीकरोतीत्यर्थः। तत्र हेतुः यो यो भगवते यद्यन्मानं विदधीत तच्चात्मने तस्यैव भवतीत्यर्थः। तत्र दृष्टान्तः—यथा मुखे कृता श्रीस्तिलकादिशोभा प्रतिमुखस्य मुखप्रतिबिम्बस्य तद्वत् जीवः खलु हरेः रवेरिव शक्रचाप इति बोध्यम्। स इति तैत्तिरीयारण्यके। सलच्च पार्षदभावो मुक्तः ब्रह्मणा हरिणा सह कामान् दिव्यगन्धादीन् विपश्चिता विविधभोगचतुरेण। भोक्तारमिति श्रीगीतासु। या इति नारायणोपाख्याने। एकत्रेति। तदेकनिष्ठैरित्यर्थः। आस्विति। श्रुतिस्मृतिषु। स्व-

यो नेयम् ॥ ५९ ॥

नन्वेवं भोक्तुस्तस्य भोग्यालाभात् क्वचिद् दुःखमपुमर्थः प्रसज्येतेति चेत्। मन्दमेतत्। "मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्याचोऽवाक्यनादरः" इत्यादिषु भोग्यानां नित्यसिद्धिश्रव-

---

भावेति । दास्यसख्यादिप्रेमोचितासु । ताः सेवाः । सादरं साकाङ्क्षम् ॥५९॥

हरेर्भोक्तृत्वाद्भक्तैः प्रेम्णा निवेदितानि तेन तत्प्रेमाकृष्टेन स्वीकार्य्याणीति निरूप्य तत्र दूषणान्तरमागतं निराकर्तुमुत्थापयति–नन्विति । एवं भोक्तृत्वस्वीकारे सति क्वचिद्भोग्यालाभाद्रसगन्धाद्यप्राप्तेरित्यर्थः । दृश्यते हि नृपेन्द्राणामपि मृगयादिप्रवृत्तानां भोग्यालाभान्महद्दुःखमिति भावः । निराकुर्वन्नाह–मन्दमेतदिति । मनोमय इति छान्दोग्ये । मनोमयो विशुद्धेन मनसा गम्यः 'मनसैवानुद्रष्टव्यम्' इति श्रवणात् । प्राणशरीरः प्राणान्तर्यामी स्वभक्तप्राणतुल्यविग्रहो वेत्यपरे । भारूपश्चित्प्रकाशवपुः सत्यसंकल्पः सफलमानसक्रियः आकाशात्मा विभुर्निर्लेपश्च । सर्वकर्मा विचित्रानन्तचरित्रः सर्वकामो निखिलभोग्यसंपन्नः । एतदेव दर्शयति सर्वगन्ध इत्यादिना । रूपादेरुपलक्षणमेतत्। सर्वमिदं गन्धादिकमभ्यात्तो नित्यं धारयन्नवस्थितः । भावक्तान्तादर्शआद्यचि पदसिद्धिः,मुक्ता ब्राह्मणा इतिवत् । अवाक्यः कार्त्स्न्येन वाचामगोचरः 'कार्त्स्न्येन नाजोऽप्यभिधातुमीशे'

णात् । एवं च पूर्तिश्रुतिरपि निर्बाधा । इतरथा भोग्यभोक्तृत्वशक्तिवैधुर्यकृता तस्मिन्नपूर्तिर्भवेत् ॥६०॥

ननु "विजिघत्सोऽपिपासः" इति श्रुत्या भगवतः क्षुत्पिपासाप्रतिषेधान्नित्यतृप्तेन तेन तासां सादरग्रहो न संभवेदिति चेत् । उच्यते—तत्र हि वायुविकाररूपप्राणाभावात्तत्कार्य्ययोस्तयोः प्रतिषेधो न तु भोक्तृत्वशक्तेश्च तस्याः "सोऽश्नुते"इत्यादिश्रुतिस्मृतिसिद्धेः। तथा च यथा श्रीशुकभीष्मादेः सत्यपि पौरुषे न स्मरविकारः तद्वासनाभावात् तथा भोक्तुरपि तस्य तादृशप्राणाभावात्तत्कार्ये ते नेति । तस्मान्नित्यतृप्तस्यापि तस्य भक्तेच्छैव क्षुत्पिपासे स्वेच्छामयस्येत्यादिश्रुतेः । विलीनस्मरविकारस्य पुंसो वनिताकटाक्ष इव तद्विका-

---

इति वक्ष्यमाणत्वात् । नादरः स्वेतरेषु नमस्कारादिरहितः सर्वस्वामित्वात् 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः' इत्यादिश्रुतेः॥६०॥

भगवतो भोक्तृत्वं पुनरप्याक्षिपति—नन्विति । विजिघत्सः क्षुद्रहितः अपिपासस्तृषारहितः तासां रसगन्धाद्यर्पणानां सेवानाम् । निराचष्टे—उच्यत इत्यादिना । तत्रेति श्रुतौ । तथाचेति । पौरुषे पुंस्त्वे । तद्वासनेति । पुंस्त्वप्रयुक्तकामिनीवाच्छाऽभावादित्यर्थः । ते नेति । ते क्षुत्पिपासे न स्त इत्यर्थः । ननु ते विना भोग्येषु कथमभिरुचिस्तत्राह—तस्मादित्यादि । भक्तेच्छैवेति ।

स्वप्रकाशः भक्तेच्छानुसारिणा सत्यसंकल्पेन तस्य ते प्रादुर्भवेताम् । लोके तृप्तोऽपि प्रीत्यार्पितं भुञ्जानो दृश्यते । तस्माद्भक्तो यदेच्छति यद्यच्चार्पयति तदैव तदुपभुङ्क्ते तावतैवासौ तुष्यति नाधिकेन । "भक्तक्षणक्षणो विष्णुः स्मृतिः सेवा स्ववेश्मनि । स्वभोज्यस्यार्पणं दानं फलमिन्द्रादिदुर्लभम्" इति स्मृतिश्च ॥६१॥

तदीयानि तु भक्ष्याणि स्वरूपशक्तिसिद्धरसात्मकान्येव "श्रियः कान्तः कान्तः परमपुरुषः कल्पतरवो द्रुमा भूमिश्चिन्तामणिगणमयी तोयममृतं । कथा गानं नाट्यं गमनमपि वंशी प्रियसखी चिदानन्दं ज्योतिः परमपि

---

भोक्तृत्वशक्तिं विद्वान् भक्तो यदा भोग्यान्यर्पयितुमिच्छति तदैव ते स्यातामित्यर्थः । अत्र प्रमाणं—स्वेच्छेति । श्रीदशमे ब्रह्मवाक्यम् । स्वकीयानां भुक्तानाम् इच्छा । तन्मयस्य तदधीनस्येत्यर्थः । प्राचुर्ये मयट् । ननु ताभ्यां विरहितस्य तस्य भक्तेच्छयैव ते कथं भवेतां तत्राह—भक्तेच्छा त्विति । प्रीतिव्यवहारे लोकेऽप्यनुभूतमेतदित्याह—लोके इति । भक्त इति हरिमदीपे ॥ ६१ ॥

ननु भगवतो वास्तवीं भोक्तृत्वशक्तिं जानद्भिर्भक्तैः प्रीत्यार्पितान्यन्नादीनि प्रीत्यैव भुञ्जाने तस्मिन् हेयांशसंभावना लोकवत् प्राप्नोति, युक्ता च सा तानि भुञ्जाने तदंशसंभवात् । ज्ञानमूर्तौ नारायणादौ रसान् भुञ्जानेऽपि तदंशो न स्यात् ,मनुष्यमूर्तौ कृष्णादौ तु स्यादेव सः । एवं धाष्ट्र्यान्युशतीत्यादिना तत्र

तदास्वाद्यमपि च" इति ब्रह्मसंहितायां,"द्रव्यतत्त्वं शृणु ब्रह्मन् प्रवक्ष्यामि समासतः। सर्वभोगप्रदा यत्र पादपाः कल्पपादपाः। गन्धरूपं स्वादरूपं द्रव्यं पुष्पादिकं च यत्। हेयांशानामभावाच्च रसरूपं भवेच्च तत्। त्वग्बीजं चैव हेयांशं कठिनांशं च यद्भवेत्। सर्वं तद्भौतिकं विद्धि न ह्यद्भुतमयं हि तत्। रसवदभौतिकं द्रव्यमत्र स्याद्रस-

---

तदुक्तेश्चेत्याशङ्कायां तद्भोग्यानामलौकिकत्वं प्रदर्शयन्नाह—तदीयानि त्विरत्यादिना। श्रिय इति। कान्ताः स्त्रियः ताः श्रिय एव लक्ष्मीसहस्रशतसंभ्रमसेव्यमानामिति पूर्वमुक्तेः। अत एव कान्तास्ता व्रजदेव्योऽवगताः तासां सर्वासां कान्तः पतिः परमपुरुषो गोपलीलः कृष्णः एवावगतः। कल्पतरुत्वात्तत्र द्रुमाः सर्वाभीष्टप्रदा विदिताः। भूमिरित्यादि तद्वत्। चिदानन्दं परं वस्त्वेव यत्र ज्योतिश्चन्द्रसूर्यादि। तदास्वाद्यं तासां तस्य च भोग्यं रसगन्धादिकमपि चिदानन्दमेव तत्स्वरूपशक्तिविभवत्वात्। द्रव्यतत्त्वमिति विकसितार्थम्। 'नित्यावतारो भगवान्नित्यमूर्तिर्जगत्पतिः। नित्यरूपो नित्यगन्धो नित्यैश्वर्यसुखानुभूः' इति बृहद्वैष्णवे चैवम्। नित्यत्वादेव तानि भोग्यानि भोक्तृकार्येषु प्रसादकराणि निमज्जन्त्येव न तु जीर्यन्ति पुष्पाणि वासांसि चोत्तीर्णानि पुनः स्वाधारं भजन्ति, न तु पर्युषितानि नश्यन्ति वा। 'पूर्णे संवत्सरे देवि पुष्पमेतत्तवान्तिकात्। निवर्त्स्यते तरुवरं समयेन प्रयास्यति' इति। पारिजातपुष्पतयात्वाल्लिङ्गात् श्रीहरिवंशे पारिजातकुसुमं सर्वान्मनोरथान् ददात्येतद्वर्षानन्तरं पारिजाततरुमेव प-

रूपकम्" इति हयशीर्षपञ्चरात्रे च तथैव प्रतीतेः॥६२॥

रसानां भक्ष्याकारत्वमलौकिकत्वासिद्धं सच्चिदानन्दानां विग्रहत्ववत् । तादृशानि च तानि रूपादिवद्भोग्यानीति न हेयांशयोगसंभावना । न च नृलिङ्गं ब्रह्म भजतां काचिच्छङ्का तेषामपि तादृशत्वेन तदनुदयात् । एवमेव स्वीकृतं तज्ज्ञैः । श्रूयते परिमले मलशब्दो मे-

---

यास्यतीति नारदेन भैष्मीं प्रत्युक्तं द्रष्टव्यम् ॥ ६२ ॥

ननु भोग्यानां रसरूपत्वे चर्व्यचोष्यादिभावस्तेषां न स्यात्तत्राह रसानामिति। भक्ष्याकारत्वमोदनव्यञ्जनादिरूपत्वं, तादृशानि रसात्मकानि तानि भक्ष्याणि । रूपादिवदिति । न हि रूपस्पर्शादीनां भुक्तानां हेयांशः संभाव्यत इत्यर्थः । न चेति। नृलिङ्गं मनुष्याकृतिं कृष्णादिं भजतां नन्दादीनां काचिच्छङ्का । असकृद्भुञ्जानस्य कृष्णादेर्लोकवत् कुतो न हेयांशप्रतीतिरिति वितर्को न भवतीत्यर्थः । 'शङ्का त्रासे वितर्के च' इति विश्वः। तेषामपीति। तेषां नन्दादीनां चिदानन्दविग्रहाणां रसात्मकानि भोग्यानि भुञ्जानानां तादृशत्वेन हेयांशायोगित्वेन तदनुदयात् कृष्णादौ तस्याः शङ्काया असंभवादित्यर्थः । अत्र विद्वदनुभवं प्रमाणयन्ति—एवमेवेति। तज्ज्ञैः कविकर्णपूरैर्महानुभावैरित्यर्थः। श्रूयते इति। नन्दनृपराजधान्यामिति बोध्यम् । स्फुटार्थं पद्यम्। कृष्णादेश्चिन्मूर्तित्वं सर्वदेवाभ्यर्च्यत्वं सर्वाभिमतं देवेष्वपि हेयांशाभावात्तादृशे तत्र क तदंशः। तथापि तस्मिंस्तत्संभावना तत्स्वरूपापरिज्ञानाद्विद्वेषाद्वेति स्थितम् । तथा च हेयांशाभावाच्च निर्मलं समस्तहेयर-

खलादिषु खलाद्यभियोगः चन्दनादिरस एव हि पङ्के नीविकेशरशनादिषु बन्धः ॥ ६३ ॥

"एवं धार्ष्ट्यान्युशति कुरुते मेहनादीनि वास्तौ स्तेयोपायैर्विरचितकृतिः सुप्रतीको यथाऽऽस्ते" इत्यत्र वास्तौ मेहनादीनि जलनिषेकपांशुप्रक्षेपादीनि धार्ष्ट्यानि कुरुते इत्येवार्थः । यद्वा, अमेति सहार्थेऽव्ययं अमा सह वसतोऽस्यां चन्द्रार्कावित्यमावस्यापदव्युत्पत्तौ दृष्टत्वात् "अमा सह समीपे च" इति नानार्थवर्गाच्च ।

---

हितं विष्ण्वाख्यं परमं पदमिति वैष्णवोक्तं स्वरूपं कृष्णादेः सिद्धम् ॥ ६३ ॥

ननु तस्मिन् हेयांशयोगं प्रत्याययद्वाक्यं दृष्टं तस्य का गतिरिति चेत्तत्राह—एवमिति । हे उशति कमनीये यशोदे राज्ञि तव सुतोऽस्मद्वास्तौ एवं धार्ष्ट्यानि कुरुते । कानीति चेत्तत्राह—मेहनादीनि अम्बुनिषेकधूलिनिक्षेपादीनीत्यर्थः।अम्बुनिषेकमेव प्रवृत्तिनिमित्तं कृत्वा मिहधातोर्मेघशब्दनिष्पत्तेरिति भावः । न चाप्रयुक्तत्वं दोषः, साहित्यरीतिकूपाम्बुनोऽत्र वेदान्तव्युत्पत्तिपीयूषसिन्धावनादरणीयत्वात् । कीदृशः स्तेयोपायैः पीठकोलूखलादियजनैर्विरचितकृतिः प्रकाशितचौर्यपाण्डित्यः। अधुना त्वदग्रे सुप्रतीकः साधुर्यथास्ते। व्याख्यान्तरमाह—यद्वेति । अमेति "अमावस्यदन्यतरस्याम्" इति सूत्रेऽमाशब्दस्य सहार्थत्वप्रतीतेरित्यर्थः । एवं पदानि भङ्क्त्वा वाक्यान्वयं योजयति-

स्तेयोपायैरमा सह धाष्ट्यानि कुरुते। कीदृंशि नादीनि कण्ठादिनादवन्तीत्यर्थः ॥ ६४ ॥

एवमृषभे भगवति या हेयांशयोगोक्तिः तत्त्वज्ञप्रतीतानुवाद एव। तत्प्रत्येतॄणां 'देवमायाविमोहिताः' इति विशेषणात्। "इदं शरीरं मम दुर्विभाव्यं तत्त्वं हि मे हृदयं यत्र धर्मः। पृष्ठे कृतो मे यदधर्म आरादतो हि मामृषभं प्राहुर्र्याः" इति तन्मूर्त्तौ परतत्त्वं रूपत्वं तेनैव कण्ठतोऽभिहितम्। नहि तादृशे तस्मिन्नसौ संभवेत् तत्सेविनां जीवानां च सिद्धानामतद्योगः स्मर्यते "जगज्जनमलध्वंसिश्रवणस्मृतिकीर्तनाः॥ मलमूत्रादिरहिताः पुण्य-

---

स्तेयोपायैरिति। नादीनीति। मित्राण्याक्रोष्टुं कोकिलमयूरध्वनिवन्तीत्यर्थः। इदं व्याख्यानं वैष्णवतोषण्यां च दृष्टम् ॥६४॥

नन्वेवमित्यादिवाक्यस्य साहित्यचातुर्य्येण पदभङ्गेनान्यथा व्याख्यानं न चारु, ऋषभचरितस्य तत्प्रतीतार्थोज्जीवकत्वादिति चेत्तत्रापि तथा प्रतीतिर्भ्रान्तिरिति योजयति-एवमित्यादिना। तत्र तावत्तद्विग्रहस्य परवस्तुतामाह—इदमिति। दुर्विभाव्यं मनसाप्यवितर्क्यं यत्तत्त्वं परमात्मवस्तु तन्ममेदं शरीरमेव। मे हृदयमिति ऋषभं श्रेष्ठं वेदोक्तधर्मपालनात्तद्विरोधिनिराकरणाच्च ऋषभनामाऽहमित्यर्थः। "ऋषभः श्रेष्ठवृषयोः" इति श्रीधरः। असौ हेयांशयोगः। अत्र कैमुत्यं दर्शयित्वाह—तत्से-

श्लोका इति स्मृताः" इति ॥ ६५ ॥

तस्मादेवमत्र व्याख्येयं—प्राणिकर्मानुरूपफलप्रदो भगवान् "नायं देहो देहभाजाम्" इत्यादिस्वोक्त्युपदिष्ट-धर्मनिष्ठान् शिष्टान् प्रति परतत्त्वमूर्तित्वेनावगतः प्रय-च्छति तेभ्यस्तदभीष्टानि, तदुपदिष्टधर्मभ्रष्टान् पामरान् प्रति तु हेयांशयोगितया प्रतीतस्तांस्तत्क्रियानुगुणन-रकं प्रापयतीति "मद्धर्मविमुखा मामीदृशं प्रतियन्त्वाच-रन्तु च तथा"इति तत्कामे सति तन्मायैव तथा भास-यति ॥ ६६ ॥

हेयस्याप्यहेयतयाऽवभासनं तादृशाचारजिघृक्षयैवेति मन्तव्यम्। इतरथा स्वधर्मदेशिकत्वेन तस्मिन्नास्था न स्यात्। यो ह्यधर्मो भगवता पृष्ठे कृतः स

---

विनामिति। पुण्यश्लोकाः शुकादयः ॥ ६५ ॥

तस्मादिति। ऋषभस्य परवस्तुत्वादित्यर्थः। पामरानर्हत्प्र-भृतीन्। तत्क्रियेति। मलिनाचरणानुरूपम्। तत्कामे सति भग-वदिच्छायां जातायामित्यर्थः ॥ ६६ ॥

पुरीषमुत्सृज्यातिसुगन्धीनि तस्मिन् पशुवदृषभो व्यचेष्टतेति यदर्हदादिषु तस्य चेष्टावभानं तत् किमर्थमिति चेत्तत्राह–हेय-स्यापीति। पार्थिवादिरूपं भक्ष्यं पुरीषादिरूपेण परिणमते। न हि तयोः किञ्चिदन्तरमिति तत्र तत्र समदृष्टिः सोऽस्मदुपजीव्यऋ-

एवैष वैदिकशौचादिविरहदेवद्विजयज्ञाद्यवज्ञामयस्तैर्गृहीत इति मुनिः स्फुटयति-"यस्य किलानुचरितमुपाकर्ण्य कोङ्कवेङ्ककुटकानां राजाऽर्हन्नामोपाशिक्ष्य कलावधर्मः" इत्यादिना । तस्मादार्हतान् पाषण्डिनः प्रति माययेदं हेयांशभासनं न च परमाप्ते भगवति वैषम्यं कर्मानुसारिणि तस्मिंस्तदसंभवात् ॥ ६७ ॥

एवं सति "तेन सह दावानलस्तद्वनं ददाह" इत्यत्र तु कर्तृसाहित्यमेव न तु कर्मसाहित्यं स्वीकर्तव्यं दावानलो वनं ददाह ऋषभस्तु तद्वासिनामविद्यामिति । य-

---

षभोऽभूदिति हेयेऽप्यहेयत्वावभासनं तत्पुरीषं बहुयोजनानि सुरभीणि व्यधादिति तस्मिन् सौरभ्यावभासनं चेत्यर्थः । तादृशाचारेति । नरकनिपातहेतुर्यस्तत्र तत्र समदृष्टित्वविधानलक्षणऋषभाचरितभ्रमादाचारस्तं ग्राहयितुमित्यर्थः । इतरथेति । ऋषभस्य तत्र तत्रोपादेयहेयभावत्यागेन समदृष्टित्वाभावे तस्य पुरीषे तादृक्सौरभ्याभावे चानवभाते सतीत्यर्थः । आस्था दृढविश्वासः । तैरर्हदादिभिः । मुनिः श्रीशुकः । यस्येति पञ्चमे । यस्यर्षभस्य उपाकर्ण्य श्रुत्वैव न तु वीक्ष्य । तस्मादार्हतानिति । श्रुतिबाह्यलिङ्गधारणं पाषण्डं तद्विद्यते येषां ते पाषण्डिनः इति मिताक्षरा ॥ ६७ ॥

भ्रमान्तरं निरस्यन्नाह-एवमिति । ऋषभस्य परतत्त्वे निर्णीते सतीत्यर्थः । कर्तृसाहित्यं दाहे कर्त्रानलेन सहभावः । न

त्वृषभस्य विष्णोः "एवमनुशास्यात्मजान्" इत्यादिभिः परमहंसधर्मानुष्ठानमुक्तं तत् खलु तदनुकरणरूपमेव तथैव प्रतीतेः। सांपरायविधिरपि प्रातीतिक एव तावतैव तदावेशपरिक्षयात्। तस्मात् सुष्ठूक्तं हेयांशयोगोक्तिरज्ञप्रतीतानुवादरूपैवेति। तस्मात् स्वज्ञानपूर्वकं भगवज्ज्ञानमेवात्यन्तिकदुःखनिवृत्तिसुखप्राप्त्युपायभूतं भवति नापरं किञ्चिदस्ति ॥ ६८ ॥

इति सिद्धान्तरत्नाख्यभाष्यपीठके परमपुमर्थोपायनिर्णयः प्रथमः पादः।

---

तु कर्मसाहित्यमिति। कर्मणा वनेन सहभावो न स्वीकार्य्यः। परतत्त्वस्यादाह्यत्वादिति भावः। नन्वृषभः किं तत्र ददाह तत्राह–ऋषभस्त्विति। यत्त्विति। तदनुकरणरूपं लोकशिक्षार्थमित्यर्थः। तथैव तत्प्रकरणेऽवगमात्। सांपरायविधिर्देहत्यागप्रकारः। तावतैवेति। प्रातीतिकेन तादृशानां देहत्यागेन शुश्रूषूणां नृणां देहावेशत्यागादित्यर्थः। प्रकरणमुपसंहरति--तस्मादिति। पञ्चमे ऋषभप्रकरणं वीक्ष्येदं विमृश्यम् ॥

इति श्रीगोविन्दभाष्यपीठकटिप्पण्यां प्रथमः पाञ्चजन्यपादो व्याख्यातः।



# द्वितीयः पादः



अथैश्वर्य्यरूपा माधुर्य्यरूपा चेति भगवत्ताया द्वैविध्यात्तद्विषययोर्ज्ञानभक्त्योर्द्वैविध्यं प्रदर्श्यते। तत्रैश्वर्य्यं नरलीलामनपेक्ष्य पारमैश्वर्य्याविर्भावः। यथा पितरौ प्रत्यैश्वर्य्यं प्रदर्श्य "एतद्वां दर्शितं रूपं प्राग्जन्मस्मरणाय मे। नान्यथा मद्भवं ज्ञानं मर्त्यलिङ्गेन जायते" इति, यथा चार्जुनं प्रति—"पश्य मे योगमैश्वरम्" इति। माधुर्य्यन्तु पारमैश्वर्य्यस्य प्रकाशने चाप्रकाशने च नरलीलाऽनतिक्रमः। यथा पूतनाप्राणहर्त्तृत्वे स्तनचूषणरूपनरबालकचेष्टत्वं, यथा चातिकठोरशकटोत्पातनेप्यतिकोमलाङ्घ्रिदलहातिसिद्धत्वम्, अतिदीर्घदामाशक्यबन्धेऽपि मातृभीतिवैक्लव्यं, ब्रह्मादिमोहनेऽप्यतिसा-

---

अथ भगवत्प्राप्तौ साक्षात्साधनभावेनोक्तयोर्ज्ञानभक्त्योरैश्वर्य्यमाधुर्य्यविषयतया द्वैविध्यं वक्तुमारभते—अथेत्यादिना। नानाशङ्काऽश्मसञ्चूर्णनादस्य पादस्य कौमोदकीति संज्ञा सद्भिरुच्यते। एतद्वामेति। श्रीदशमे भगवद्वाक्यम्। एतच्चतुर्भुजमैश्वरं मद्भवं पूर्वदृष्टमद्विषयं। मर्त्यलिङ्गेन मनुष्यस-

त्वैश्वर्येऽपि वत्सचारणलीलत्वं, पारमैश्वर्य्ये सत्यपि तस्या-प्रकाशनेन दधिपयःस्तेयव्रजस्त्रीजनलोलुपत्वादि ॥ १ ॥

अथैश्वर्य्यज्ञानं पारमैश्वर्य्यानुसन्धौ सति हृत्कम्पहेतुना सादरसम्भ्रमेण स्वभावशैथिल्यकृद्धर्मविशेषः यथा "युवां न नः सुतौ साक्षात् प्रधानपुरुषेश्वरौ" इति, यथा च "सखेति मत्वा प्रसभं यदुक्तम् हे कृष्ण हे यादव हे सखेति । अजानता महिमानं तवेदं मया प्रमादात् प्रणयेन वापि ॥ यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु । एकोऽथवाप्यच्युत तत्समक्षं तत् क्षामये त्वामहमप्रमेयम्" इति। इह वात्सल्यसख्यात्मकस्वभावशैथिल्यम् । माधुर्यज्ञानन्तु पारमैश्वर्य्यानुसन्धानेऽपि हृत्कम्पहेतुसम्भ्रमलवस्याप्यनुदयात् स्वभावातिस्थैर्य्यकृद्धर्मविशेषः । यथा "त्रय्या चोपनिषद्भिश्च

---

न्निवेशेन रूपेण इति शब्दानन्तरमशक्तमिति शेषः । एवमग्रेऽपि ॥ १ ॥

ज्ञेयमुक्त्वा ज्ञानमाह—अथेति । युवामिति । श्रीदशमे वसुदेववाक्यम् । युवां रामकृष्णौ भ्रातरौ । सखेति । श्रीगीतास्वर्जुनवाक्यम् । प्रसभं हठात् । क्षामये क्षमयामि । इहेति । युवां न न इत्यत्र पितुर्वात्सल्यशैथिल्यं, सखेतीत्यत्रार्जुनस्य सख्युः सख्यशैथिल्यम् । त्रय्येति । श्रीदशमे शुकवाक्यम् । सा श्रीय-

साङ्ख्ययोगैश्च सात्वतैः। उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजम्'' ''वन्दिनस्तमुपदेवगणा येगीतवाद्यबलिभिः परिवव्रुः। वन्द्यमानचरणः पथि वृद्धैः''इत्यादि। इह पारमैश्वर्य्यानुसन्धानेऽपि वात्सल्योज्ज्वलाख्यस्वभावाशैथिल्यम् ॥ २ ॥

माधुर्य्यनिष्ठानामैश्वर्य्यज्ञानं त्रिवेण्यां सारस्वतप्रवाहवद् गौणतयाऽस्ति हृत्कम्पहेतोः सादरसम्भ्रमस्याभावात्। न च तद् भावसङ्कोचकृत् प्रत्युत तत्पोष्येव मत्सुतो मत्सखो मत्प्रियो वा सर्वेश्वर इत्युल्लासस-

---

शोदा। वन्दिन इत्यादिकं तत्रैव श्रीयशोदां प्रति व्रजदेवीनां वाक्यम्। वृद्धैर्ब्रह्मादिभिः। इहेति। कृष्णैश्वर्य्यं विज्ञायापि तत्र श्रीयशोदावात्सल्यं शिथिलं नाभूदपि तु दृढमेव जातम्। कान्तस्यैश्वर्य्यं विज्ञायापि तासां तत्र कान्तभावो न शिथिलोऽपि तु दृढ एवासीदित्यर्थः ॥ २ ॥

भगवद्भक्तेष्ववरा व्रजस्थाः भगवत्तत्त्वाज्ञानात्, तथापि वन्हिस्पर्शेन दाह इव वस्तुमहिम्ना तेषां मोक्षस्त्वभूदिति केचिदज्ञा मन्यन्ते, तान्निरस्यन्नाह—माधुर्य्येत्यादि। माधुर्य्यनिष्ठानां व्रजस्थानां यद्येषामैश्वर्य्यज्ञानं स्वीकृतं तर्हि तन्माधुर्य्यभावमपनेष्यतीति चेत्तत्राह—न च तदिति। तदैश्वर्य्यज्ञानम्। ननु क्वैषामैश्वर्य्यज्ञानं दृष्टम्। तत्राह—विस्मय इत्यादि। यथा कृष्णस्य दृष्टविश्वाया व्रजेश्वर्य्या विस्मये स्वभावसिद्धे-

म्भवात् । लोकेऽपि यथा स्वपुत्रस्य स्वसखस्य स्वका-न्तस्य वा पृथिवीश्वरत्वे सति तस्मिन् वात्सल्यादेः पुष्टिभवेत्तथैतद्द्रष्टव्यम् । विस्मये विरहे विपदि च तस्योदयः पर्वाणि सारस्वतस्येव प्रवाहस्य ॥ ३ ॥

ऐश्वर्य्यवन्माधुर्य्यस्यापि ब्रह्मधर्मत्वात्तद्विषयकमपि ज्ञानं ब्रह्मज्ञानमेव सहस्रशीर्षत्वादिवद् द्विभुजत्वादेरपि ब्रह्मधर्मत्वं श्रुतिस्मृतिभ्यः सिद्धम् । "सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् । द्विभुजं मौनमुद्राढ्यं

---

दृशमहिमा परेशोऽयमिति ज्ञानमुदभूत् । यथा च वरूणकृतायां पूजायां श्रुतायामयं परमेश्वर इति व्रजौकसां ज्ञानमुदगात् । विरहे चेति । 'मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रवाः । वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु' इति तेषामेव तदैश्वर्य्यबोधकवचनम् । मृगवपुरित्येत्यादि च श्रीराधादीनां तादृशं वचनम् । विपदि चेति । इन्द्रादिहेतुकायां विपत्तौ सर्वेषां तदैश्वर्य्यबोधिका वाक् प्रसिद्धेति । श्रीदशमे द्रष्टव्यमेतत् ॥३॥

ननु ऐश्वर्य्यं भगवतो वास्तवमीश्वरस्वरूपानुबन्धित्वात् माधुर्य्यन्तु न वास्तवं मनुष्यानुग्रहाय मायया मनुष्यदेहतच्चेष्टयोर्धारणात्, अत उक्तं 'मायामनुष्यस्य वदस्व विद्वन्' 'लीलामानुषविग्रहः' इत्यादि । तस्मान्माधुर्यज्ञानवतामवरत्वमिति चेत्तत्राह—ऐश्वर्य्यवदिति । तद्विषयकं माधुर्य्यसम्बन्धि । सत्पुण्डरीकेति । श्रीगोपालपूर्वतापन्याम् । अत्र कृष्णस्य माधुर्य्यमी-

वनमालिनमीश्वरम्", "यदोर्वंशं नरः श्रुत्वा सर्व्वपापैः प्रमुच्यते। यत्रावतीर्णं कृष्णाख्यं परं ब्रह्म नराकृति", "गूढं परब्रह्म मनुष्यलिङ्गम्" इत्यादिभ्यः। एवञ्चोभयज्ञानसत्त्वाद् ब्रह्मोद्धवादिवन्द्यपादरजस्त्वं माधुर्य्यज्ञानवतां स्मर्य्यते ॥ ४ ॥

यत्तु "यदैश्वर्य्यज्ञानशून्यत्वादेषां रागे प्रधानता" इत्यु-

---

श्वरत्वेऽपि सति मनुष्यसन्निवेशताद्विचेष्टयोरुक्तेः प्रतीतम्। यदोरिति। श्रीवैष्णवे। गूढमिति श्रीभागवते। ब्रह्मोद्धवादीति। 'तद्भूरिभाग्यमिह जन्म किमप्यटव्यां यद् गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकं यज्जीवितं तु निखिलं भगवान् मुकुन्दस्त्वद्यापि यत् पदरजः श्रुतिमृग्यमेव' इति ब्रह्मणो वाक्यम्। 'आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम्' इत्यादिकमुद्धवस्य च। 'मायामनुष्यस्य' इत्यत्र मायया पराख्यया स्वरूपशक्त्या मनुष्यस्य नित्यं मनुष्यसन्निवेशिन इत्यर्थः। 'स्वरूपभूतया नित्यशक्त्या मायाख्यया युतः। अतो मायामयं विष्णुं प्रवदन्ति सनातनम्' इति श्रुतेः, 'त्रिगुणात्मिकाथ ज्ञानं च तथा चिच्छक्तिरेव च। मायाशब्देन भण्यन्ते शब्दतत्त्वार्थवेदिभिः' इति शब्दमहोदधेश्च, 'माया वयुनं ज्ञानम्' इति निघण्टुकोशाच्च। न हि मनुष्याकारः स्वर्णपिण्डो मनुष्यः, अन्यथा सच्चिदानन्दविग्रहत्वश्रुतिर्व्याकुप्येत्। एतेनैव लीलेति व्याख्यातम् ॥ ४ ॥

नन्वेवं व्रजौकसामुभयज्ञानवत्त्वेन चेद् भक्तवर्य्यत्वं सिद्धं

पजीव्यैरभिहितं तत् किल हृत्कम्पहेतुसादरसम्भ्रमाजनकत्वादिति बोध्यम् । न त्वैश्वर्य्यज्ञानमात्राभावात् तज्ज्ञानस्य दर्शितत्वात् ॥ ५ ॥

---

तर्हि भवदुपजीव्यैः श्रीरूपचरणैस्तेषामैश्वर्यज्ञानं कुतो निषिद्धम् ? तत्राह—यत्त्विति । हृत्कम्पेति । तदैश्वर्यज्ञानस्येति बोध्यम् । अयमर्थः—व्रजौकसां रागात्मिका भक्तिः, तल्लक्षणं च तैरुक्तम्—'इष्टा स्वारसिकी रागः परमाविष्टता भवेत् । तन्मयी या भवेद् भक्तिः साऽत्र रागात्मिकोदिता' इति । अस्यार्थः—इष्टे स्वानुकूल्यविषये वस्तुनि स्वारसिकी स्वाभाविकी या परमाविष्टता तस्या हेतुः पितृत्वादिसम्बन्धप्रधाना प्रेममयी तृष्णा स रागो भवेत् । तदाधिक्यहेतुतया तदभेदोक्तिरायुर्घृतमितिवद् बोध्या । तन्मयी तदेकप्रवर्त्तिता भक्तिरत्र रागात्मिका कथ्यते । तत्प्रकृत वचने मयडिति । अस्यां सत्यां तत्सेवायां निःसम्भ्रमा प्रवृत्तिः या व्रजौकसां श्रीदशमादौ दृश्यते यत्राश्लेषादयो निःसङ्कोचाः प्रवृत्ताः प्रभुरयमिति ज्ञानाच्चेतसि सादरः कम्पः सम्भ्रमः कथ्यते सर्वेश्वरोऽयं कृष्ण इति ज्ञानं विद्यमानमपि तादृश्या रागानुगयाऽन्तर्निगीर्णत्वात् प्रभवितुमशक्नुवन्तं सम्भ्रमन्न जनयतीति । तदजनकत्वादेव तत्रास्तीति तैर्निषिद्धं न तु सर्वथा नास्तीत्यभिमतं कृष्णविषयकस्यैश्वर्य्यज्ञानस्य श्रीदशमादिषु वर्णितत्वादिति । मथुराद्यौकसान्तु तादृश्यास्तस्या अभावेनैश्वर्य्यज्ञानस्य प्रभुत्वात्तं कम्पं जनयतीति गौणी तेषां रागात्मिकेति व्याख्यातारः ॥ ५ ॥

तच्च "अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः", "सर्पो मा ग्रसते तात प्रपन्नं परिमोचय। दावाग्निना दह्यमानान् प्रपन्नांस्त्रातुमर्हथः" "मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम्। बलिमपि बलिमत्त्वाऽवे-

---

व्रजौकसामैश्वर्यज्ञानं प्रमाणयति—अथो इत्यादिना। श्रीदशमस्याष्टमे हरेर्मृद्भक्षणचरित्रं वर्णितम्। तत्रैकदेत्यादिभिस्तत्सखैस्तन्मृद्भक्षणं तन्मातरि सूचितम्। तया च गृहीतकरं स उपात्तातस्य मतृतो भयं साखिवचसां मिथ्यात्वोक्तिपूर्वकं स्वमुखव्यादानं मात्राहं ताड्यमानो न स्यामिति तद्विस्मयाय स्वसङ्कल्पानुगया स्वैश्वर्यशक्त्या स्वास्ये विश्वप्रदर्शनम्। तत्र बहिःस्थितमेव विश्वं पतिपुत्रसहितमात्मानं व्रजञ्च तदास्यमध्ये पश्यन्त्या मातुः कथमेतत् सम्भवेदिति संशयरूपा शङ्का तस्याः 'किं स्वप्न एतदुत देवमाया किं वा मदीयो वत बुद्धिमोहः' इत्यर्धकेन प्रतिपादनम्। 'अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः' इत्यर्धकेन तु मत्पुत्रस्य परेशत्वात्तस्यैवायं स्वाभाविको धर्म इदानीं मत्प्रत्यक्षोऽभूदिति स्थापनम्। माधुर्यानुबन्धिनो हरेर्धर्मा व्रजौकसां सदैव प्रत्यक्षा ऐश्वर्यानुबन्धिनस्तु ते तस्मिन् सत्त्वेन ज्ञाता एव कदाचिदेव प्रत्यक्षा भवन्तीति तत्त्वविदां राद्धान्तः। 'अथो यथावन्न वितर्कगोचरं चेतोमनःकर्मवचोभिरञ्जसा' इत्यर्द्धकेन मदर्भकस्य नारायणाख्यस्वांशपुरुषद्वाराऽयमाश्चर्यदर्शनलक्षणोऽवितर्क्यो धर्मः

ष्ट्यद् ध्वाङ्क्षत्वग्यस्तदलमसितसख्यैर्दुरत्ययजस्तत्कथार्थः"
"वरदेश्वर मा स्म च्छिन्द्याः" इत्यादितद्वाक्यात्। किन्तु
तत्तज्ज्ञानानि क्रमेणोदयन्ते, युगपत् सर्वायोगात्तथैव
रसपोषाच्च। नाऽप्यनुदितमसत् "पुंस्त्वादिवत्त्वस्य
सतोऽभिव्यक्तियोगात्" इति न्यायात्॥

---

प्रत्यक्ष इति निरूपणम्। ततो 'यदाश्रयं येन यतः प्रतीयते सु-
दुर्विभाव्यं प्रणतास्मि तत्पदम्'इत्यर्द्धकेन चित्तप्रभृतिभिर्वि-
तर्कगोचरं न भवति। यदाश्रय्यंदर्शनं यदाश्रयं यद्यदधिष्ठानकं
यत इतिपदस्योत्पत्तिहेतुः येनेति पदस्य प्रतीतिहेतुस्तत्पदं पु-
रूपांशरूपं वस्तु तस्मिन् धर्मसंशयं निराचिकीर्षुरहं प्रणताऽस्मि।
कृष्णो मत्पुत्रो मे लालनीयस्तत्स्वांशः पुरुषस्तु पूज्य इत्यस्म-
द्भक्तिपद्धतिः। यः स्वांशिनः कृष्णस्य मत्पुत्रस्य मत्तो भयम-
पनिनीषुस्तदास्ये तादृशं विश्वं प्रदर्श्य मां विस्मापयते स प्रसी-
दन्मे तद्धर्मे शङ्कामपनयतादित्यर्थः। 'अहं ममासौ पतिरेष मे
सुतो व्रजेश्वरस्याखिलवित्तपा सती। गोप्यश्च गोपाः सह गो-
धनाश्च मे' इति त्रिपाद्या तच्छङ्काप्रणाशपूर्वकं निजभावदार्ढ्य-
दर्शनम्। 'यन्माययेत्थं कुमतिः स मे गतिः' इति चतुर्थपादेन
तु यस्य मत्पुत्रस्वांशस्य पुरुषस्य मायया ममेत्थं किं स्वप्न इ-
त्याद्युक्ता संशयरूपा कुमतिः स मे गतिस्तादृशसंशयतरणे स-
माश्रयोऽस्त्विति पुनस्तदनुदयाभ्यर्थनम्। 'इत्थं विदिततत्त्वायां
गोपिकायां स ईश्वरः। वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं
विभुः' इत्येके। न तु मत्स्वरूपं विज्ञाय मन्माता मे लालने

भगवतोऽपि मिहिरप्रकाशन्यायेन निरन्तरप्रततज्ञानस्य मनुष्यलीलोपयोगिसंमुग्धत्वं वीक्ष्यते "तदभिज्ञोऽपि भगवान् सर्वात्मा सर्वदर्शनः। प्रश्रयावनतोऽपृच्छद् वृद्धान्नन्दपुरोगमान् ॥ ततो वत्सान्" इत्यादौ।

---

शिथिला मा भूदिति माधुर्यानुयोगिकृपावर्णनम्। 'सद्यो नष्टस्मृतिर्गोपी सारोप्यारोहमात्मजम्। प्रवृद्धस्नेहकलिलहृदयाऽऽसीद्यथा पुरा' इत्येके। न तु विस्मयदर्शनानुसन्धेः स्मृतेस्तिरोधानात्मा नाशस्ततः पुत्रलालनमिति। एवमन्यच्च व्याख्येयम्।

एवं श्रीयशोदायाः कृष्णैश्वर्य्यज्ञानं प्रदर्श्य श्रीराधायास्तद्दर्शयति—मृगयुरिति। श्रीदशमे भ्रमरमुद्दिश्य तस्य वाक्यम्।

हे मधुप स कृष्णः पुरापि रामः सन् मृगयुर्व्याध इव कपीन्द्रं वालिनं विव्यधे मारितवान्। अलुब्धधर्मा व्याधधर्मेण रहितः। न हि व्याधः कपिं हन्यात्तन्मांसस्याऽभक्षणीयत्वात्। स्वयं स्त्रीजितः सीताऽनुरक्तोऽपि कामयानां स्पृहावर्तीं स्त्रियं शूर्पणखां विरूपां छिन्ननासाकर्णामकृत। पुरा वामनः सन् बलिना दत्तं बलिं त्रैलोक्योपहारमत्त्वा गृहीत्वाऽपि बलिमवेष्टयद् बबन्ध। ध्वाङ्क्षवदिति। काको यथा बलिमत्त्वाऽपि तद्दातारं वेष्टयति तद्वदित्यर्थः। तस्मादासितस्य श्यामस्य सख्यैरलम्। तर्हि तूष्णीमास्स्व इति चेत्तत्राह—तत्कथारूपोऽर्थस्तु दुस्त्यज इति। इह श्रीयशोदायाः श्रीराधायाश्चैश्वर्य्यज्ञानं विस्फुटम्। वरदेति। सर्वासां प्रेयसीनाम्। अत्र 'धन्या अहो अमी आल्यो गोविन्दाङ्घ्र्यब्जरेणवः। यान् ब्रह्मेशो रमा देवी दधु-

तच्च स्वचिच्छक्तिसाररूपलीलानन्दात्मकं स्वरूपानतिरेकि मन्तव्यम्। इतरस्य तस्मिन्नभावात्—"अष्टादशमहादोषै रहिता भगवत्तनुः। सर्वैश्वर्य्यमयी सत्यविज्ञानानन्दरूपिणी" इति स्मृतेः। महादोषाश्च ते—"मोहस्तन्द्रा भ्रमो रूक्षरसता काम उल्बणः। लोलता मद-

---

मूर्ध्नाऽघनुत्तये' इति ग्राह्यम्। ब्रह्मादिवन्द्यत्वेन तज्ज्ञानन्तु सर्वेषां व्रजौकसां तुल्यम्। किन्त्विति। तत्तज्ज्ञानान्यैश्वर्यमाधुर्यविषयाणि। युगपदिति। एकदाऽनेकज्ञानाऽसंभवादित्यर्थः। नन्वष्टावधानिनां युगपदनेकज्ञानं प्रतीतम्। तत्राह—तथैवेति। क्रमेण तत्तज्ज्ञानोदये सतीत्यर्थः। अष्टावधानेऽप्यन्तरालेऽतिसूक्ष्मः कालोऽस्त्येव, तदप्रतीतिस्त्वतिसौक्ष्म्यादित्याहुः। ननु माधुर्य्यज्ञानकाले तेषामैश्वर्य्यज्ञानं ध्वस्तमिति चेत्तत्राह—नापीति। पुंस्त्वादिवदिति ब्रह्मसूत्रम्। सुषुप्तौ सत एव ज्ञानस्य जागरेऽभिव्यक्तिः। यथा बाल्ये सत एव पुंस्त्वादेः कैशोरेऽभिव्यक्तिस्तद्वत्। अन्यथा क्लीबेभ्याऽपि तदापत्तिः॥

माधुर्य्यस्य ब्रह्मस्वरूपानुबन्धित्वात्तद्विषयकं ज्ञानं ब्रह्मज्ञानमित्युक्तम्। अथ माधुर्य्याङ्गभूतं मौग्ध्यादि तत्रोपपाद्यते-भगवतोऽपीत्यादिना। संमुग्धत्वमसर्वज्ञत्वम्। तादिति। श्रीदशमे शुकवाक्यम्। तदभिज्ञः शक्रपूजोद्यमविदिति प्रततज्ञानत्वम्। प्रश्रयेति। संमुग्धत्वम्। नन्वेतत् संमुग्धत्वानुकरणे न तु संमुग्धत्वे प्रमाणमिति चेत्तत्राह—ततो वत्सानित्यादि। तच्चेति संमुग्धत्वम्। न चास्य स्वरूपानतिरेकित्वे स्वीकृते ब्रह्मस्वरूपमज्ञानशबलं

मात्सर्य्ये हिंसाखेदपरिश्रमाः ॥ असत्यं क्रोध आकाङ्क्षा आशङ्का विश्वविभ्रमः। विषमत्वं परापेक्षा दोषा अष्टादशोदिताः" इति ॥ ६ ॥

ननु "ततो वत्सानदृष्ट्वैत्य पुलिनेऽपि च वत्सपान्। उभावपि वने कृष्णो विचिकाय समन्ततः" इत्यत्र मोहः, "क्वचित्पल्लवतल्पेषु नियुद्धश्रमकर्षितः। वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपबर्हणः" इत्यत्र तन्द्राखेदश्रमाः, "तावङ्घ्रियुग्मम्" इत्यादौ "मुग्धप्रभातवदुपेयतुरन्तिमात्रोः" इति भ्रमः, "वत्सान् मुञ्चन् क्वचिदसमये क्रोशसञ्जातहासः"

---

स्वीकृतमिति भ्रमितव्यं नखरचिकुराद्यङ्गवद्वैलक्षण्येनावभासमानस्यापि तस्य ज्ञानत्वाविरहात्। इदमेव समर्थयन्नाह—इतरस्येति। तमोवृत्तेरज्ञानस्य ब्रह्मस्वरूपेऽसत्त्वादित्यर्थः। तत्र प्रमाणमष्टादशेति। वैष्णवतन्त्रे 'न यत्र माया किमुतापरे' इति 'मायापरेत्यभिमुखे च विलज्जमाना' इत्यादिकञ्चात्रानुचिन्त्यम्। मोहस्तन्द्रेति। विष्णुयामले। खेदः क्लेशः परिश्रम इन्द्रियशैथिल्यम् ॥ ६ ॥

निरस्तान् दोषानापाद्य पुनः परिहरति—न त्वित्यादिना। 'ततो वत्सान्' इत्यादीनि 'क्वाप्यदृष्ट्वान्तः'इत्यन्तानि श्रीदशमवाक्यानि। विचिकाय मृगयामास। ताविति। 'तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्तौ घोषप्रघोषरुचिरं व्रजकर्दमेषु। तन्नादहृष्टमनसावनुसृत्य लोकमुग्धप्रभातवदुपेयतुरन्तिमात्रोः' इति कृत्स्नं वाक्यम्।

इत्यादौ लोलता, "मदविघूर्णितलोचनः ईषन्मानन्दुः-खसुहृदां वनमाली" इत्यादौ मदः, "लोके श्रमानिनां मौढ्याद्धरिष्ये श्रीमदन्तम" इत्यादौ मात्सर्य्यं, हिंसा च पूतनादिवधः, "नाहं भक्षितवानम्ब सर्वे मिथ्याभिशंसिनः" इत्यत्र जरासन्धच्छलादौ चासत्यं, क्रोधोऽपि तत्र तत्र प्रसिद्ध एव ॥ ७ ॥

"तां स्तन्यकाम आसाद्य मथ्नतीं जननीं हरिः। गृहीत्वा दधिमन्थानं न्यषेधत् प्रीतिमावहन्" इत्यत्राकाङ्क्षा, "क्वाप्यदृष्ट्वान्तर्विपिने वत्सान् पालांश्च विश्ववित्। सर्वं विधिकृतं कृष्णः सहसावजगाम ह" इत्यत्राशङ्का, "सोऽकामयत बहु स्यां प्रजायेय" इत्यादौ

---

अत्रातस्मिंस्तद्धीलक्षणो भ्रमः। 'कश्चिदावां ग्रहीतुमायाति' इत्येवंलक्षणः लोकं जनमनुसृत्य वीक्ष्य लोलता चापल्यम्। मात्सर्यं परोत्कर्षासहनम्। नाहमित्यत्र हरेरसत्यभाषणं नास्ति मृदः पृथिव्यास्तदुदरे प्रागेव स्थितेरिति ये व्याचक्षते ते त्वपूर्वरसिका एव मागधच्छले खण्डितायां च प्रेयस्यां व्यभिचारात् ॥ ७ ॥

तामिति। आकाङ्क्षा क्षुधितस्य स्तन्यपानस्पृहा। क्वापीति। 'आशङ्का वितर्कः सः' इति तैत्तिरीयके। स परमात्मा। समोऽहमिति श्रीगीतासु। अहमिति। परापेक्षाऽन्याश्रयणम्। तानिति। संमुग्धत्वादीन् विना मुग्धताशङ्काभ्यामैश्वर्य्यसेविनां वितर्कविस्मयरसोदयः माधुर्य्यसेविनान्तु तत्प्रबोधनादिरसः लोलता-

जगदावेशरूपो विश्वविभ्रमः, "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः। ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्" इत्यादौ वैषम्यं, "अहं भक्तपराधीनः" इत्यादौ परापेक्षा चावगम्यते। रूक्षरसताप्रेमसंबन्धादृते रागः उल्वणो दुःखहेतुः कामः तावेतौ मास्ताम्। ततश्च मोहादीनां प्रमाणासिद्धत्वान्निर्दोषतनुत्वं कथमिति चेन्न। भक्तानन्दवैचित्र्यपोषकलीलाविलासभक्तसंरक्षणतद्वात्सल्यादिसिद्धये प्राकृतगन्धास्पृष्टाः स्वरूपधर्मा एवैते उदयन्ते, तान् विना लीलाद्यसिद्धेः। तदसिद्धौ च पूर्णत्वानुपपत्तिः। इतरेषु च सर्वेषु गुणेषु स्वभावात्तद्भक्त्यनुपपत्तिश्च। ततश्च श्रद्धाभक्तिध्यानयोगादौ तात्यादौ श्रुतिव्याकोपापत्तिरिति। तेषां गुणत्वादेव निर्दोषपूर्णगुणेत्यादिस्मृतिः सङ्गच्छते॥ ८॥

---

मदाभ्यां सवयसां नियुद्धादिक्रीडा सुभ्रुवां तु स्मराहववृद्धिः। तन्द्राखेदश्रमा भृत्यानां सेवानन्दविवर्द्धनास्तदिच्छाविशेषाः। मात्सर्य्यक्रोधहिंसाभिरसतां विनाशात्ताः सद्रक्षा एव। भ्रमलोलताभ्यां पितृवर्गकौतुकाभिवृद्धिः। असत्येन क्वचित् सवयसां सुभ्रुवां च कोपोदयेन तत्तद्रसाभिवृद्धिः। विश्वविभ्रमेण प्रकृतिलीनजीवमात्रानुग्रहः। विषमत्वपरापेक्षाकाङ्क्षाभिः सर्वभक्तानुग्रह इति भाव्यम्। इतरेषु सार्वज्ञ्यादिषु। गुणेषु तेषां संमुग्धत्वादीनाम्॥ ८॥

त एते मौग्ध्यादयः स्वरूपशक्तिसारभूतलीलानन्दात्मका एव स्वरूपानतिरेकिनखरकुन्तलादिवत्तस्मिन्मन्तव्याः। "क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसम्भवाः। क्व चाखण्डितविज्ञानज्ञानैश्वर्यास्त्वखण्डित" इत्यत्र येऽज्ञसम्भवास्ते क्वेत्युक्तेर्विज्ञसम्भवास्ते सन्तीति मतत्वात्। "तत्स्मारितानन्तहृताखिलेन्द्रियः" इत्यादौ विध्वस्ततमसां श्रीशुकादीनां च भगवत्प्रेममोहो दृष्टः॥ ९॥

"गोप्याददे त्वयि कृतागसि दाम यावद्या ते दशाश्रुकलिलाञ्जनसम्भ्रमाक्षम्। वक्त्रं निनीय भयभावनया स्थितस्य सा मां विमोहयति भीरपि यद्बिभेति," "मन्त्रेषु मां वा उपहूय यत्त्वमकुण्ठिताखण्डसदात्मबोधः। पप्रच्छ प्रभो मुग्ध इवाप्रमत्तस्तन्मे मनो मोहयतीव

---

दार्ढ्यायोक्तमर्थं विशदयति—त एत इति। क्वेति। श्रीदशमे शुकवाक्यम्। विज्ञेष्वपि मोहः क्व दृष्ट इति पृच्छायां तेषु तं दर्शयति—तदिति। श्रीदशमे सूतोक्तिः। तेन परीक्षिता स्मारितो योऽनन्तः श्रीकृष्णस्तेन हृतान्यखिलानीन्द्रियाणि यस्य स श्रीशुकस्तत्प्रेमसंमुग्ध इत्यर्थः॥ ९॥

'गोप्याददे' इति प्रथमे कुन्तीवाक्यम्। गोपी व्रजेश्वरी तन्माता वक्त्रं निनीय अधः कृत्वा मामियं ताडयेदिति भयभावनया स्थितस्य वेत्यन्यत् प्रकटार्थम्। मन्त्रेष्वित्युद्धवोक्तिस्तृतीये। मामुपहूयाकार्य्य। इहेवशब्दौ वाक्यालङ्कारार्थौ। किमिव निरागसि

द्देवः" इत्यादिषु तत्त्वविदामपि श्रीकुन्त्युद्धवादीनां मोहदर्शनान्नानुकृतिरूपास्ते श्रीशुकादिभिराविश्योक्तत्वाच्च। लोकविडम्बनादिशब्दास्त्वत्र दिव्यलीलया लोकाचारातिक्रमात् सङ्गच्छन्ते ॥१०॥

तदेवं मौग्ध्यसार्वज्ञ्ययोर्गुणयोः सहाविर्भावात् स्वसेवकार्तिस्तुतिपरिचर्य्याद्यवधानमपि सिद्धम्। एवं चोक्तमनुभवितृभिः "सर्वज्ञत्वे च मौग्ध्ये च सार्वभौममिदं महः। निर्विशन्नयनं हन्त निर्वाणपदमश्नुते" इति विरुद्धानां गुणानां सहावस्थितिः स्मर्य्यते। "ऐश्वर्य्ययोगाद्

---

मयि कुप्यसीत्यादिवत्। न च मुग्ध इव तु मुग्धः मोहयतीव न तु मोहयतीति व्याख्येयम्। तथा सति विरोधाभावात्। "कर्माण्यनीहस्य भवो भवस्य ते" इत्यादिषु विरुद्धेषु तद्वाक्योपादानवैयर्थ्याच्च कुन्तीवाक्ये इवशब्दाभावाच्च। ते मोहादयः षोडश। लोकाचारेति। लोकचरितन्यक्करादित्यर्थः॥१०॥

ननु हरेर्मौग्ध्येन तत्तद्रससिद्धिः स्यान्न किन्तु दीनाभ्यर्थनाऽनङ्गीकारेण प्रतीतेन विक्षतिरिति चेत्तत्राह—तदेवमिति। मौग्ध्यकाल एव सार्वज्ञ्यमस्तीति न क्षतिलेश इति भावः। अत उक्तं तदभिज्ञोऽपीति। विज्ञानुभवमत्र प्रमाणयति—एवञ्चोक्तमिति। अनुभवितृभिस्तस्य मौग्ध्यसार्वज्ञ्ये विजानद्भिर्लीलाशुकैः। सर्वज्ञत्वे चेति। सर्वासु भूमिषु विदितं सार्वभौमं तदुभयधर्मशालित्वेन सर्वत्र ख्यातमित्यर्थः। महः स्वप्रकाशरूपं कृष्णा-

भगवान् विरुद्धार्थो ऽभिधीयते । तथापि दोषाः परमे नैवाहार्य्याः कथञ्चन । गुणा विरुद्धा अप्येते समाहार्य्याः समन्ततः" इति । तदिदमभिहितं भगवता सूत्रकारेण "सर्वधर्मोपपत्तेश्च" इति । परमेश्वरः खलु शब्दैकनिर्णेययाथात्म्यो भवति न तु तर्कैस्तत्र प्रतिविधानं युज्यते इति चोक्तं "श्रुतेस्तु शब्दमूलत्वात्"इति ॥११॥

अन्ये त्वेवमाहुः—मौग्ध्यादयः प्रपञ्चधर्मा भगवताऽनुक्रियन्ते स्वजनानन्दाय । "प्रपञ्चं निष्प्रपञ्चोऽपि विडम्बयसि भूतले । प्रपन्नजनतानन्दसन्दोहं प्रभो"

---

ख्यं वस्तु । निर्वाणपदं मोक्षस्थानं गोकुलाख्यमश्नुते । स्वभोग्यत्वेनाऽनुभवता तत् स्वामि तादित्यर्थः । स्वरूपे शावल्यापत्तिस्तु पूर्वोक्तैर्निरस्या । आर्षं प्रमाणमाह—ऐश्वर्य्येति कौर्मे । अचिन्त्यस्वशक्तित इत्यर्थः । एवं श्रीव्यासनिर्णयमाह—सर्वेति । सर्वेषां विभुत्वमध्यमत्वादीनां मिथो विरुद्धानां गुणानां ब्रह्मण्युपपत्तेः । सिद्धेरविषमेऽपि तस्मिन् भक्तपक्षपातलक्षणं वैषम्यं मन्तव्यमिति प्राकरणिकोऽर्थः । न त्वेवं स्याद्वादापत्तिः । मैवं, तद्वादे सर्वेऽर्थाः कथञ्चित्त्वेनाऽनिश्चितरूपा, इह तु निश्चितरूपा इत्यातिविशेषसत्त्वात् ॥ ११ ॥

सङ्गत्यन्तरमाह—अन्ये त्विति । प्रपञ्चमिति । ब्रह्मवाक्यं श्रीदशमे । विडम्बयस्यनुकरोषि । प्रपन्नेति । अस्या असङ्कोचेन मत्से-

इत्यादिस्मृतेः । तथाऽपि तत्त्वविदा स्वस्य च तैरसोदयः स्यात् । लवणाकरनिपातन्यायात्तत्कृतत्वेन तेष्वाचिन्त्यत्वप्राप्तेः । श्रीबलप्रद्युम्नादिरूपेण शिष्यत्वभृत्यत्वपुत्रत्वाद्यनुकारो हि दृष्टः । देवर्षिभक्तयाद्यनुकारश्चेति ॥१२॥

तदेवमैश्वर्यमाधुर्यविषयत्वेन भगवतो ज्ञानं द्विविधं दर्शितम् । तेन तद्द्वारिकाया भक्तेश्च द्वैविध्येन भाव्यम् । तत्राद्या विधिभक्तिः । तया सिद्धाः सन्निष्ठा दृप्ताश्चाऽर्चिरादिवर्त्मना परं पदं लभन्ते । 'तेऽर्चिषम्' इत्यादिश्रुतेः । ये त्वार्त्तास्तदतिकृपार्द्रास्ते खलु भगवतैव तार्क्ष्यवाहनेन तद्विशन्तीति मन्तव्यं वाराहचरमात् । यथाह— भूदेवीं प्रति भगवान् वराहदेवः— "सोऽहमाश्रिततन्त्रात्मा स्मरामि च तदाश्रयम् । ज्ञानवैराग्यभक्त्यादिक्रियारूपप्रकाशनात् ॥ नयामि परमं

---

वने सुखवृद्धिः स्यादिति भावेनेति भावः । तेष्विति । स्वरूपनिष्ठधर्मवत्तेऽप्याचिन्त्याः स्युरिति भावः । श्रीति । श्रीश्च बलश्च प्रद्युम्नश्च तदादिरूपत्वेनेत्यर्थः । शिष्यत्वेत्यादौ क्रमो बोध्यः ॥ १२ ॥

प्रकरणार्थं योजयति—तदेवमिति । एतानिति । हरिं विना

स्थानमर्चिरादिगतिं विना ॥ गरुडस्कन्धमारोप्य यथेष्ट-मनिवारितः" ॥ इति ।

एतानुद्दिश्याह पार्थसारथिः—"ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ तेषामहं समुद्धर्ता मृत्युसंसारसा-गरात् । भवामि न चिरात्पार्थ मय्यावेशितचेतसाम्" ॥ १३ ॥

अन्तिमा रुचिभक्तिः । तया सिद्धास्तु स्वयं भगव-तैव तद्दिशन्तीति तच्चरमादिलब्धकैमुत्यादभ्युपेयम् । "नाऽयं सुखापः" इत्यादेश्च । एते तु तस्याऽतिप्रेष्ठाः । त-द्भावेषु तद्रुचिनिर्भरात् । यदाह गोवर्धनोद्धरणविस्मि-तैर्गोपैर्देवादिभावेनाऽऽशङ्कितो भगवान् श्रीविष्णुपुराणे— "मत्सम्बन्धेन वो गोपा यदि लज्जा न जायते । श्लाघ्यो वाऽहं ततः किं वो विचारेण प्रयोजनम ॥ यदि वोऽस्ति

---

क्षणमात्रं स्थातुमशक्तानार्त्तानित्यर्थः । ये त्विति श्रीगीतासु । मयि मद्धर्मित्यर्थः । उपासते कीर्तनादिभिरनुकूलयन्ति न चि-रात्त्वरयैव समुद्धर्ताऽहं भवामि ॥ १३ ॥

अन्तिमेति । एते रुचिभक्ताः । आशङ्कितोऽवितर्कितः । शङ्का चेयं हरेरिव गोपानामप्यात्मधर्मत्वात्प्राज्ञत्वं प्रसञ्जयति । वक्ष्य-

मयि प्रीतिः श्लाघ्योऽहं भवतां यदि। तदात्मबन्धुसदृशी बुद्धिर्वः क्रियता मयि॥ नाऽहं देवो न गन्धर्वो न यक्षो न च राक्षसः। अहं वो बान्धवो जातो नाऽतश्चिन्त्यमतोऽन्यथा''॥ इति। न चाऽत्र हृत्कम्पहेतोः सम्भ्रमस्योदयान्माधुर्यभावक्षतिः "देवो वा दानवो वा त्वं यक्षो गन्धर्व एव वा। किं वाऽस्माकं विचारेण बान्धवोऽसि नमोऽस्तु ते॥" इति बन्धुभावस्यैव तैः स्थापनात्। तस्मात्तद्भावं तन्मुखाच्छ्रोतुं तेषां तथा शङ्कोत्थापनमिति ज्ञायते॥ १४॥

---

ति चैवम्। तस्मात्तद्भावमित्यादि। मदिति श्रीकृष्णवाक्यम्। हे गोपाः। प्रीतिः पुत्रत्वादिप्रकारिका। आत्मबन्धुसदृशीति। स्वपुत्रादिषु यथा बुद्धिस्तथा मयि क्रियताम्। बान्धवो ज्ञातिः। 'सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः' इत्यमरः। श्रीहरिवंशेऽप्येवमस्ति। 'देवो वा दानवो वा त्वं यक्षो गन्धर्व एव च। अस्माकं बान्धवो जातो योऽसि सोऽसि नमोऽस्तु ते॥' इति गोपानां वाक्यम्। 'मन्यन्ते मां यथा सर्वे भवन्तो भीमविक्रमाः। तथाऽहं नाऽवमन्तव्यः सजातीयोऽस्मि बान्धवः।' इति कृष्णस्य च। तस्मादिति। तन्मुखात् कृष्णास्यात्। अत्र स्वयं तद्बन्धुभावाऽभ्यर्थनात्तद्घटितेषु नन्दात्मजादिनामसु तदभिरुचिस्तानि कीर्तयत्सु तदातिप्रसादश्च गम्यते॥ १४॥

ननु कृष्णस्य भगवतो यशोदौरसपुत्रत्वे तस्मिन् वल्लवानां सगोत्रत्वलक्षणो बन्धुभावः स्यात्। न चाऽसौ तदौरसस्तथानुक्तेः, भावबन्धुस्तु भवेत् "ये यथा माम्" इत्यादितद्वाक्यात्। "नन्दात्मजो गोपिकासुतः" इत्यादिवाक्यं तूपगूह्यात्मजामित्यादिवदौपचारिकात्मजत्वपरं भावीति चेत्। मैवमेतत्। "निशीथे तमउद्भूते जायमाने जनार्दने। देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः॥ आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः" इत्यत्र "यशोदा नन्दपत्नी च जातं परमबुध्यत। न तल्लिङ्गं परिश्रान्ता निद्रयाऽपगतस्मृतिः" इत्यत्र च श्रीशुकेनैव तदौरसत्वस्योक्तेः यशोदाऽपि देवकीत्युच्यते। "द्वे नाम्नी नन्दभार्याया यशोदा देवकीति च" इत्यादि-

---

व्रजौकसां बन्धुभावभाविता कृष्णे भक्तिर्या रागात्मिकेत्यभिधीयते। यत्र तस्य रुचिर्निर्भर उक्तः। तत्र शङ्कते—नन्विति। असौ कृष्णः। तर्हि नन्दात्मजादिपदानि कथमर्थवन्ति स्युस्तत्राह—उपगूह्येति। यशोदात्मजायां देव्यां यथा देवक्यात्मजत्वं औपचारिकमुक्तं तथा भविष्यति। तस्माज्जन्मप्रकरणे यशोदौरसत्वं नोपलभ्यते इति चेन्नैवम्। तत्प्रकरणेऽपि तत्त्वं पठितमिति हेतुभावेनाह—निशीथेत्यादि। तम उद्भूतेऽन्धकारव्याप्ते निशीथे जनार्दने लीलापुरुषोत्तमे देवक्यां यशोदायां जा-

पुराणवचनात्। देवरूपिण्यामित्युक्तेस्तद्गर्भसम्बन्धोऽपि न दोषावहः। वसुदेवपत्नीव नन्दपत्नी च परं परेशमेवं स्वगर्भाज्जातमबुध्यत। तस्य वसुदेवागमादेर्लिङ्गं चिन्हं नाऽबुध्यत। यतः परीत्यादि। "नन्दगोपगृहे जातो यशोदागर्भसम्भवः" इत्यादि पुराणे स्फुटमुक्तेश्च। इत्थञ्च नन्दात्मजगोपिकासुतादिशब्दैर्मुख्यार्थैर्भाव्यम्। ननु स्फुटार्थप्रत्ययो विरुद्धः स्यात्। मैवम्। यशोदासुतेन सह देवकीसुतस्यैक्यात्तदेकस्य तस्य मथुरादिषु गमनादन्तरान्तरा व्रजे कुरुक्षेत्रे चागतेः स्फुटार्थस्याऽप्यभङ्गात्। तथा चोभ-

---

यमाने सति देवक्यां देवकसुतायां विष्णुराविरासीदिति योज्यम्। तद्गर्भेति। न हि सुराभिणि रत्नमन्दिरे स्थितो नृपतिरपुरुषार्थी स्यादिति भावः। इत्थञ्चेत्यादि। उपगूह्यात्मजामिति मुनिनानूक्तम्। स्वपुत्रं गोपितुं सुतैव मेऽभून्न तु सुत इति देवक्या उक्तम्। उभयथेति। सगोत्रत्वेन भावेन च स कृष्णस्तद्बन्धुः। प्रपञ्चान्तर्गते धाम्नि यशोदादिभिः सार्धमेष मातृपुत्रादिभावो लोकवत् पूर्वोत्तरभावेनैव स्थितः। प्रपञ्चातीते तस्मिंस्तु 'ॐ कृष्णाय देवकीनन्दनाय' इत्यादिके 'गोपगोपीगवावीतम्' इत्यादिके च मन्त्रे यस्तद्भावः पठ्यते स त्वलौकिकश्चन्द्रकादिगतनानावर्णवदनादिवर्णवदनादितो युगपत् सिद्धः पद-

यथापि तद्बन्धुः सः ॥ १५ ॥

तदेवं द्विविधज्ञानभक्तिगोचरः कृष्णाभिधानः पुरुषोत्तमः कृत्स्नशक्तिव्यञ्जी स्वयं भगवानुच्यते । अकृत्स्नतद्व्यञ्जी ह्येकतद्व्यञ्जी च विलासोंऽशः कला चेति "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" "अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल" इत्यादिस्मृतेः। ननु यस्य पुंसो मत्स्यादयोंऽशकलाः स पुमानेव कृत्स्नशक्तिप्रकाशी कृष्ण इत्यर्थप्रत्ययान्नोक्तव्यवस्थेति चेत् । नैवम् । भिन्नोपक्रमार्थकात्तुशब्दात् ब्रह्मसंहितायां कृष्णरूपं प्रकृत्य त्रयाणां पुरुषाणां रामादीनां च

---

प्रकोरकलघुबृहत्पवचयवच्च बोध्यः ॥ १५ ॥

अथ यशोदौरस्यस्य कृष्णस्य सर्वतदाविर्भावमूलत्वरूपं स्वयं भगवत्त्वं वक्तुं प्रकरणमारभते—तदेवमिति । एवमुक्तविधया । अकृत्स्नतदिति । तच्छब्देन शक्तिः परामृश्यते । एते चेति प्रथमे सूतवाक्यम् । पुंसो गर्भोदकशायिनः प्रद्युम्नस्य सहस्रशीर्ष्णः । कृष्णस्त्विति । तुशब्दः पृथगुपक्रमार्थः । 'तु स्याद् भेदेऽवधारणे' इत्यमरः । गर्भोदशयादाविर्भवत्सु मत्स्यादिषु मध्ये कृष्णः पठितस्तथाऽपि न स तदवतारः किन्तु तदादिसर्वमूलभूत इत्यर्थः । अष्टमस्त्विति नवमे । तयोर्देवकीवसुदेवयोः स्वयमेव हरिरासीत् । नन्विति । यस्य गर्भोदकशायस्य पुंसः । ईश्वर इति । कृष्ण इति विशेष्यम् । स कीदृशः । परम ईश्वरः

तदवतारत्वोक्तेश्च । तथा हि "ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः । अनादिरादिर्गोविन्दः सर्वकारणकारणम् । सहस्रपत्रं कमलं गोकुलाख्यं महत्पदम् । तत्कर्णिकारं तद्धाम तदनन्तांशसम्भवम्" इत्यादिकमुक्त्वा "यः कारणार्णवजले भजति स्म योगनिद्रामनन्तजगदण्डसरोमकूपः । आधारशक्तिमवलम्ब्य परां स्वमूर्तिं गोविन्दमादिपुरुषं तमहं भजामि" "यस्यैकनिश्वसितकाल-

---

स्वयं भगवान् अतोऽनादिः स्वेतरेषां विरिञ्चादीनां त्वादिः । नन्वन्येषां प्रधानादीनाञ्च कारणत्वं पठ्यते तत्राह—सर्वेति । सहस्रेति । अनन्तस्य श्रीबलदेवस्यांशेन सम्भवः सर्वदाविर्भावो यस्य तत् । तन्त्रेण अनन्तः शेषोंऽशो यस्य सोऽनन्तांशो बलभद्रस्तस्य सम्भवो निवासो यत्र तत् ।

कृष्णस्यैव कारणोदशायित्वमाह—य इति । यः कृष्णः कारणार्णवजले आधारशक्तिमयीं परामुत्कृष्टां स्वमूर्तिं शेषाख्यामवलम्ब्य योगनिद्राम्भजति । य एवांशेन प्रकृत्यन्तर्यामी सहस्रशीर्षा सङ्कर्षण इत्यर्थः । कीदृशो यः । अनन्तजगदण्डैः सहिता रोमकूपा यस्य सः । सहशब्दस्य पूर्वनिपाताभाव आर्षः । तं भजामीत्यन्वयः । कीदृशमित्याह—गोविन्दं गवामिन्द्रमित्यर्थः । अथ गर्भोदशायितामाह—यस्येति । यस्यैकनिश्वसितं कालमालम्ब्य जगदण्डनाथा ब्रह्मविष्णुशिवा जीवन्ति तत्तदधिकारितया जगति प्रकटं तिष्ठन्ति स महाविष्णुर्यस्य कृष्णस्य क-

मथाऽवलम्ब्य जीवन्ति रोमविलजा जगदण्डनाथाः ।
विष्णुर्महान् स इह यस्य कलाविशेषो गोविन्दम्''इत्यादि ।
''दीपार्चिरेव हि दशान्तरमभ्युपेत्य दीपायते विवृतहेतुस-
मानधर्मा। यस्तादृगेव हि च विष्णुतयाऽवभाति गोवि-
न्दम्''इत्यादि च । ''रामादिमूर्तिषु कलानियमेन तिष्ठन्ना-
नावतारमकरोद् भुवनेषु किन्तु । कृष्णः स्वयं समभवत्प-
रमः पुमान् यो गोविन्दम्''इत्यादि च ॥ १६ ॥

---

लाविशेषो भवति । योंऽशेन सर्वब्रह्माण्डान्तर्यामी ब्रह्मणः पिता प्रद्युम्नो भवतीत्यर्थः । अथ क्षीरोदशायितामाह—दीपार्चिरिति । महादीपो यथा दशान्तरमन्यां वर्त्तिमुपेत्य दीपायतेऽतिनिर्मलसूक्ष्मदीपत्वेनाऽऽविर्भवति । कीदृशः विवृतः प्रकटितो हेतुसमानो महादीपवत् प्रकाशलक्षणो धर्मो येन सः यो गोविन्दस्तादृगेव विष्णुतया ऽवभाति । योंऽशेन क्षीराब्धिपतिरनिरुद्धो जगत्पालक इत्यर्थः । अथ कृष्णस्यैव रघुनाथादिरूपतामाह—रामादीति । यः कृष्णाख्यः परमः पुमान् कलानियमेन तत्र नियतानामेव शक्तीनां प्रकटनेन रामादिमूर्त्तिषु तिष्ठंस्तत्तन्मूर्तीः प्रकटयन् भुवनेषु नानावतारमकरोत् । य एव च स्वयं सर्वशक्तिमान् सन् समभवदवातरत्तमित्यादि प्राग्वत् । एवमुक्तं देवैः 'मत्स्याश्व कच्छपनृसिंहवराहहंसराजन्यविप्रविबुधेषु कृतावतारः । त्वम्पासि नस्त्रिभुवनं च तथाऽधुनेश भारं भुवो हर यदूत्तम वन्दनन्ते' ॥ १६ ॥

नन्वस्तु कृष्णः पुरुषाद्यवताराणामवतारी। तदवतारी तु परमव्योमाधिपतिरस्तु तस्य कुत्राप्यवतारत्वानुक्तेश्चेति चेत्। नैवमेतत्। तस्यामेव "गोलोकनाम्नि निजधाम्नि तले च तस्य देवीमहेशहरिधामसु तेषु तेषु। ते ते प्रभावनिचया विहिताश्च येन गोविन्दम्"इति तस्यापि कृष्णाविर्भावत्वाभिधानात्। "सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत्फलम्। एकावृत्त्या तु कृष्णस्य नामैकं तत् प्रयच्छति"इति ब्रह्माण्डे सर्वोर्ध्वनाममाहात्म्याच्च

---

उक्तमर्थं स्वीकृत्याऽऽशङ्कते—नन्विति। तस्य परमव्योमाधिपतेः। कुत्रापीति। वेदे पुराणे वेत्यर्थः। तस्यामिति। ब्रह्मसंहितायामेव। प्रपञ्चगतं महिमानमुक्त्वाऽथ निजधामगतं तमाह—गोलोकेति। देवीमहेशेत्यादिगणनं व्युत्क्रमेण बोध्यम्। देव्यादीनां यथोत्तरं ऊर्ध्वोर्ध्वत्वेन प्रभाववत्त्वात्। अधोधः स्थितेषु हरिमहेशदेवीधामस्वित्यर्थः। तथा च कृष्णो नारायणः सन् परमे व्योम्नि सर्वदा दीव्यतीति स तस्याविर्भाव इति स्फुटमेवोक्तम्। सहस्रेति। वैशम्पायनोक्तानां सहस्रनाम्नां त्रिरावृत्त्या यत् फलं तत् कृष्णस्यैकं नाम। ब्रह्माण्डपुराणान्तर्वर्त्यष्टोत्तरशतनामगतं कृष्णावतारसम्बन्ध्येकमेव नामैकावृत्त्या प्रयच्छतीत्यर्थः। तेषु सर्वेष्वाविर्भावत्वविशिष्टस्य कृष्णस्य नामान्युक्तानीह तु कृष्णत्वेनैव विशिष्टस्येति विशेषः। तद्गतादेतद्गतं तदेव नाम बहुफलं भगवद्वाक्यान्तराद् भगवद्गीतावदित्याहुः। अधिकगुणत्वादेवेत्यर्थः। यदिति। कालीयस्त्रीवाक्यम्। यस्य त्वदङ्घ्रिरेणुस्पर्शस्य वा-

कृष्णस्यैव सर्वावतारित्वम् । अत एव "यद्वाञ्छया श्रीर्ललनाऽचरत्तपो विहाय कामान् सुचिरं धृतव्रता" इति तन्महिष्याः श्रीदेव्या नित्यानुभूतस्वपतिकाया अपि कृष्णरूपस्पृहोक्ता सङ्गच्छते ॥ १७ ॥

इदन्तु बोध्यम् । गोलोके निवसन् कृष्णस्तदाविर्भावे परमव्योम्नि तदधिपतिः श्रीनिवासः पुरुषाभिधानो रामादिश्चाऽनादित एवाविर्भूतो दीव्यति । पुरुषादिः प्रपञ्चसम्बन्धेन कदा कदाचिद्भवेत्तदधिपतिस्तु तत्सम्बन्धेन न कदाचिदपीति तस्य तस्य चावतारत्वानवतारत्वव्यपदेशः । तत्सम्बन्धादेव कृष्णस्यापि तदुक्तिरिति ।

---

ञ्छया श्रीः परव्योमाधीश्वरी । एवमेव पुराणे कथास्तीति सङ्क्षिप्तभागवतामृते द्रष्टव्यम् । अत्र परव्योमाधीशावतारित्वाभिधानात् । कृष्णवासुदेवव्यूहावतारत्वं स्वयमेव निरस्तमतस्तत्र परीक्षितमिति वेदितव्यम् ॥ १७ ॥

उक्तेऽर्थे कञ्चिद्विशेषमाह—इदन्तु बोध्यमित्यादिना । पुरुषादिरित्यत्रादिपदाद्रामादिर्ग्राह्यः । तस्य तस्य चेति । तस्य पुरुषादेः तस्य च परमव्योमाधिपतेरित्यर्थः । तत्सम्बन्धात् प्रपञ्चे समागमात् स्वयं रूपस्यापि कृष्णस्य तदुक्तिरवतारत्वभणितिरित्यर्थः। अप्राकृताल्लोकात् प्राकृते लोकेऽवतरन् ह्यवतारः । तदेवमिति । कृत्स्नशक्तिप्रकाशः परव्योमाधिपेऽप्यस्तीत्यत आह—अनन्येति । एतत् सर्वमूल इति । तथातथाभावं सर्वदुःखहरत्वादीति। धर्म तद-

पुरुषाद्यवताराणां परमव्योमनिलयत्वन्तु "वैकुण्ठभुवने नित्ये निवसन्ति महोज्ज्वलाः। अवताराः सदा तत्र मत्स्यकूर्मादयोऽखिलाः" इति पाद्मात्। तदेवं कृत्स्नशक्तिप्रकाशादनन्यापेक्षिरूपत्वाच्च कृष्णस्य स्वयं भगवत्त्वमिति श्रीभागवतब्रह्मसंहितादिशास्त्रदृष्ट्या निर्णीतम्। एतत् सर्वमूले श्रीगोपालोपनिषदि चैवमेव परिदृष्टम्। तत्र हि 'कः परमो देवः' इत्यादिना सर्वदुःखहरं सर्वहेतुः परदैवतं किमिति मुनिभिः पृष्टो ब्रह्मा कृष्णस्यैव तथातथाभावमभिधाय परमव्योमाधीशकारणोदशयादेश्च तदभिधानात कथं कृष्णस्यैव स इत्याशङ्कायाम् 'एकोऽपि सन् बहुधा योऽवभाति' इति तस्यैव तदधीशादिभावमभ्यधात्। श्रीगीतासु च "मत्तः परतरं नान्यत्" इति ॥१८॥

यत्तु "पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते" इति श्रुत्या "सर्वे नित्याः

---

भिधानात्। शास्त्रे सर्वदुःखहरत्वादिधर्मकीर्तनात्। स तथातथाभावः। तदधीशादिभावं परव्योमाधिपत्वादिधर्मम्। आदिना पुरुषत्वादिर्ग्राह्यः॥ १८॥

संशयान्तरं निरस्य तूक्तमर्थं दृष्टान्तेन ग्राहयति—यत्त्वित्यादिना। पूर्णमिति बृहदारण्यके। अदो मूलरूपं इदं प्रकाशरूपं उभयं पूर्णम्। पूर्णान्मूलरूपात् पूर्णं प्रकाशरूपमुदच्यते प्रादु-

शाश्वताश्च देहास्तस्य परात्मनः। हानोपादानरहिता नै-व प्रकृतिजाः क्वचिद् ॥ परमानन्दसन्दोहा ज्ञानमात्राश्च सर्वतः। सर्वे सर्वगुणैः पूर्णाः सर्वदोषविवर्जिताः॥" इति महावाराहोक्त्या च सर्वेषां स्वरूपाणां पूर्णत्वप्रत्ययात् कतमदनन्यापेक्षि स्वयं रूपमिति न शक्यं निश्चेतुमिति कश्चिदाह। तदपेशलम्, स्वरूपभेदे सत्यस्याः शङ्कायाः प्रवृत्तेः। न चात्र तद्भेदः। एक एव कृष्णः परेशो वैदूर्यवदात्मनि नानारूपाभिव्यञ्जी। "एको वशी सर्वगःकृष्ण ईड्यः" "एकोऽपि सन् बहुधा योऽवभाति" इत्यादिश्रुतेः। यथैकस्यैव षट्शास्त्रज्ञस्य विदुषः क्वचित् कृत्स्नशास्त्रोद्ग्राहिणः सर्वज्ञत्वं प्रतीयते क्वचिदकृत्स्नतदुद्ग्राहिणो ह्येकतदुद्ग्राहिणश्च सर्वज्ञकल्पत्वं ज्ञत्वं चेत्येवमेकस्य कृष्णस्य बह्वल्पशक्तिव्यक्तिसव्यपेक्षाण्यंशित्वांशत्वादीनि। एवमेवोक्तं वृद्धैः। "एकत्वं च पृथक्त्वं च तथांशत्वमुतांशिता। तस्मिन्नेकत्र नायुक्तमचिन्त्यानन्तशक्तितः॥ शक्तेर्व्यक्तिस्तथाऽव्यक्तिस्तारतम्यस्य कारणम्" इति। स्वेच्छया नानाशक्तिप्रकाशित्वमांशित्वम्। तस्यैव सर्वदाऽ-

---

भवति। पूर्णस्य तस्य पूर्णं रूपमादाय स्वस्मिन्नन्तर्भाव्य पूर्णं मूलरूपमवशिष्यते तिष्ठति। सर्वे इति नित्याः सनातनाः शाश्व-

स्वशक्तिप्रकाशित्वमंशत्वम् ॥ १९ ॥

एतेन परमव्योमाधिपादिरूपोऽपि सन् कृष्णः सर्वान् गुणान् प्रकाशयेत् तत्रापि गुणपूर्णत्वादिति निरस्तम्। यत्त्वथर्वशिरसि पुरुषावतारात् "अथ पुरुषो ह वै नारायणोऽकामयत" इत्यादिना विश्वसृष्टिमुक्त्वा ब्रह्मणो देवकीपुत्र इति तस्यैव कृष्णत्वमुक्तमिति कश्चिद् बभ्राम, तच्च प्रत्युक्तम्। तत् केशवत्वन्तु सुदूरापास्तम् उक्तनिर्णया-

---

ता जगति पुनः पुनराविर्भाविनः स्वनिर्णीते स्वपूर्वेषां संमतिमाह—एवमेवेति । वृद्धैः श्रीरूपचरणैः । तस्मिन्निति । एकस्मिन्नेव तस्मिन् कृष्णे । स्फुटमन्यत् ॥ १९ ॥

उक्तेनैवार्थेन सन्देहान्तराणाञ्च छेदोऽभूदित्याह—एतेनेति । यत्त्वथर्वेति । पुरुषावताराद् गर्भोदकशयात् । तथा च स पुरुषः कृष्ण एवोत्तरत्र व्यक्तेः । ततो ब्रह्मादिजनिस्तु तदभेदादेव मन्तव्या, अन्यथा स्मृतार्थविरोधापत्तिः । क्षीराब्धिपतेः कृष्णत्वोक्तिस्तु रभसादेवेत्याह—तत् केशवत्वं त्विति । देवैः क्षीराब्धिपतिः शुक्लनीलौ केशावुद्बर्हे तावेव बलकेशवौ भूत्वा भूभारमपजहतुरिति भारतवाक्यार्थं यत् केचिदूचुस्तत्प्रमादादेवोक्तानिर्णयात् । किन्त्वेवं तदर्थः । केशशब्दस्तत्रांशवो 'ये प्रकाशन्ते ते केशसंज्ञिताः । सर्वज्ञाः केशवं तस्मान्मामाहुर्मुनिसत्तमाः' इति नारायणीये कृष्णवाक्यात् । नानावर्णानां तदंशूनां तत्र नारदेन दृष्टत्वाच्च । अतस्तत्र सर्वत्र केशशब्द एवं प्रयुक्तः । तथा च स्वयं भगवति कृष्णे बलदेवे च तद्व्यूहे स तदा स्वांशुभ्यामनुजगा-

त् "नारायणाङ्गं नरभूजलायनात्" इति स्मृतेश्च। किन्तु कृष्णस्यैव पुरुषावतारत्वं तत्रोक्तमिति सुष्ठु। अन्यथोक्ता-

---

मेति। स्वयं भगवत्यवतरति सर्वे तद्विलासव्यूहस्वांशास्तमशंरैनुगच्छन्तीत्युक्तं तृतीये। 'स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्थ्यमानेष्वनुकम्पितात्मा। परावरेशो महदंशयुक्तो ह्यजोपि जातो भगवान् यथाग्निः' इति। न च देवैरभ्यर्थितः पुरुषः 'अहमेव कृष्णो भविष्यामि' इत्युक्तवानपि तु 'ईश्वरेश्वरः परः पुरुषो जनिष्यते' इत्यवोचदिति श्रीदशमप्रस्तावाच्च। 'नारायणोऽङ्गम्' इति ब्रह्मवाक्यं श्रीदशमे। हे कृष्ण नरभूजलायनात् कारणार्णवशयात् प्रकटो यो नारायणोऽस्मत्पिता गर्भोदकशयः स तवाङ्गमंश इति तदर्थः। कश्चित्त्वत्रैवं समाधत्ते। प्रतीतो वार्थोऽस्तु। तत्र फेनमुष्टावशनिरिव तत्तत्कुन्तले स्वयं हरिः प्रविष्टः। अन्यथा कृष्णस्तु भगवान् स्वयमिति व्याकुप्येदिति। अन्यथेति। निर्णीतार्थास्वीकारे शास्त्रोक्तानामर्थानां वैपरीत्यं स्यात्। कृष्णाविर्भावे परव्योमनाथे कृत्स्नकृष्णगुणप्राकट्येऽङ्गीकृते तत्पत्न्याः श्रीदेव्याः कृष्णाङ्घ्रिरेणुस्पृहा भागवतोक्ता त्रिषु पुरुषेषु तत् प्राकट्येऽङ्गीकृते तेषां कृष्णांशता ब्रह्मसंहितोक्ता। श्री दाशरथौ तत्प्राकट्येऽङ्गीकृते दृष्टदाशरथीनां दण्डकारण्यनिवासिनां महर्षीणां कृष्णस्पृहा पाद्मोक्ता दाशरथ्यादिषु कलानियमेन स्थितिश्च ब्रह्मसंहितोक्ता व्याकुप्येत्। इत्थमेव वासुदेवे सङ्कर्षणस्य स्वाधिपत्वधीर्बहुमानश्च श्रीकृष्णे बलदेवस्य भर्तृत्वधीः प्रद्युम्नादीनां पितृत्वादिधीरत्यादरश्च भागवतोक्ताः श्रीरामे लक्ष्मणादीनां स्वामित्वधी रामायणोक्ता श्वेतद्वीपपतौ नरनारायणयोः स्वप्रकृतित्वधीर्भे-

वैपरीत्यापत्तेः ॥ २० ॥

यच्च तस्मिन्नेव "यो वै श्रीरामचन्द्रः स भगवान् ये मत्स्यकूर्मादयोऽवतारास्तस्मै वै नमो नमः" इति सीतापतेर्मत्स्याद्यवतारित्वमुक्तम्। तत् किल युक्तमेव। तस्य परमव्योमाधिपतिरूपत्वात्। यच्च "त्रयाणामपि लोकानामादिकर्त्ता स्वयं प्रभुः" इति श्रीरामायणे "अधिकसाम्यविमुक्तधाम्नः" इति श्रीभागवते च तस्य स्वयंपदबोध्यत्वमुक्तं तदपि मत्स्याद्यंशित्वाभिप्रायेणैव नेयम्। कृष्णादविशेषे स्वीकृते तु "रामादिमूर्त्तिषु कलानियमेन

---

क्तिश्च नारायणीयोक्ता सङ्गच्छेरन्नन्यथा तस्मादंशिनांशो व्यङ्ग्यो न त्वंशेनांशीति स्थितम् ॥ २० ॥

ननु श्रीरामतापन्यां सीतापतेश्च मत्स्याद्यवतारित्वश्रवणात् श्रीरामायणादौ स्वयंपदवाच्यत्वस्मरणाच्च कृष्णस्यैव तत्तदित्याग्रहः कस्मादिति चेत्तत्राह—यच्चेति। तस्मिन्नथर्वशिरस्येव। तस्य परमव्योमेति। पाद्मे खलु परमव्योमाधिप एव सीतापतिरभूत्। शेषचक्रशङ्खास्तु लक्ष्मणभरतशत्रुघ्ना अभूवन्निति वर्णितम्। विष्णुधर्मोत्तरे तु वासुदेवादयश्चत्वारो व्यूहाः क्रमाद्रामाद्या बभूवुरिति स्मृतमिति सिद्धम्। संक्षिप्तभागवतामृते दृश्यते। तथा च श्रीरघुवर्य्यस्य मत्स्याद्यवतारित्वं साम्प्रतमेव। ननु कृष्णस्य रामस्य चावतारित्वप्रकीर्त्तनात्तस्मात्तस्य तिलमात्रोऽपि विशेषो मास्तु, तत्राह—कृष्णादविशेषे इति। वैलक्ष्यलेशे

तिष्ठन्" इत्युक्तिर्दृष्टरामाणामपि दण्डकारण्यनिवासिनां महर्षीणां कृष्णस्पृहोक्तिश्च व्याकुप्येत। "पूर्णमदः" इत्यादीनि वाक्यानि स्वरूपसत्सर्वगुणानि सर्वाणित्याहुः न त्वभिव्यक्तसर्वगुणानीति। तस्मात् सर्वदाऽभिव्यक्तसर्वशक्तित्वात् कृष्णस्यैव स्वयंरूपत्वं सिद्धम् ॥२१॥

श्रीकृष्णे हि राधाद्याः पूर्णाः शक्तयः सर्वातिशयिप्रेमपूर्णपार्षदत्वब्रह्मादितत्त्वज्ञविस्मापकस्थिरचरविमोहकवेणुनादमाधुर्यस्वपर्यन्तसर्वविस्मापकरूपमाधुर्यनिरतिशयकारुण्यादयो गुणाः श्रीशुकादिभि-

---

ऽप्यनङ्गीकृते इत्यर्थः। अल्पार्थेन भूदृष्टरामाणामपीति। 'पुरा महर्षयः सर्वे दण्डकारण्यवासिनः। दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम् ॥ ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले। हरिं सम्प्राप्य कामेन ततो मुक्ता भवार्णवात्'इति पाद्मे ॥ २१ ॥

परमव्योमाधिपादिष्वनभिव्यक्ताद् कृष्ण एव सर्वदाभिव्यक्तान् विशेषान् दर्शयति—श्रीकृष्णे हीति। ऊक्तं प्रमाणयति पुरुषबोधन्यामित्यादिना। पिप्पलादशाखायां स्थितेयम्। निर्गुणः प्रकृतिगुणैरस्पृष्टः। सगुणः स्वरूपानुबन्धिषाड्गुण्यः। निराकारः स्वरूपानुबन्धिमनुष्याकृतिकः। निरीहः प्राकृतचेष्टारहितः। सचेष्टः समुद्रतरङ्गन्यायेन स्वोल्लासात्मकनित्यचेष्टितः। द्वे पार्श्वे इति। श्रीराधाया वामपार्श्वे स्थितिर्बोध्या। 'वामाङ्गसहिता देवी राधा वृन्दावनेश्वरी'इति कृष्णोपनिषद्वाक्यात्। तेन तस्यास्तत्-

रेनुभूताः सर्वदाऽऽविर्भवन्ति न त्वन्यत्र । पुरुषबोधिन्यामथर्वोपनिषदि श्रूयते—"गोकुलाख्ये माथुरमण्डले वृन्दावनमध्ये सहस्रदलपद्ममध्ये कल्पतरोर्मूलेऽष्टदलकेशरे गोविन्दोऽपि श्यामः पीताम्बरो द्विभुजो मयूरपुच्छाशिरा वेणुवेत्रहस्तो निर्गुणः सगुणो निराकारः साकारो निरीहः सचेष्टो विराजते, द्वे पार्श्वे चन्द्रावली राधिका च" इति, "यस्या अंशे लक्ष्मीदुर्गादिका शक्तिः"इति, अग्रे च "तस्याद्या प्रकृती राधिका नित्यनिर्गुणसर्वालङ्कारशोभिता प्रसन्नाऽशेषलावण्यसुन्दरी" इत्यादि। ऋक् परिशिष्टे च—"राधया माधवो देवो माधवेनैव राधिका । विभ्राजन्ते जनेषु" इति ॥ २२ ॥

गौतमीये तन्त्रे चैव स्मर्य्यते । "सत्त्वं तत्त्वं परत्वञ्च तत्त्वत्रयमहं किल । त्रितत्त्वरूपिणी सापि राधि-

---

प्रेयसीष्वन्द्रमुख्यत्वम् । एतदेवाह—यस्या इति । यस्याः श्रीराधिकाया अंशो लक्ष्मीर्वैकुण्ठेश्वरी रमा दुर्गा मन्त्रराजाधिष्ठात्रीति सन्दर्भादवगन्तव्यम् । नित्यनिर्गुणा मायागन्धेनाप्यस्पृष्टा । स्वरूपानुबन्धिभिर्गुणैस्तु विशिष्टेत्याह—अशेषेति । राधयेति । विभ्राजत इति बहुत्वं छान्दसम् । जनेषु ब्रजौकस्सु ॥ २२ ॥

श्रुत्यर्थं स्मृत्योपबृंहयति—सत्त्वमिति । बृहद्गौतमीये वलदेवं प्रति कृष्णवाक्यम् । सत्त्वं कार्य्यत्वं तत्त्वं कारणत्वं ततोऽपि

का मम वल्लभा॥ प्रकृतेः पर एवाहं सापि मच्छक्तिरूपिणी" इति, "देवी कृष्णमयी प्रोक्ता राधिका परदेवता। सर्वलक्ष्मीमयी सर्वकान्तिः संमोहिनी परा" इति। इह कृष्णमयी परेत्यनेनेदमुक्तम्—"परास्य शक्तिर्विविधैव श्रूयते। स्वाभाविकी ज्ञानबलक्रिया च"

---

परत्वश्चेति यत्तत्त्वत्रयं तदहं सा राधिकापि तत्त्वत्रयरूपा। एतत् सार्धकान्तेऽन्यत्र सार्धकमस्ति। 'सात्त्विकं रूपमास्थाय पूर्णोऽहं ब्रह्मवित् परः। ब्रह्मणा प्रार्थितः सम्यक् सम्भवामि युगे युगे॥ तया सार्द्धं त्वया सार्द्धं नाशाय देवताद्रुहाम्'इति। यद् वस्त्वहं तदेव राधेति निष्कर्षः। कार्यकारणभेदस्तु व्याप्यस्य व्यापकानतिरेकस्मरणान्नेयः। देवीति। तत्रैव तन्मन्त्रकथने राधिका परेत्यन्वयः। देवी देवस्य कृष्णस्य पट्टमहिषी। भेदं प्राप्तं निवारयितुमाह—कृष्णमयी कृष्णानन्या। सत्त्वं तत्त्वमित्यादेः। एवमपि परदेवता कृष्णोपासिका सर्वलक्ष्मीमयी सर्वासां लक्ष्मीनामंशिनी। यस्या अंशे लक्ष्मीदुर्गादिका शक्तिः इत्युक्तेः। सर्वासां तासां कान्तिरच्र्यत्ववाञ्छा यस्यां सा कान्तिराभा वा तासु सर्वासु यस्याः सेत्येके। संमोहिनी कृष्णाऽनुरञ्जिका। परास्येति श्वेताश्वतराणामुपनिषदि। अस्य परेशस्य। विविधा त्र्यंशा। स्वाभाविकी स्वरूपानुबन्धिनी। ज्ञानेति। ज्ञानं संवित् बलं सन्धिनी क्रिया ह्लादरूपो धात्वर्थस्तद्भूता। यातीतेति। श्रीवैष्णवे प्रह्लादवाक्यम्। या वाचां मनसां चातीतगोचरा अतिक्रान्तो गोचरो विषयता यया सा। अविशेषणा ताभिस्तैश्च

इति श्रुत्या "याऽतीतगोचरा वाचां मनसां चाविशे-षणा। ज्ञानिज्ञानपरिच्छेद्या वन्दे तामीश्वरीं पराम्" इति स्मृत्या च या भगवदभिन्नाऽभिहिता या च ह्लादिनीत्या-दिना विशेषिता सा परैव राधिकेश्वरीति। तथा च ह्लादिनीसंवित्सारांशप्रेमात्मिका सेति कामाद्यधिकर-णभाष्ये स्फुटमेतत् ॥ २३ ॥

एवं सति यत्तु स्कान्दे काचिन्नर्तकी श्रीमूर्तेर्मा-धुरीं दृष्ट्वा तदग्रे प्रबोधनीजागरनृत्याद्राधाऽभूदित्यु-

---

गुणकर्मभ्यां विशेष्टुमशक्येत्यर्थः। यतो वाच इत्यनेन या निरूप्यते सैवेयं संविदिति भगवदभिन्नता दर्शिता। किं तर्हि निर्विशेषा संवित् सेत्यत्राह—ज्ञानीति। ज्ञानिनां तदुपासकानां ज्ञानेन परिच्छेद्या स्वानुबन्ध्यनन्तगुणत्वेन याथात्म्येन गम्ये-त्यर्थः। तां परां वन्दे। ईश्वरीमीश्वरस्य भूतां पट्टमहिषीमित्यर्थः। परास्य शक्तिरित्यादेः। तथा चेत्यादि प्रकटार्थम् ॥ २३ ॥

दुर्धियां शङ्कामपाकर्तुमाह—एवं सतीति। श्रीराधाया भगव-त्स्वरूपानुबन्धिपराशक्तिसारमहालक्ष्मीत्वे सिद्धे सतीत्यर्थः। ब्रह्मैवेति। ब्रह्मध्यायी जीवो ब्रह्मैव सन् ब्रह्मसदृशः सन् ब्रह्मा-प्येतीतिवदित्यर्थः। 'एवौपम्येऽवधारणे' इति विश्वः। मोक्षे जीवस्य ब्रह्मसादृश्यमुक्तं 'निरञ्जनः परमं साम्यमुपैति' इति श्रुत्या, 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च' इति स्मृत्या च। राधाध्यायिनी

क्तं तत्र किल "ब्रह्मैव सन् ब्रह्माप्येति" इत्यादिवत्तत्-साद्दश्यमसावगमदित्येव मन्तव्यम् ॥ २४ ॥

तदेवं महालक्ष्मीत्वादेव श्रीराधायाः पूर्णत्वं निर्बाधम् । श्रीकृष्णप्रेयस्यः खलु सर्वा लक्ष्म्य एव तन्मुख्यत्वात् सा तु महालक्ष्मीरिति सुश्लिष्टम् । चिन्तामणिप्रकरसद्मसु कल्पवृक्षलक्षावृतेषु सुरभीरभिपालयन्तम् । लक्ष्मीसहस्रशतसंभ्रमसेव्यमानं गोविन्दम्" इत्यादेः, "श्रियः कान्ताः कान्तः परमपुरुषः" इत्यादेश्च, "गोप्यो लब्ध्वाच्युतं कान्तं श्रिय एकान्तवल्लभम्" इत्यादेश्च । "यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा । सर्वगोपीषु सैवैका विष्णोरत्यन्तव-

---

सा नर्तकी राधासाद्दश्यमगमदित्येवार्थः । अन्यथोक्ताः श्रुतिस्मृतयो निर्विषयाः स्युरिति भावः । यत्तु कुशध्वजस्य ब्रह्मर्षेर्वाङ्मयी कन्या वेदवती परमसुन्दरी विष्णुपतिकामनया तपस्यन्ती रावणेन दुरात्मना धर्षिता दग्धदेहा तद्वधाय जानक्यभूदित्युत्तरकाण्डे श्रीरामं प्रत्यगस्त्येनोक्तं तत्राप्येवं ज्ञेयम् । जानक्यां प्रविश्य सा तद्वधे निमित्तं बभूवेति । लक्ष्मीत्वादनादिसिद्धा रामात्मा जानकी तस्या नैवं ताद्दशता सम्भवेत् ॥२४॥

तदेवमित्युक्तप्रकारेणेत्यर्थः । चिन्तामणीति । ब्रह्मसंहितायाम् । अभीति । वननयनचारणगोष्ठानयनप्रकारेण पाल-

ल्लभा'' इति पाद्मात् । ''त्रैलोक्ये पृथिवी धन्या तत्र वृन्दावनं पुरी । तत्रापि गोपिकाः पार्थ तत्र राधाभिधा मम'' इत्यादि पुराणाच्च । ''यस्या अंशे लक्ष्मीदुर्गादिका शक्तिः'' इति श्रुतिस्तु दर्शितैव ॥ २५ ॥

श्रीकृष्णपरिकराणामसमाभ्याधिकप्रेमत्वं तदर्थउज्ज्वलद्विषह्रदप्रवेशधावनादितः प्रतीयते यस्माद् भगवतोऽपि गाढवश्यतेति निवेदितं ब्रह्मणा—''एषां घोषनिवासिनामुत भवान् किं देव रातेति नश्चेतो विश्वफलात् फलं त्वदपरं कुत्राप्ययं मुह्यति । स द्वेषादिव पूतनापि

---

यन्तम् । कदाचिद्रहसि गोपाङ्गनाभिर्विहारमाह—लक्ष्मीति । गोप्य इति श्रीदशमे । गोप्यः श्रिय इत्यन्वयः । श्रीराधायाः श्रैष्ठ्यमाह—यथेति । त्रैलोक्ये इत्यर्जुनं प्रति कृष्णवाक्यम् । धन्या श्रेष्ठा । नन्वेतत्स्मृतिप्रमाणस्य मूलं श्रुतिप्रमाणं देयमिति चेत्तत्राह—यस्या इति ॥ २५ ॥

अथ सर्वातिशयिप्रेमपूर्णपार्षदत्वमुदाहरति—श्रीकृष्णेति । एषामिति श्रीदशमे ब्रह्मवाक्यम् । हे देव श्रीनन्दसूनो भगवन् एषां त्वद्विनियुक्तधामादीनां घोषनिवासिनां भवान् किं राता किं फलं दास्यतीति विश्वफलान्निखिलफलरूपात्त्वत्तोऽपरं फलं कुत्राप्यपश्यन्नश्चेतो विमुह्यति । किं दत्त्वायमनृणः स्यादिति मोहमेतीत्यर्थः । नन्वेभ्य एतदीयेभ्यो वाऽहमात्मानन्दत्वानृणः

सकुला त्वामेव देवापिता यद्धामार्थसुहृत्प्रियात्मतनय-प्राणशयास्त्वत्कृते" इति ॥ २६ ॥

द्रुहिणादितत्त्वविद्विस्मापकस्थिरचरविमोहकवेणुना-दमाधुर्यन्तु "सवनशस्तदुपधार्य सुरेशाः शक्रसर्वपरमेष्ठिपुरोगाः । कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चित-तत्त्वाः॥", "का स्त्र्यङ्ग ते कलपदामृतवेणुगीतसंमोहि-तार्य्यचरितान्न चलेत्त्रिलोक्याम् । त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं यद्गोद्विजद्रुममृगाः पुलकान्यबिभ्र-

---

स्यामिति चेत्तत्राह—सद्वेषादिवेत्यादि। सकुला बकादिभ्यां मातृभ्यां सहिता । यदिति स्फुटम् ॥ २६ ॥

सवनश इति तत्रैव व्रजदेवीनां वाक्यम्। कवयः सर्वज्ञा अपि सुरेशास्तत्ताः स्वरजातीः सवनशो मन्द्रमध्यतारभेदेनोपधार्य्य समाकर्ण्य अनिश्चिततत्त्वा अज्ञाततत्स्वरूपाः सन्तः केवलं कश्मलं मोहं ययुः । कीदृशास्ते यतो गीतध्वनिरायाति । तत आनताः कन्धराश्चित्तानि च येषां ते । का स्त्रीति। तत्रैव कृष्णं प्रति तासां वाक्यम् । ननु परे पुंसि मयि किमिति निरताः स्थ तत्राह—अङ्ग हे कृष्ण ते कलपदामृतवेणुगीतेन सम्मोहिता सती का स्त्री आर्य्यचरितान्निजधर्मान्न चलेत् । यन्मोहिताः पुंसोऽपि विमुह्यन्तीति भावः । त्रैलोक्येति । स्फुटार्थम् । यद्यतः अबिभ्रन्नबिभ्रुः । त्वदुद्योतकशब्दादेव धर्मत्यागो युक्तः किं

न्" इत्यादिभ्यः स्थिरचरविमोहकरूपमाधुर्य्यं चोक्तम् ॥ २७ ॥

"यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम् । विस्मापनं स्वस्य च सौभगर्द्धेः परं पदं भूषणभूषणाङ्गम् ॥" इत्यादिभ्यस्तु स्वपर्य्यन्तसर्व्वविस्मापकरूपमाधुर्य्यम् ॥ २८ ॥

"अहो बकीयं स्तनकालकूटं जिघांसयाऽपाययदप्यसाध्वी । लेभे गतिं धात्र्युचितां ततोऽन्यं कं वा दयालुं शरणं व्रजेम" इत्यादिभ्यस्तु निरतिशयकारु-

---

पुनस्त्वदनुभवादिति भावः ॥ २७ ॥

यन्मर्त्येत्यादि द्वयमुद्धववाक्यं तृतीये । यद् बिम्बं स्वमूर्तिम् । स्वयोगमायायाः पराख्यशक्तेः प्रभावं दर्शयता त्वया गृहीतं जगति प्रकटितमित्यर्थः । मर्त्त्येषु या लीला तस्यामौपयिकं तत्सदृशलीलोचितद्विभुजादित्वादतिमनोज्ञमित्यर्थः ॥ २८ ॥

अहो इति । कारुण्यस्यासमोर्द्ध्वत्वादाश्चर्य्यं तदित्यर्थः । बकी पूतना हन्तुमिच्छयापि स्तनयोः संभृतं कालकूटं विषं यमपाययत् । असाध्वी दुष्टापि धात्र्या उपमातुर्यशोदासख्या अम्बिकायाः किलिवायाश्चोचितां गतिं लेभे । धात्रीवेषमात्रेण यस्तादृश्यै सद्गतिं दत्तवानित्यर्थः । ततोन्यं कं वा दयालुं शरणं यामेत्यर्थः । इतोऽन्येषु भगवदवतारेष्वपि नेदृशं कारुण्यं

ण्यम् ॥ २९ ॥

प्रेमादीनां ह्लादिनीसंवित्सारणामानन्दचिदात्मकब्रह्मस्वरूपचिन्तनसमनुयायित्वान्मुख्यत्वं बोध्यम् । तस्मात् सर्वधर्माविष्कारात् कृष्णस्य स्वयंरूपत्वम् । तस्यैवानाविष्कृतसर्वधर्मस्य परव्योमाधिपादित्वम् । तत्तद्धर्माविष्कारतारतम्यादेव कृष्णेऽपि पूर्णतमत्वाद्यवस्थाः कीर्त्तिताः ॥ ३० ॥

---

प्रकटयस्तीति भावः ॥ २९ ॥

ननु किमेवं चित्तविकारः प्रेमा स्तूयते ज्ञानन्तु स्तुत्यं 'मृगैर्मृगाणां ग्रहणं पक्षिणां पक्षिभिर्यथा । गजानाञ्च गजैरेवं ज्ञेयं ज्ञानेन गृह्यते' इति मोक्षधर्मे तस्यैव ब्रह्मोपलम्भकत्वस्मरणादिति चेत्तत्राह—प्रेमादीनामिति । आदिशब्दात् प्रणयस्नेहरागमानानुरागमहाभावास्तस्यैवोत्तरोत्तरोत्कर्षादवस्थाभेदा गृह्यन्ते । ज्ञानं खलु तत्त्वंपदार्थानुसन्धिरूपनिर्निमेषवीक्षणवदविचित्रम् । प्रेमादिकन्तु विचित्रमपाङ्गवीक्षणवदिति पूर्वोक्तं स्मर्तव्यम् । भक्तिर्हि न चित्तविकारः 'सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति' इति श्रवणात् । किन्तु संविदाह्लादसारांशरूपा सेति पुरैव निर्णीतम् । प्रकरणार्थं योजयति—तस्मादिति । प्रकटार्थम् । न चैवं कृष्णरूपश्रद्धाजाड्यादपि तु वस्तुस्थित्यैव तथोच्यते यत् कृष्णरूप एव तारतम्यं वर्ण्यत इत्याह—तद्धर्मेति । 'हरिः पूर्णतमः पूर्णतरः पूर्ण इति त्रिधा' इति श्रीरूपचरणैः ॥ ३० ॥

स एष भगवान् स्वरूपशक्तिसिद्धेऽतिविचित्रे स्वधाम्नि स्वसदृशैः पार्षदैर्विशिष्टो नित्यं लीलायते। "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि" इति, "दिव्ये पुरे ह्येष संव्योम्न्यात्मा प्रतिष्ठितः" इति, "तां वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि" इति च श्रवणात्। न खलु स्वमहिमपुरप्रतिष्ठा स्वसदृशान् पार्षदान् विना सम्भवति। न च तासां शुभावहत्रि-धिरूपाणां गवाञ्च लीलया विना स्यादुपयोगः। तामित्यादौ तां तानि वां युवयो राधिकाकृष्णयोर्वास्तूनि धामानि गमध्यै लब्धुं उश्मसि कामयामहे। भूरिशृ-

---

एवं सच्चिदानन्दविग्रहो धर्मी भगवानविचिन्त्यशक्ति-रित्यापादितम्। अथ परिकरिणस्तस्य लीला वर्णनीया न हि निस्तरङ्गार्णववन्नीलाश्मस्तम्भवद् वैकरस्यभाक् सः। तथात्वे धामपरिकरश्रुतिर्व्याकुप्येत्। तस्मान्नित्यधामपरिकरलील इति प्रतिपादयितुमुपक्रमते—स एष इत्यादिना। स इति छान्दोग्ये। दिव्य इति मुण्डके। तामिति ऋक्षु। अयास इत्यत्र विग्रास इतिवत् सुक् छान्दसः। 'अयः शुभावहो विधिः' इत्यमरः। भूरिशृङ्गा इत्यत्र भूरिशब्दः प्राशस्त्ये लाक्षणिकः। एषु वाक्येषु परिकरलीलयोः स्पष्टमप्रत्ययात्ते प्रत्याययन् व्याचष्टे—न

ङ्गाः प्रशस्तविषाणाः । वृष्णः स्वजनाभिलाषवर्षिण इति व्याख्येयम् । राधयेत्यादौ लट्प्रयोगेण तैः सह तयोर्नित्यसाहित्यावेदनाल्लीला नित्येति सूचितम् । यस्या अंशे लक्ष्मीदुर्गादिका शक्तिरित्येतद्वाक्यानन्तरं पश्चिमादिक्रमेण सव्यसव्यं पश्चिमे संमुखे ललितेत्यादिभिर्निर्दिष्टनाम्नां परिकराणां कृष्णमभितः स्थितिर्दर्शिता सेवा चेति प्रतिज्ञातं विस्फुटम् ॥ ३१ ॥

इदमत्र तत्त्वम् । अनन्तविज्ञानानन्दवपुषो भगवतः स्वचिच्छक्तिविलासमयं प्रकृतिस्पर्शशून्यमपरिच्छिन्नं स्वमहिमसंव्योमशब्दितं पुरमतिविस्तीर्णबहुभूमप्रासादोपमं चकास्ति । यत्र नानाविर्भावपरिकरपरिच्छदस्वच्छन्दसमावेशोचितान्यातिविशालनीवृन्निचयमयानि निरुपमशक्रनीलकुरुविन्दचन्द्रकान्तादिकान्तानि विचित्रप्राचीरचत्वरप्रासादादिमदावासानि मणिचित्रतटाक-

---

खल्वित्यादिना । राधयेत्यादि वाक्ये तु ते द्वे प्रस्फुटे इति योजयति–राधयेत्यादावित्यादिना । एवं गोपगोपीगवावीतमित्यादिकमत्र स्मर्तव्यम् । प्रतिज्ञातमिति । स्वसदृशैः पार्षदैर्विशिष्टः स्वधाम्नि नित्यं लीलायत इति यत् प्रतिज्ञातं तत् श्रुत्या प्रतिपादितमित्यर्थः ॥ ३१ ॥

उक्तमर्थं वर्तुलयन्नाह—अनन्तेत्यादि । यत्र नानाविर्भावे-

पीयूषपूर्णसरित्सरोवापीकूपानि कर्पूरपूरायमाणरजांसि प्रतिक्षणसमुल्लसत्तरुवल्लीगुल्मानि रम्यविहङ्गादिसत्त्वसन्दोहानि कमनीयविमानावलिविपन्ति धामानि स्फुरन्ति । येषु परमालौकिकरूपगुणसम्पन्ना मुक्ता नित्यमुक्ताश्च सर्वाभ्यर्हितया श्रीदेव्या सह विविधविनोदवन्तं नानाविधैरूपचारैरनुकूलयन्तीति ॥ ३२ ॥

एवमेवोक्तं 'जितं ते' स्तोत्रे—"लोकवैकुण्ठनामानं दिव्यषाड्गुण्यसंयुतम् । अवैष्णवानामप्राप्यं गुणत्रयविवर्जितम् ॥ नित्यसिद्धैः समाकीर्णं त्वन्मयैः पाञ्चकालिकैः । सभाप्रासादसंयुक्तं वनैश्चोपवनैः शुभम् ॥

---

ति । 'वैकुण्ठभुवने नित्ये निवसन्ति महोज्ज्वलाः' इत्यादिपाठात् । अनुकूलयन्ति । अभिरुचितां सेवां कुर्वन्तीत्यर्थः ॥३२॥

अत्र स्मृतिमुदाहरन्ति—लोकमित्यादि । गुणत्रयविवर्जितमप्राकृतमिति वैकुण्ठलोकस्य विशेषणान्मायागन्धास्पृष्टत्वम् । तस्य विस्पष्टम् । अतस्तु तत्रत्यानां वस्तूनां भगवत्स्वरूपशक्तिविलासत्वमेवायातमिति बोध्यम् । त्वन्मयैस्त्वदाविष्टैः । पाञ्चकालिकैरिति । अभिगमनोपादानेज्याऽध्ययनसमाधयः पञ्च कालास्तेषु भवैस्तदनुष्ठाननिष्ठैरित्यर्थः । प्रकृष्टसत्त्वराशिमिति । सच्चिदानन्दस्वरूपमहापुरुषमित्यर्थः । प्रकृष्टसत्त्वं रजसा तमसा चामिश्रं मायिकं सत्त्वं जडमेवेति न त्रयाणां गुणानां परस्पर-

वापीकूपतडागैश्च वृक्षषण्डैः सुमण्डितम् । अप्राकृतं सुरैर्वन्द्यमयुतार्कसमप्रभम् ॥ प्रकृष्टसत्त्वराशिं त्वां कदा द्रक्ष्यामि चक्षुषा । क्रीडन्तं रमया सार्द्धं लीलाभूमिषु केशवम्" इत्यादि ॥ ३३ ॥

भगवान् सूत्रकारश्चैवमाह—"अन्तरा भूतग्रामवत् स्वात्मनः" इत्यस्मिन्नधिकरणे ॥ ३४ ॥

---

संसर्गस्य स्मृतत्वात् । ज्ञानात्मकममायिकमचेतनं तदिति च न । तद्भूतस्य भगवद्विग्रहस्य परमात्मत्वोक्तिव्याकोपात् । तस्माद् भगवदभिन्ना चिदानन्दसद्रूपा परा शक्तिस्तदिति तत्त्ववादिनः ॥ ३३ ॥

अथ परमर्षिनिर्णयोऽप्येवमस्तीत्याह—भगवानिति । 'दिव्ये पुरे ह्येष संव्योम्न्यात्मा प्रतिष्ठितः' इति वाक्ये किमाकाश एव हरेर्लोकः, उताकाशवद् व्यापको विचित्रप्राकारप्रासादादिरूप इति सन्देहे आकाशः स्याद्राचनिकत्वात् । पुरत्वं तस्य रूपकेणोच्यते इति प्राप्ते—अन्तरेति । स्वात्मकसंव्योमभूतस्य पुरस्याऽन्तरा मध्ये स्थितं प्राकारादि वस्तु स्वात्मनो भूतग्रामवत् स्फुरति 'यमेवैष वृणुते तेन लभ्यः' इत्यादि श्रवणात् स्वानुग्रहभाजनस्य जीवस्य भूम्यादिनिर्मितवद् विभाति । वच्छब्देन भूतग्रामत्वं तस्य निरस्तम् । तत्रैव तस्य ब्रह्मात्मकत्वमुक्तम् । 'ब्रह्मैवेदममृतं पुरस्तात् पश्चाच्च ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' इति मुण्डके । स्वे महिम्नीत्यनेनाप्येवं बोध्यते ॥ ३४ ॥

तदेतत् स्वमहिमादिशब्दितं तद्धाम वैकुण्ठद्वार्व-त्यादित्रषा यथोर्ध्वं स्फुरतीति तत्तदगताविर्भावेषु तत्त-दभिमानेषु विशेषश्चेति विमृष्टागमानां विदुषां निश्च-यः ॥ ३५ ॥

यान्येव धामानि तत्तल्लीलार्थमजाण्डेऽप्याविःस्युरिति स्कान्दे स्मर्य्यते । "या यथा भुवि वर्त्तन्ते पुर्य्यो भगव-

---

अथ सन्निवेशविशेषं तस्य धाम्नोऽवगमयति—तदेतदि-त्यादिना । वैकुण्ठोपरि द्वार्वती तदुपरि मधुपुरी तदुपरि तु गो-कुलमित्यूर्ध्वोर्ध्वं विभातीत्यर्थः । विमृष्टागमानामिति । स्वाय-म्भुवागमादिषु वैकुण्ठोपरि कृष्णलोको वर्णितः । ब्रह्मसंहिता-बृहद्वामनहरिवंशेषु तु सर्वोपरि गोलोकगोकुलाभिधानः स्वतन्त्रः कृष्णलोको निरूप्यते । स च परिकरलीलाभेदेनांश-भेदात् द्वार्वत्यादित्रिरूपो वाच्यः । या यथा भुवीत्यादि स्का-न्दोक्तेश्च । यत्तु पाद्मोत्तरखण्डे महावैकुण्ठस्यावरणतया त-स्य पूर्वादिषु दिक्षु दशावतारीस्थानानि क्रमाद् गणयित्वा श्रीकृष्णस्य नवमत्वेन तत्स्थानस्य ब्रह्मादिगावरणत्वमुक्तम । तत्रापि तस्य सर्वोर्ध्वत्वमेवाभिमतम् । तस्य तथाभूतस्यापि तदावरणत्वेनोक्तिस्तस्य ग्रन्थस्य तत्परत्वादवगम्यते । अन्य-था स्वायम्भुवागमादिबहुग्रन्थव्याकोपापत्तिः । विशेषस्तु श्रीकृ-ष्णसन्दर्भे द्रष्टव्यः ॥ ३५ ॥

मत्स्याद्यवताराणां यानि स्थानानि परमव्योम्नि सन्ति ता-

तः प्रियाः । तास्तथा सन्ति वैकुण्ठे तत्तल्लीलार्थमादृताः'' इति । आसु दिव्यत्वास्फूर्तिस्त्वसंस्कृतदृशामेव भगवति नरदारकत्वादिवत् । तथापि तद्दृष्ट्या शुभलोकप्राप्तिस्तादृशभगवद्दृष्ट्यैवेति "न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः''इति सूत्रात्तद्भाष्याच्च ।

---

नि प्रपञ्चेऽपि तद्वदाविर्भवन्त्यतस्तान्यप्राकृतानीति प्रतिपादयति—यान्येवेति । या यथेति । आदृता ब्रह्मादिवन्दिताः । आस्विति । ब्रह्माण्डान्तर्गतासु पूर्ष्वित्यर्थः । असंस्कृतेति । भक्तिसंस्कारशून्यधियामित्यर्थः । नरदारकेति । मायिकनृबालकत्वादिवदित्यर्थः । तादृशेति । नरदारकतया प्रतीतस्यापि भगवतो दर्शनेनेत्यर्थः । न सामान्यादिति ब्रह्मसूत्रम् । अस्यार्थः । 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति श्रुतौ, 'एतदन्तो नृणां क्लेशो यद्भवानक्षिगोचरः' इति स्मृतौ च भगवतो दर्शनान्मुक्तिरित्युक्तम् । तन्न युक्तम् । अवताराऽवसरे तद्दृष्टिमतामपि मुक्तेरप्रत्ययादिति चेत्तत्राह—नेति । अपिरवधारणे । सामान्यादिति । टाविभक्तेरात् सुपां सुलुगित्यादिपाणिनिसूत्रात् सामान्येन सर्वसाधारण्येन मायाजवनिकाच्छन्नभगवद्विषयतया योपलब्धिर्दृष्टिस्ततो न मुक्तिः मृत्युवत् मरणमात्रान्यथा सा न स्यात् । तर्हि सामान्योपलब्धिरपार्था स्यात्तत्राह—न हीति । न साऽपार्थेत्यर्थः । तत्फलं किमिति चेत्तत्राह—लोकेति । स्वर्गादिलोकप्राप्तिस्तत्फलमित्यर्थः । 'सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मद-

तत्सङ्गात्तत्र तैः सहाऽसौ नित्यं लीलायते। बाल्यपौगण्ड-कैशोरसम्बन्धास्ता लीला नित्याऽऽगीया विभान्तीति सिद्धम्॥ ३६॥

अत्राहुः। तद्देशतत्कालतत्परिकराविच्छेदे सत्येव तासां नित्यत्वं स्यान्न चैवं संभवति। देशादिभेदादेकस्य परिकरस्य पूर्वोत्तरवर्त्तित्वेनानेकलीलासम्बन्ध-स्मरणाच्च। पूर्वस्या लीलाया नित्यत्वे तत्सम्बन्धिनः परिकरस्यापि सम्बन्धस्तत्र नित्यः स्यात्। तथा सत्य-

---

र्शनात्'इति स्मरणात्। योग्येति। परमप्रेमास्पदचिद्विग्रहत्वेन। तद्वीक्षणात्तु मुक्तिरित्यर्थः॥ ३६॥

अत्राहुरिति। अत्र लीलानित्यत्वे विषये शब्दबुद्धिकर्मणां त्रिक्षणावस्थायित्वं वदन्तस्तार्किकाः पूर्वपक्षं रचयन्तीत्यर्थः॥ देशादिभेदादिति। न ह्येकस्मिन् देशे काले वा स्थूणाश्मवज्रगवान् सर्वेश्वरस्तत्परिकरो वाऽस्ति। निकेतजाग्धिगोचारणरासनृत्यादीनां लीलानां देशभेदेन कालभेदेन परिकरभेदेन च संभवः प्रतीयते। बाल्यपौगण्डलीलायां पूर्वपूर्वस्यां कैशोरलीलायां चोत्तरस्यां स एव बालकः पित्रादिः परिकरः। सव्रजजिघ्रगोचारणनियुद्धादिषु पूर्वोत्तरेषु स एव वयस्यगणः। संभोगविप्रलम्भयोः पूर्वोत्तरयोः स एव किङ्करीगणः सखिगणश्चेति विभावनीयम्। एवं श्रीदाशरथ्यादेर्लीलासु च सुधीभिरनुसन्धेयम्। इत्थं चैकस्य परिकरस्य पूर्वोत्तरवर्त्तित्वेन लीलासुपरि

त्तरस्यां तस्य सम्बन्धो दुर्घटः । स्वीकृते च तस्मिन् पूर्वस्या अनित्यत्वम् । नित्यत्वे चोत्तरसम्बन्धिनस्तस्यान्यत्वं भवेत् । तस्मादियत्युपपाद्यमानं भवतां लीलानित्यत्वमिति चेत् ॥ ३७ ॥

अत्रोच्यते । अनभिज्ञो भवानावचिन्त्यस्य भगवत्तत्त्वस्य, यदौपनिषदं तत् । तथा हि छान्दोग्ये "भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः" इति भूमानमुद्दिश्य तस्य लक्षणमुच्यते—"यत्र नान्यत् पश्यति नान्यच्छृ-

---

कराविच्छेदे सिद्धे तेन कृति दर्शयति पूर्वस्या—इत्यादिना । तत्संबन्धिनः पूर्वलीलाङ्गस्य पित्रादेः ॥ तथा सति तस्य पूर्वलीलायां नित्यसन्बन्धे स्वीकृते सतीत्यर्थः । तस्य पूर्वलीलाङ्गस्य पित्रादेः । स्वीकृते चेति । उत्तरलीलायां पित्रादेः सन्बन्धेऽङ्गीकृते तत्सम्बन्धघटितायाः पूर्वलीलाया नित्यत्वाभावः स्यादित्यर्थः । नित्यत्वे वेति । तत्संबन्धघटिततया पूर्वलीलाया नित्यत्वे वा स्वीकृते सत्युत्तरलीलायामन्यः पित्रादिः स्यान्न चैवं स्मर्यतेऽनुभूयते वेति । तथा च प्रागुत्तरं चान्यान्यलीलोदयात् पूर्वपूर्वासां विनाशादनित्या लीलेति भावः ॥ ३७ ॥

पूर्वपक्षं निराकुर्वन्नाह—अत्रोच्यत इति । भूमैवेति । नारदं प्रति सनत्कुमारस्य वचनम् । वैपुल्यधर्मा सुखस्वरूपः सर्वेश्वरो जिज्ञास्य इत्यर्थः । यत्रेति । यत्र भूम्न्यनुभूयमाने सति स भूमानुभवी ततोऽन्यन्न पश्यति जलधिनिमग्नो यथा जलराशेर-

णोति नान्यद्विजानाति स भूमा" इति। अत्र भूमानं प्राप्तस्य तदितरदर्शनादि प्रतिषिध्यते। अनन्तरं तु मृत्य्वादिहेयदर्शनं निषिध्य पुनस्तस्य सर्वदर्शनमुच्यते "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखितां। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति। अत्र सर्वशब्देन द्विविधवैचित्र्यवत्यो बाल्यादिसम्बद्धास्तस्य लीलाः कथ्यन्ते। ताः कार्त्स्न्येन पश्यति स्वस्य तत्परिकरत्वेन तदङ्गत्वादाप्नोति च यथाधिकारमिति। इह बाल्यादिसम्बद्धानां तासां मिथो वैलक्षण्यात् कैशोरसम्बद्धानां संयोगवियोगात्मना स्फुटद्वैधत्वाच्च द्वैविध्यवैचित्र्ये सुव्यक्ते॥ ३८॥

---

न्यच्च पश्यति तद्वादित्यर्थः। अनन्तरमिति। तस्य भूमोपासकस्य। न पश्य इति। तत्रैव तं प्रति तद्वाक्यम्। पश्यो भूमध्यायी भक्तः। मृत्युरोगदुःखितान् संसारिधर्मान्न पश्यति किं तु भूमानमापद्य तस्य सर्वं विशेषं पश्यतीत्यर्थः। अत्र भूम्नो निर्विशेषत्वे सर्वशब्दोपादानं निरर्थकं स्यादतः सर्वशब्देन तस्य गुणचरितानि बोध्यन्ते। एतदेव व्याख्याति—सर्वशब्देनेति। स्फुटद्वैधत्वात् प्रकटद्वैविध्यत्वादित्यर्थः। धाप्रत्ययस्य 'द्वित्र्योश्च धमुन्' इति धमुन्नादेशः। धमुन्नन्तात् स्वार्थे दर्शनमिति ष्यञ्प्रत्ययः। ततो द्वैधत्वादिति सिध्यति॥ ३८॥

अथ मिथो विलक्षणासु देशकालभेदेन जायमानासु बह्वीषु तास्वेकस्य परिकरस्य युगपत्सान्निध्यसम्भवात् कथं सर्वप्रकारकदर्शनप्राप्ती सम्भवेतां, तदसम्भवे वा कथं तासां तद्योगघटितानां नित्यतेत्याशङ्कायां तदनन्तरमिदं पठ्यते—"स एकधा भवति द्विधा त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः। शतं च दश चैकं च सहस्राणि च विंशतिः" इति। अत्र सिद्धिबलाद्बहूनि रूपाणि तस्य लीलाप्रेप्सोराविर्भवन्ति तैरसौ तत्र तत्र संनिदध्यादिति तस्य सर्वत्रैक्यात्तदवि-

---

भगवति लीलाः साधिताः। अथ तास्वङ्गभूतानां देशकालपरिकराणामविच्छेदः साध्यते—अथेत्यादिना। तासु लीलासु। तदसम्भवे वेति। तस्य परिकरस्य तत्तद्देशतत्तत्कालसम्बन्धेन जायमानासु लीलासु युगपत् सान्निध्यसम्भवे वेत्यर्थः। तासां तद्योगघटितानामिति। तत्तद्देशतत्तत्कालतत्तत्परिकरसम्बन्धसिद्धानामित्यर्थः। तत्र तावदेकस्य परिकरस्य युगपत्तासु सान्निधिं प्रतिपादयति—स इति। तत्रैवैतद्वाक्यम्। स मुक्तो भूमभक्तः। अत्रेति। सिद्धिः सत्यसङ्कल्पता। लीलाप्रेप्सोः सर्वा लीलाः साक्षाच्चिकीर्षोः। सर्वत्र सर्वासु लीलासु। तदविच्छेदसिद्धिर्निखिललीलासान्निध्योपपत्तिः। यद्यपि स एकधेति वाक्यं साधनमुक्तपरं प्रकरणात्तथाप्युपलक्षणतया कैमुत्येन वा नित्यमुक्तानां जीवानां परावताराणां च पार्षदानां ग्रहणाय

च्छेदसिद्धिरतो न काचिदनुपपत्तिः ॥ ३९ ॥

ईदृशलीलाविशिष्टमेव स्वरूपं रसशब्दितम्। तदवासस्यैव परमानन्द इति श्रुतिराह—"रसो वै सः। रसꣳ ह्येवायं लब्ध्वानन्दी भवति" इति। संयोगस्येव वियोगस्यापि रसत्वेन भगवद्रूपत्वात्तज्ज्ञानमपि तदनुभव एवेति तस्य सार्वदिकसाक्षात्कारसिद्धिः। तेन तेन च विशिष्टा खलु लीला नित्या। तत्राद्ये बहिरन्त्ये तु हृद्येव साक्षात्कृतिः। इत्थं च सार्वदिकसाहित्यसत्त्वेऽपि सायं वीक्षाप्रतिज्ञासाम्प्रतपरिष्वङ्गाभ्यर्थनादयो व्यवहाराः सिध्येयुरिति श्रुतितात्पर्यसहायवानेष निर्णयः। धाम्नः समयस्य च भगवदात्मकस्य सर्वत्र सान्निध्यं वक्ष्यते। अलौकिकेऽचिन्त्यवस्तुनि तर्कानवतारो न दूषणमपि तु

---

भावीति बोध्यम् ॥ ३९ ॥

रस इति तैत्तिरीयके। स भगवान् रसः पञ्चविधरसात्मा। अयं तदुपासकः। ननु गोचारणादौ प्रवृत्ते भगवति निकेतस्थानां भक्तानां तत्साक्षात्काराभाव इति चेत्तत्र समादधदाह-संयोगस्येवेति। तज्ज्ञानं वियोगज्ञानं। तस्येति भगवतः। तेन तेन चेति। संयोगेन वियोगेन चेत्यर्थः। सायमिति। गोचारणाय गच्छतो भगवतः सायमागत्य त्वामहं द्रक्ष्यामि देहि मे सांप्रतं परिष्वङ्गमित्यावासस्थितैर्भक्तजनैः स व्यवहारः सिध्येत्

भूषणमेव महिमोन्नाहात् ॥ ४० ॥

अत्राहुः । ननु लीलायाः क्रियात्वात् प्रत्यंशमप्यारम्भसमाप्तिभ्यां तस्याः सिद्धिर्वाच्या । ताभ्यां विना तत्स्वरूपनाशापत्तिः । अतः कथमसौ नित्येति चेत् ॥४१॥

अत्रोच्यते । भगवति सदैवाकारानन्त्यात प्रकाशानन्त्याल्लीलानन्त्यादनन्तब्रह्माण्डगतानन्तवैकुण्ठगतानां तत्तल्लीलास्थानानां तत्तत्पार्षदानां च व्यक्तिप्रकाशानन्त्याच्च नानित्यत्वं तस्याः । तत्तदाकारप्रकाशगतयोस्तत्तदारम्भसमाप्त्योः सत्योरप्येकत्र तत्तत्क्रियांशा यावत् समा-

---

संयोगवियोगात्मना रसस्योदयमानत्वादिति भावः ॥ ४० ॥

ननु सन्तु भगवति विचित्रा लीलास्तत्तद्देशादिसम्बद्धाः । नित्यास्तु ता न स्युरारम्भसमाप्तिमत्त्वादिति तार्किकाः पुनः प्रत्यवतिष्ठन्ते-नन्वित्यादिना । विकसितार्थमेतत् ॥ ४१ ॥

समादधाति-भगवतीत्यादिना । भगवत्याकारानन्त्यं 'एकोपि सन् बहुधा योऽवभाति', 'एकानेकस्वरूपाय'इत्यादिश्रुतिस्मृतिभ्यः। लीलानन्त्यं 'जन्मकर्माभिधानानि सन्ति मेऽङ्ग सहस्रशः। न शक्यन्तेऽनुसंख्यातुमनन्तत्वान्मयापि हि'इत्यादिस्मृतिभ्यः। ब्रह्माण्डानन्त्यम् 'अण्डानां तु सहस्राणां सहस्राण्ययुतानि च। तादृशानां तथा तत्र कोटिकोटिशतानि च'इत्यादिस्मृतिभ्यः। वैकुण्ठानन्त्यं च 'तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि'इति श्रुतेः । पार्षदानन्त्यं च 'स एकधा'इत्यादिश्रुतेः । एवं भ-

प्यन्ते न समाप्यन्ते वा तावदेवाऽन्यत्राऽन्यत्राऽप्यारब्धाः स्युरित्येवं तस्मिंस्तदविच्छेदान्नित्यैव सेति। तत्र क्वचित् किञ्चिद्वैलक्षण्येन क्वचिच्चैकरूप्येणारम्भः विशेषणानां भेदादभेदाच्च ॥ ४२ ॥

नन्वस्त्वविच्छेदः, कथं सैव वर्त्तते इत्युच्यते पृथगारम्भाद्भिन्नैव सेति चेत्। उच्यते। कालभेदेनोदितानामपि तुल्यरूपाणां क्रियाणामैक्यं यथा परेषामपि द्विर्गोशब्दोऽयमुच्चरितो न तु द्वौ गोशब्दाविति प्रतीतिनिश्चितं शब्दैकत्वं यथा च द्विः पाकोऽनेन कृतो न तु द्वौ पाकाविति क्रियैक्यं च, तथैतत् प्रत्येतव्यम्। अत

---

गवद्रूपादीनामानन्त्यमापाद्य लीलानित्यत्वार्थमविच्छेदं तस्याः समर्थयति—तत्तदाकारेति। एकत्रैकत्रेत्येकैकस्मिन् प्रकाशे। अन्यत्रान्यत्रेत्यन्यस्मिन् प्रकाशे इत्यर्थः। तदविच्छेदात् क्रियाविच्छेदविरहादित्यर्थः। क्वचिदिति। क्वचिन्मातुरङ्के स्थितः क्वचित्तु स्वर्णपीठे निविष्टो हैयङ्गवीनमत्ति हसति चेति विशेषणयोर्भेदो भाव्यः ॥ ४२ ॥

लीलाङ्गानां देशकालपरिकराणामैक्यं प्राक् प्रतिपादितम्। अथ समानरूपाणां तासां पृथगुदितानामप्यैक्यं प्रतिपाद्यते। तत्राशङ्क्यते-नन्वस्त्विवाति। अत्र शाब्दिकसम्मतं दृष्टान्तयुगलमाह-यथेति। परेषां प्राणिनाम्। ते हि 'शब्द इति चेत्'इति सूत्रे उपचर्यमनेनैवं विममृषुः। यद्वतमिति। बृहदारण्यके पठ्यते। ब्रह्मनि-

एवमाह श्रुतिः "यद्भूतं भवच्च भविष्यच्च"इति, "एको देवो नित्यलीलानुरक्तो भक्तव्यापी भक्तहृद्यन्तरात्मा' इति च, स्मृतिश्च "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन"इति। ईदृशावगतिस्त्वतिरहस्या भगवदनुग्रहैकसाध्येति—"यावानहं यथाभावो यद्रूपगुणकर्मकः। तथैव तत्त्वविज्ञानमस्तु ते मदनुग्रहात्"इति तदुक्तेः॥ ४३ ॥

किञ्च "न पश्यो मृत्युं पश्यति"इत्यत्रैकस्यैव पार्षदस्य युगपत् सर्वलीलाकर्मकदर्शनप्राप्त्योः प्रतिपादनाद्भगवद्रूपस्तत्र कालस्तद्रूपरविचन्द्राद्युदयास्तमनसिद्धदिवसरा-

---

ष्टुं गुणकर्मलक्षणमर्थजातं नित्यं गतभवद्भाविष्यच्छब्दैस्तस्य त्रैकालिकस्थितिनिवेदनात्। एक इति। पिप्पलादशाखायामाथर्वणिकाः पठन्ति। जन्मेति। श्रीगीतासु। दिव्यमप्राकृतं मत्स्वरूपानुबन्धीति यावत्। तद्वेत्तुर्मोक्षोक्तेः। ईदृशावगतिः कर्मणामपि भगवत्त्वेनाऽवबोधः। यावानिति। द्वितीये ब्रह्माणं प्रति भगवद्वाक्यम्। यावान् यत्परिमाणः। मध्यमत्वेपि विभुत्वलक्षणः। यथाभावो यादृशसत्ताको यादृशस्वभावो यादृशपार्षदश्च। भावः सत्तास्वभावेत्यादिमेदिनीकरकोशात्। स्फुटमन्यत्॥४३॥

धाम्नः समयस्य च भगवदात्मकस्य सर्वत्र साम्निध्यं वक्ष्यते इति यत्पूर्वमुक्तं तदिदानीं प्रतिपादयति—किञ्च न पश्य इत्यादिना। भगवन्नित्यधामस्थो भगवद्रूपः कालो जडात्कालाद्भि-

त्रिमात्रतया। तदिष्टतत्तल्लीलानुगुणत्वान् प्रचकास्ति न त्वयनवत्सरादिरूपतां भजति। तावतैव तत्तल्लीलारस-निष्पत्तेर्युगपत् सर्वर्तूदयसत्त्वाच्च। तदनुगुणतयैव तदंशाविर्भावतिरोभावौ स्याताम्। एवमभिप्रेत्यैव स्मर्य्यते "स यत्र क्षीराब्धिः सरति सुरभीभ्यश्च सुमहान्निमेषार्धाख्यो वाव्रजति न हि यत्रापि समयः। भजे श्वेतद्वीपं तमहमिह गोलोकमिति यं विदन्तस्ते सन्तः क्षितिविरलचाराः कतिपये" इति। एवं धाम्नोपि तद्रूपस्य सर्वत्र संबन्धः। यदुक्तं वृद्धैः "अतः प्रभोः प्रियाणां च धाम्नश्च समयस्य च। अविचिन्त्यप्रभावत्वान्नात्र किञ्चित्

---

न्नः युगपत् क्रमिकबहुक्रियानिर्वर्त्तकत्वात् भगवद्रूप। जडात्मा कालः खलु क्रमादेकस्य बहुक्रिया निर्वर्तयति भगवद्रूपः कालस्तु युगपदिति तद्भिन्नः स इत्यर्थः। तदिष्टेति। भगवदीप्सिततत्तत्क्रीडानिर्वर्त्तक इत्यर्थः। तावतेति। दिवसरात्रिमात्रेण कालेनेत्यर्थः। तदनुगुणतयेति। लीलानुकूलतयैव कालावयवानामाविर्भावादित्यर्थः। स यत्रेति। ब्रह्मसंहितायाम्। निमेषार्धेति। विभातसङ्गवमध्याह्नादीनां कालावयवानां धामावयवेषु स्थितत्वादिति भावः। श्वेतेति। मायामालिन्यविरहात् श्वेतमत्युज्ज्वलम् अत्युच्चस्थितत्वात्तद्धाम्नः, न त्वनिरुद्धदेवस्य क्षीराब्धिगतं धाम 'इह' इत्याद्युक्तेः। एवमिति। तद्रूपस्य भगवदात्म-

सुदुर्घटम्''इति। प्राकृतेभ्यो ग्रहेभ्योऽन्ये चन्द्रसूर्य्यादयो ग्रहाः लीलास्थैरनुभूयन्ते तथापि प्राकृता इवेति च ॥४४॥

अत एव देवर्षिणा बहुभिरहोभिर्भाव्या लीला एकेनैवान्हा दृष्टा इति श्रीशुको निरूपयामास "नरकं निहतं श्रुत्वा तथोद्वाहं च योषिताम्''इत्यादिना। न च बहुभिरहोभिस्तेन ता दृष्टा इति वाच्यम्। तथा सति योगमायामहोदयेक्षणहेतुकतद्विस्मयानुपपत्तेः ॥ ४५ ॥

प्राकृताः सूर्य्यादयो जडात्मा कालश्च तत्र न सन्ति—"न तत्र चन्द्रार्कवपुः प्रकाशते न वान्ति वाता न च यान्ति देवताः। यत्र देवः क्रतुभिर्भूतभावनः

---

कस्य। यदिति। वृद्धैः श्रीरूपचरणैः। लीलास्थैः। प्रकटलीलावर्त्तिभिर्भक्तैः। प्राकृता इव प्रसिद्धचन्द्रादितुल्या इव न तु प्राकृता इत्यर्थः ॥ ४४ ॥

उक्तं पुष्णन्नाह—अत एवेति। भगवदात्मकालसाचिव्यादेवेत्यर्थः। एकेनैवेति। विभातसङ्गवादिवपुषाविर्भूतेन कालेन तत्तत्कालिक्यो लीला दिवसेनैवैकेन दृष्टा इत्यर्थः ॥४५॥

ननु जडात्कालादन्यो भगवदात्मा कालो नित्ये धाम्नि लीलासिद्धिकृदस्तीति नाङ्गीकर्त्तुं शक्यते प्रमाणादर्शनादिति चेत्तत्राह-प्राकृता इत्यादि। न तत्रेति मुण्डके। तत्र नित्ये धा-

स्वयं विभूत्या विरजः प्रकाशते," "न तत्र सूर्यो भाति न चन्द्रतारके नेमा विद्युतो भान्ति कुतोऽयमग्निः", "मृत्युर्यस्योपसेचनक इत्यावेद यत्र सः", "न यत्र कालोऽनिमिषां परः प्रभुः। कुतो नु देवा जगतां य ईशिरे", कलामुहूर्त्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः" इत्यादिश्रुतिस्मृतिभ्यः। अत एव न तत्रत्यानां कालिको विशेषः॥ ४६॥

तदेवं बाल्यादीनि हरेर्नित्यानित्यैः संबद्धास्तास्ता

---

ग्नि। देवः सर्वाराध्यः। परमात्मा क्रतुभिः सङ्कल्पैरेव भूतभावनः। स्वात्मककालसिद्धाभिर्विचित्राभिर्लीलाभिः स्वभक्तानां पालक इत्यर्थः। न तत्रेत्यगूढार्थम्। मृत्युर्यस्येति। कठवल्ल्याम्। मृत्युः सर्वग्रासी कालांशः। यस्य विश्वौदनभक्षकस्योपसेचनं दध्यादीत्यर्थः। न यत्रेति। श्रीभागवते। अनिमिषां ब्रह्मादिदेवानां परो नियन्ता कालो यत्र न प्रभुस्तत्र तन्नियम्या देवाः कुतः प्रभव इत्यर्थः। कलेति श्रीवैष्णवे। अत एवेति। तत्रत्यानां तल्लोकनिवासिनां कालिको विशेषो जरामरणादिलक्षणावस्था नास्ति। 'विशेषः कालिकोऽवस्था' इत्यमरः। नित्ये धाम्नि जड एव कालः किं तु तत्र तस्य प्रभावो नास्ति न यत्रेत्यादावेवमेवार्थावगमात् ततोऽन्यस्मिन् प्रमाणालाभाच्चेत्येके वदन्ति॥ ४६॥

प्रकरणार्थं निगमयति—तदेवमिति। पूर्वोक्तप्रकारेणेत्यर्थः।

लीला नित्याः सर्वैः पार्षदैर्यथाधिकारं सर्वैश्चानुभाव्या इति। तदिदं चोक्तं सूत्राभ्याम् "व्याप्तेश्च समञ्जसम्" "सर्वाभेदादन्यत्रेमे" इति। तथैव भाषितं च ॥४७॥

इदं तु बोध्यम्। स्वरूपेण चिच्छक्त्या च कृता लीला सनातनी। तेन प्रकृतिकालाभ्यां च कृता तु

---

अत्र परमर्षिनिर्णयमाह—तदिदं चोक्तमिति। व्याप्तेश्चेत्यस्यार्थः। श्रीगोपालोपनिषदि श्रीरामोपानिषदि च भगवतो बाल्यादयो धर्माः श्रुतास्ते ध्येया न वेति सन्देहे तैर्विग्रहे भगवति न्यूनाधिकभावापत्तेरैकरस्यवाक्यव्याकोपात्तैर्ध्येया नेति प्राप्ते बाल्यादिधर्मिणस्तस्य व्याप्तेर्विभुत्वात्तैस्तत्र तद्भावाभावाच्च तेषां ध्यानं समञ्जसमेवेत्यर्थः। सर्वेत्यस्यार्थः। ननु बाल्यादिकर्माण्यारम्भसमाप्तिमत्त्वेनानित्यानि विदितान्यतः किं तेषां ध्यानेनेति चेत्तत्राह—ये हरितज्जनास्तत्कर्मांशा वा पूर्वस्मिन् कर्मणि काले वाऽभूवन् त एव येऽन्यत्रोत्तरस्मिन् कर्मणि काले वा भवेयुरित्यङ्गीकार्यम्। कुतः सर्वेषां पूर्वोत्तरकर्मवर्त्तिनां हरितज्जनानां पूर्वोत्तरकालवर्त्तिनां तत् कर्मांशानां च भेदविरहादित्यर्थः। तथा च तेषां तेषां पूर्वोत्तरस्थितत्वेन नित्यत्वात् समञ्जसं ध्यानमिति। विशेषस्तु भाष्ये दृश्यः ॥ ४७ ॥

लीलासु कश्चिद्विशेषमाह इदं त्विति। कृतेति। नित्ये धाम्नीति बोध्यम्। तेनेति स्वरूपेण। कृता त्विति। प्रपञ्चे इति ज्ञेयम्। कादाचित्क्यनित्या। इतरथा सर्गादिलीलानां नित्यत्वाङ्गी-

कादाचित्की । सा च सर्गादिदैत्यवधादिरूपैव स्यात् । इतरथा प्राकृतिकलयोक्तिव्याकोपः । ननु तल्लये प्रपञ्चमात्रविनाशात्तद्गोचरायाः प्रकटाया नित्यत्वं कथमिति चेत् । तद्गोचरताया विनाशेपि तद्व्यक्तेरविनाशात् शिखी ध्वस्त इति वत् । सविशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामत इति हि न्यायविदां स्थितिः ॥ ४८ ॥

तदेवमैश्वर्य्यमाधुर्य्यौदार्य्यादिगुणरत्नाकरस्य नित्यधामादेः पुरुषोत्तमस्य पूर्णाविर्भावे स्वयं भगवच्छब्द-

---

कारे । ननु तल्लये इति । 'अनन्तानि तवोक्तानि यान्यण्डानि मया पुरा । सर्वाणि तानि संहृत्य समकालं जगत्पतिः । प्रकृतौ तिष्ठति तदा सा रात्रिस्तस्य कीर्त्तिता'इति विष्णुधर्मात् । तद्गोचरायाः प्रपञ्चगता सा । तद्गोचरताया इति । प्रपञ्चवर्त्तित्वस्य विशेषणस्येत्यर्थः । तद्व्यक्तेर्लीलारूपस्य विशेष्यस्येत्यर्थः । शिखीति । शिखायां ध्वस्तायां यथा विप्रस्य न ध्वंसस्तद्वत् । विद्वन्निर्णयोऽत्र प्रमाणमित्याह-सविशेषणे इति ॥ ४८ ॥

महाप्रकरणमुपसंहरति तदेवमिति।प्रकृतार्थम् । तयोरिति । सुखप्राप्तिदुःखपरिहारयोरात्यन्तिकयोरित्यर्थः । तदिच्छया पुरुषोत्तमेच्छया । उत्तरे रुचिभक्ताः। छन्दत इत्यस्यार्थः । विधिभक्ति-

तस्यापूर्णाविर्भावे तु विलासांशादिशब्दबोध्यस्य तस्यै-श्वर्य्यमाधुर्य्यविषयतया द्विविधेन ज्ञानेन जायमाना विधिप्रवृत्ता रुचिप्रवृत्ता चेति द्वेधा भक्तिः साधनरूपा साध्यरूपा च। सैवात्यन्तिकयोस्तयोः सिद्धौ हेतुः। तदिच्छयैव तस्यां तस्यां ते ते जीवाः प्रवर्त्तन्ते, तेषूत्तरे श्रेष्ठा इति दर्शितं भगवता सूत्रकारेण "छन्दत उभयाविरोधात्","गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः", "उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्"इत्यत्र। एवमेव

---

श्च रुचिभक्तिश्चात्र भगवत्प्रापिका श्रूयते। तत्र का तत्प्राप्तिकरीत्यनिश्चयात्तत्र तत्र प्रवृत्तेरसम्भव इति प्राप्ते—छन्दत इति। पूर्वतो नेत्यनुवर्त्तते। छन्दतस्तादृशसत्प्रसङ्गानुयायिभगवत्सङ्कल्पादुभयोर्भक्त्योस्तत्प्रसङ्गिनां जीवानां तत्सङ्कल्पानुगता प्रवृत्तिः स्यादेवेति न प्रवृत्त्यसम्भवः। कुतः। उभयविधश्रुत्यनुरोधादित्यर्थः। गतेरिति। एवं स्वीकारे गतेस्तत्प्राप्तेरुभयथार्थवत्त्वं विधिभक्तिस्फुरिततदैश्वर्य्येण रुचिभक्तिस्फुरिततन्माधुर्य्येण च फलितमित्यर्थः। अन्यथा विधिरुचिभक्तिप्रतिपादिकयोः श्रुत्योर्विरोधो मिथो व्याघातः स्यादित्यर्थः। उपपन्न इति। विधिभक्त्यनुष्ठायी श्रेष्ठो रुचिभक्त्यनुष्ठायी वेति संशये विधिविभूषितत्वादाद्यः श्रेष्ठ इति प्राप्ते अन्त्यः श्रैष्ठ्यमुपपन्नः। कुतः। तत्तादृशस्वभक्तानिरतत्वं लक्षणं यस्य स चासावर्थश्च रुचिभक्तिविषयो यशोदात्मजो भगवान्। तस्योपलब्धेः स्वाधी-

च निरूपितं भाष्ये । तथा च पूर्वोदितं सर्वं सुस्थिरम् ॥४९॥

इति सिद्धान्तरत्नाख्ये भाष्यपीठके भगवदैश्वर्यादिनिर्णयो द्वितीयः पादः ॥२॥

---

नत्वेन लाभादित्यर्थः । लोकवत् । लोके यथा नृपानुवृत्तिनिपुणस्तं वशयन् प्रशस्यते तद्वत् ॥ ४९ ॥

इति श्रीगोविन्दभाष्यपीठकटिप्पण्यां द्वितीयः कौमोदकीपादो व्याख्यातः ॥ २ ॥

# तृतीयः पादः ।

अथ स एष भगवान् सर्वेश्वरः पुरुषोत्तमसमाभ्यधिकः परावान् जन्मादिषड्भावविकारशून्यो देवताविशेषो भवतीति प्रतिपत्तव्यम् । "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्ताद्विन्दाम देवं भुवनेशमीड्यम्", "न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च," "न तस्य

---

ॐ नमः श्रीकृष्णाय विघ्नच्छिदे ।

नित्यानन्दविज्ञानमूर्त्तिर्नित्यधामपार्षदलीलः सर्वेश्वरो ज्ञानभक्तिभ्यां प्रसन्नः स्वपर्य्यन्तं सर्वं स्वभक्ताय ददातीति पादाभ्यां साधितोऽर्थस्तदा स्थैर्य्यमासीद्यद्येतद्विरोधिनः सर्वदैवतैक्यादिवादिनो निवर्त्तेरन्निति तन्निवर्तकस्तृतीयश्चक्रपादोऽयमारभ्यते—अथेत्यादिना । स पूर्ववर्णित एषोऽनुभवपदवीमारूढः । परावान् पराख्यस्वरूपशक्त्या नित्यमुपेतः। षडिति । जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यतीति भावविकाराः

कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इत्यादिश्रवणात् ॥ १ ॥

स एष सर्वकारणभूतो भगवान् सर्वेषां मुमुक्षूणामुपास्यो न त्वन्यः कश्चित् "तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यते अयनाय", "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ", "अमृतस्यैष सेतुः" इत्यादिश्रुतेः । स्मरन्ति चेत्थं मुनयः—"ईश्वरो भगवान् विष्णुः परमात्मा सनातनः। शास्ता चराचरस्यैको यतीनां परमा गतिः । ध्यायतेऽर्चयते योऽन्यं विष्णुलिङ्गं समास्थितः। कल्पकोटिशतेनापि न गतिस्तस्य विद्यते:"

---

षट् । देवताविशेषः स्वान्यनिखिलदेवाराध्या देवता । न तस्येति । कार्यं करणं जन्यमिन्द्रियम् । नैवेति । येनानुमितिरुत्पद्यते तल्लिङ्गं तस्य नास्तीति श्रुत्येकमयः सः । जनितेति । 'जनिता मन्त्रे' इति सूत्रेण णेर्लोपाज्जनयितेत्यर्थः । स्फुटमन्यत् ॥ १ ॥

उक्तं देवताविशेषत्वं मोक्षदातृत्वेन धर्मेण द्रढयति । स एष इति । न त्वन्यो रुद्रादिः । तमेवेति । पुरुषसूक्ते । तं विष्णुमेव । विदित्वा ज्ञात्वोपास्य च । तमेवैकमिति मुण्डके । ते परमात्मा ममेवैकं सर्वाध्यक्षं जानथ वित्त ध्यायत च यूयम् । अन्यास्तदन्यदेवताविषया वाचो विमुञ्चथ । यदेषोऽमृतस्य मोक्षस्य सं-

इति, "तमेकं बहुधात्मानं प्रादुर्भूतमधोक्षजं। नान्यभक्ताः क्रियावन्तो यजन्ते सर्वकामदम्", इति "तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम्। ध्यायंस्तुवन्नमस्यंश्च यजमानस्तमेव च॥ अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम्। लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःखातिगो भवेत्। एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः" इति॥ २॥

एवमेव स्वयमप्युपदिशति "मय्येव मन आधत्स्व मयि बुद्धिं निवेशय। निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः," "दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इत्यादि

---

तुराश्रयभूत इत्यर्थः। ईश्वर इत्यादि भारते। विष्णुलिङ्गम्। बाह्यमाभ्यन्तरं च वैष्णवचिन्हं समास्थितः संश्रितः। गृहीतवैष्णवदीक्ष इत्यर्थः। विष्णुं हित्वान्यदेवोपासनायां महापराधापत्तेः। कदाचिदपि तस्य न गतिरित्यर्थः। तमेकमिति। नान्यभक्ता एकान्तिनः क्रियावन्तो वैष्णवाचारविशिष्टाः। तमेव चेति। सर्वदुःखातिगो लिङ्गपर्यन्तक्लेशमुक्तः। एष्वेवैकशब्दाभ्यां मोक्षाय तस्यैवोपास्यता तस्यैव मोक्षदातृता च दृढा॥ २॥

एवमेवेति। यथा श्रुत्या मुनिभिश्चोक्तं तथा सर्वेश्वरोऽप्याहेत्यर्थः। मय्येवेति। श्रीगीतासु। मय्येव निवसिष्यसि मत्सामीप्यं गमिष्यसीत्यर्थः। चतुर्विधा इति। नारायणीये। एकान्तिनो

"चतुर्विधा मम जना भक्ता एव हि ते स्मृताः॥ तेषा-मेकान्तिनः श्रेष्ठास्ते वै चानन्यदेवताः॥ अहमेव गतिस्तेषां निराशीः सर्वकर्मणाम्। ये तु शिष्टास्त्रयो भक्ताः फल-कामा हि ते मताः॥ सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु मोक्षभाक्। ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृ-ताः॥ प्रतिबुद्धा न सेवन्ते मामेवैष्यन्ति यत्परम्। भक्तं प्रति विशेषस्ते एष पार्थानुकीर्त्तितः" इति च। तस्मात् सर्वेश्वरो विष्णुरेव मुमुक्षुभिर्ध्येय इति॥ ३॥

---

मदेकपुरुषार्थाः। निराशीषि निष्कामतया कर्त्तव्यानि सर्वाणि स्वविहितकर्माणि येषां ते, लोकसंग्रहाय ये गौणकाले कर्माणि कुर्वन्ति मद्भक्तिं तु तात्पर्येणेति भावः। ये त्विति। त्रय आर्त्तादयः। च्यवनधर्माणो विनाश्युपासनोपलब्धफलाः। प्रतिबुद्धो मदेकान्ती स्वरूपज्ञः। अन्या गणेशादयः। पार्थ हे अर्जुन। सर्वेश्वरो विष्णुरेवेति। 'मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः' इति हरिवंशे घण्टाकरणं प्रति शिवोक्तेः। ननु शिवादीनां च मुक्तिदत्वं क्वचित् स्मर्य्यते। सत्यम्। ते हि लिङ्गान्यात् क्लेशान्मोक्षं प्रयच्छन्त्येव, विष्णुस्तु लिङ्गादपि मोचयतीति सर्वं समञ्जसम्। अन्यथोक्तं शिववचनं पीड्येत। माया खलु विष्णोरेव शक्तिः। स हि स्वप्रपन्नेषु प्रसन्नस्तेभ्यस्तामपसारयति न त्वन्येषां तत्र शक्तिर्दैवीत्यादितद्वाक्यात्॥ ३॥

परे तु नावमन्तव्याः—"हरिरेव सदाराध्यः सर्वदे-वेश्वरेश्वरः । इतरे ब्रह्मरुद्राद्या नावज्ञेयाः कदाचन"इति स्मृतेः ॥ ४ ॥

अत्र केचिदाहुः—सर्वेश्वरो विष्णुर्देवताविशेष इति नोपयुक्तम् । "इष्टापूर्त्तं बहुधा जायमानं विश्वं बिभर्त्ति भुवनस्य नाभिः", "तदेवाग्निस्तद्वायुस्तत् सूर्यस्तदु चन्द्रमाः","अग्निः सर्वा देवताः" इत्यादिश्रुतिषु, "येऽप्य-न्यदेवताभक्ता यजन्ते श्रद्धयान्विताः। तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" इत्यादिस्मृतिषु च सर्वकर्मसंराध्यानां सर्वासां

---

नन्वेवं विष्णुरेव चेत् सर्वोत्तमो मुक्तिदस्तर्हि तदुपासकै-स्तदन्या देवता अनादरणीयाः नृपपार्षदैरिव तदमात्यादय इति चेत्तत्राह—परे त्विति । परे ब्रह्मरुद्रादयो नावमन्तव्याः किन्तु तदीयत्वेन सत्कार्या एवेति भावः । हरिरेवेति पाद्मे ॥ ४ ॥

एवं विष्णोरेव पारमैश्वर्यादि साधितम् । अथ तत्प्रतिपक्षं सर्वदैवतैक्यवादं निराकर्त्तुं तन्मतं तावदनुवदति—अत्र केचिदि-ति । इष्टेति । बहुधा जायमानमिष्टापूर्त्तं यद्ब्रह्म विभर्त्ति पालयति । इष्टं ज्योतिष्टोमादि । आपूर्त्तं कूपारामादि । विश्वं सर्वं च यद्बि-भर्त्ति धत्ते । यतो भुवनस्य नाभिराश्रयभूतम् । किंरूपं तद्ब्रह्मेत्य-पेक्षायां—तदेवाग्निरिति स्फुटं ब्रह्मैव 'अग्निरेव च सर्वा देवताः' इ-त्युक्तेः । सर्वदेवतैक्यमनेनावगतं सिद्धान्ते तु स्वशक्तिद्वारा ब्र-

देवतानामेकत्वावगमात् तासां सर्वासां पारम्यश्रुतेश्च । तस्मादेकैव देवता कर्मभेदैराराध्यनामभेदान् धत्ते इत्यतो विष्णोरेव पारतम्यमिति रिक्तं वचः ॥ ५ ॥

मैवम् । "चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो अजायत । श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत", "नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणात्प्रजापतिः प्रजायते नारायणादिन्द्रो जायते नारायणादष्टौ वसवो जायन्ते नारायणादेकादश रुद्रा जायन्ते नारायणाद्द्वादशादित्या जायन्ते" इत्यादिश्रुतिषु, "ब्रह्मा शम्भुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः । एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा ॥ जगत्कार्य्यावसाने तु वियुज्यते च तेजसा । वितेजसश्च ते सर्वे पञ्चत्व-

---

ह्मणः सर्वदेवतारूपत्वम् । पूर्वत्र निखिलदेवतामुखत्वादग्नेः सर्वदेवतात्वं परत्रोपचरितमिति बोध्यम् । तेऽपीति । श्रीगीतावाक्यं प्राग्व्याख्यातम् । पारतम्यश्रुतेश्चेति । तत्तत्प्रकरणेष्विति द्रष्टव्यम् । तस्माद्विष्णोरेव तदिति निरस्तम् ॥ ५ ॥

चन्द्रमा इति पुरुषसूक्ते । चक्षोरिति चक्षुषः । नारायणादित्याथर्वणिकानां नारायणोपनिषदि । ब्रह्मा शम्भुरिति विष्णुधर्मे । पञ्चत्वं मरणम् । सर्वासामित्यादि । स्थानविशेषोत्पत्तिकत्वादिना देवतानां मिथो भेदः । नारायणत्वेन परेशस्य ता-

मुपयान्ति च" इत्यादिस्मृतिषु च सर्वासां देवतानां परेशस्य च मिथोभेददर्शनात्ताभ्यस्तस्य पारम्यावगमाच्च। सर्वदेवतासामानाधिकरण्यं तु तदायत्तवृत्तिकत्वादिभिरुपचर्य्यते। इतरथा "तमीश्वराणां परमं महेश्वरम्" इत्यादिश्रुतीनां, "देवान् देवयजो यान्ति पितॄन् यान्ति पितृव्रताः। भूतान् यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम्" इति फलभेदस्मृतेश्च व्याकोपापत्तिः। एवं सति सर्वासां पारम्यश्रवणमापेक्षिकं स्तुतिपरं वा भविष्यतीति ॥ ६ ॥

अपरे त्वाहुः। मास्तु सर्वदेवतैक्यं, ब्रह्मविष्णुरुद्राणां त्रयाणामैक्यं तु वर्त्तते। "यो वै विष्णुः स वै रुद्रो यो रुद्रः स पितामहः। एका मूर्त्तिस्त्रयो देवा रुद्रविष्णुपितामहाः॥ वरदा लोककर्त्तारो लोकनाथाः स्वयम्भुवः। अर्धनारीश्वरास्ते तु व्रतं तीव्रं समास्थिताः॥"

---

भ्यो भेदः तेनैव पारम्यं च। इतरथेति। तदायत्तवृत्तिकत्वेन तद्व्याप्यत्वेन शक्तिमतस्तस्मात्तदनातिरेकेण च सामानाधिकरण्यानङ्गीकारे मुख्याद्वैतस्वीकार इत्यर्थः। देवानिति श्रीगीतासु। एवमिति। आपेक्षिकं तत्तदन्यावरापेक्षमित्यर्थः॥ ६॥

सर्वदेवतैक्यवादिनि निरस्ते त्रिदेव्यैक्यवादी प्रत्यवतिष्ठते—मास्त्वित्यादिना। यो वै इति हरिवंशे। स्वयंभुवोऽजाख्यत्वात्। ब्रह्मा नारायण इत्यादिकं श्रीवैष्णवे दृष्टम्। ब्राह्मणा इति

"ब्रह्मा नारायणाख्योऽसौ कल्पादौ भगवान् यथा। प्रजाः ससर्ज भगवान् ब्रह्मा नारायणात्मकः॥ ततः स भगवान् विष्णू रुद्ररूपधरोऽव्ययः। कालाग्निरुद्रेऽरूपो सौ भूत्वा सर्वहरो हरिः॥ सर्गस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम्॥ स संज्ञां याति भगवानेक एव जनार्दनः" इत्यादिस्मृतिप्रामाण्यात्। आह चैवं मार्कण्डेयं प्रति रुद्रः—"ब्राह्मणाः साधवः शान्ता निःसङ्गा भूतवत्सलाः। एकान्तभक्ता अस्मासु निर्वैराः समदर्शिनः॥ सलोकालोकपालास्तान् वन्दन्त्यर्चन्त्युपासते। अहं च भगवान् ब्रह्मा स्वयं च हरिरीश्वरः॥ न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते" इति। तस्मात्त्रयाणामैक्यमास्थेयमिति चेत्॥ ७॥

मैवम्। "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्राहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शर-

---

द्वादशस्कन्धे। अस्मासु त्रिषु देवेषु। अहं चेति। अहं च ब्रह्मा च स्वयं हरिश्च वयं तान् वन्दामहेऽर्चयाम उपास्महे इत्यर्थः। तत इति। मयि रुद्रे अच्युते विष्णौ अजे चतुर्मुखे भिदामण्वीमपि न चक्षते पश्यन्ति। तस्मादुक्तवचनकदम्बाद्धेतोः। आस्थेयं स्वीकार्य्यम्॥ ७॥

मत्याचष्टे—मैवमित्यादिना। यो ब्रह्माणमित्यादि काठके।

णमहं प्रपद्ये" इति, "नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते" इत्यादि, "यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्" इति चैवमादिश्रवणात् । स्मृतिश्च—"प्राहुरादित्यवर्णं तं पुरुषं तमसः परम् । बृहन्तं सर्वगं देवमीशानं वरदं प्रभुम्" इत्युपक्रम्य "ततो ब्रह्मा समभवत् स तस्यैव प्रसादजः । क्रोधाविष्टस्य संजज्ञे रुद्रः संहारकारकः ॥ एतौ तौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदा दर्शित पन्थानौ सृष्टिसंहारकारकौ ॥ निमित्तमात्रं तावत्र सर्वप्राणिप्रवर्त्तकौ । सब्रह्मकाः सरुद्राश्च सेन्द्रा देवा महर्षिभिः ॥ अर्चयन्ति सुरश्रेष्ठ देवं नारायणं हरिम् । यद्ब्रह्मा ऋषयश्चैव स्वयं पशुपतिश्च यत् ॥ हव्यं कव्यं च सततं विधियुक्तं प्रयुञ्जते । कृत्स्नं च तस्य देवस्य चरणावुपतिष्ठति ॥ भविष्यतां वर्त्ततां च भूतानां चैव भारत । सर्वेषामग्रणीर्विष्णुः सेव्यः पूज्यश्च नित्यशः" इत्याद्या । शिवोऽपि "स्वयं च हरिरीश्वरः" इति हरेरेव सर्वेश्वरत्वमदर्शयत् ॥ ८ ॥

---

प्राहिणोति मनसैव पाठयति । यमिति ऋचि भगवद्वाक्यम् । यं जीवमहं कामये इच्छामि तमुग्रं रुद्रं करोमि । स्फुटमन्यत् । प्राहुरित्यादिकं नारायणीये । एषु वाक्येषु विष्णोः पारमैश्वर्यं विस्पष्टम् । ब्रह्मरुद्रयोस्तदुपासकत्वं च ॥ ८ ॥

अथापि "यत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः सेशं पुनात्यन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः" इति स्मृत्या तु निर्णीतं तत्, अभेदोक्तयस्तु तदायत्तवृत्तिकत्वादिभिः संगच्छन्ते "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः । विष्णुः पुरुषरूपेण परियाति त्रिशक्तिधृक्॥ ब्रह्मा शम्भुस्तथैवार्कः"इत्यादिस्मृत्यानुगुण्यात् । तस्माद्विष्णुरेव सर्वेश्वर इति सिद्धम् ॥ ९ ॥

केचित्त्वेवं समादधते। साक्षाद्विष्णुरेव चतुर्मुखत्वमुग्रत्वं चाङ्गीकृत्य क्वचित् सृजति संहरति चेति पुराणेषु निरूप्यते, तद्दृष्ट्या वा तदभेदोक्तयः प्रवर्त्तेरन्।

---

न चायमाधुनिको निर्णयोऽपि तु पुरातन एवेत्याह—अथापीति । प्रथमस्कन्धे। सेशं साशिवं जगत् । अन्यत् प्रकटार्थम् । तर्ह्यभेदवचसां का गतिस्तत्राह-अभेदोक्तयस्त्विति । सृजामीति द्वितीये ब्रह्मवाक्यम् । तन्नियुक्ता विष्णुना प्रवर्त्तिताः ॥ ९ ॥

सङ्गत्यन्तरमाह—केचित्त्विति। पुराणेषु वैष्णवादिषु । तथापीति । तस्य चतुर्मुखस्य तस्योग्रस्य चेत्यर्थः । बुद्धवादिवस्यायं भावः । यदा हरिरेव ब्रह्मा रुद्रश्च भवति तदापि तद्वेशस्य तत्स्वभावस्योपासना न मोक्षकरी तद्वेशोपासका हि विष्णुविद्वेषिणो जगदुद्वेजकाः स्वोपास्योद्वेजकाश्च दृष्टाः, विष्णुवेशोपासकास्तु ब्रह्मादिसत्कारिणो जगदनुरञ्जकाश्च । एतदभिप्रेत्योक्तं 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते ।

तथापि तस्य तस्य चोपासनं बुद्धवन्मुमुक्षुभिर्न विधेयं "तमेव विदित्वा" इत्यादिश्रुतिस्मृतिभ्यः। इत्थं च हरिवंशोक्तहरिहरस्तोत्रमपि व्याख्यातमिति ॥ १० ॥

अपरे त्वाहुः। मास्तु त्रयाणामैक्यं किन्तूभयोर्हरिहरयोस्तु तद्वर्त्तते श्वेताश्वतरोपनिषदि हररुद्रादिशब्दवाच्यस्य सहस्रशीर्षादिशब्दैरभिधानात् "शिवस्य हृदयं विष्णुः विष्णोश्च हृदयं शिवः। यथा शिवमयो विष्णुरेवं विष्णुमयः शिवः ॥ यथान्तरं नश्यामि तथा मे स्वस्तिरायुषि" इति स्मृतेश्च। एवं हरिहरस्तोत्राच्च तदैक्यं निश्चितम्।

---

स्थित्युदये हरिविरञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः' इति। एवमुक्तसौहार्दभरेणैव श्रीरामचन्द्रकविराजैः प्रह्लादध्रुवरावणानुजवालिव्यासाम्बरीषादयो विष्णूपासनयैव तेपि भवादीनां प्रिया जज्ञिरे। येमेरावणवारण्यौद्रकवकक्रौञ्चान्धकाद्या अमी यद्भृत्या न च तत्प्रिया न च हरेस्तस्माज्जगद्वैरिणः। शिवो भवतु वैष्णवः किमजितोऽपि शैवः स्वयं तथा समतयास्तु वा विधिहरादिमूर्त्तित्रयं विलोक्य भववेधसोः किमपि भक्तवर्गक्रमं प्रणम्य शिरसापि तान् वयमुपेन्द्रदासान् स्तुमः इति। तथा वा भेदपक्षेपि विष्णुवेशस्यैवापासना मुक्तिदेति॥१०॥

एवं त्रिदेव्यैक्यवादिनि निरस्ते हरिहरैक्यवादी प्रत्यवतिष्ठते-मास्त्वित्यादिना। हररुद्रादिशब्दवाच्यस्य वस्तुनः शिवस्येति। भारते। अन्तरं भेदम्। एवमिति। हरिहरस्तोत्रं श्रीहरि-

"शिवस्य श्रीविष्णोर्य इह खलु नामादि सकलं धिया भिन्नं पश्येत स खलु हरिनामाहितकरः" इति तद्भेददर्शिनो नामापराधरूपमहादोषश्चात एव स्मृतः। सकलमिति हरिहरस्तोत्रोक्तं चक्रत्रिशूलादि ग्राह्यं, तदपि धिया भिन्नं यः पश्येदित्यर्थः। तस्माद्विष्णुशिवयोरद्वैतमिति चेत्। नैव तत् समीचीनं पूर्वोक्तश्रुतिस्मृतिभ्यः। यत्तु हररुद्रादिशब्दवाच्यस्य सहस्रशीर्षादिशब्दैरभिधानात्तयोरैक्यमित्युक्तं, तन्न। तस्यां हरादिशब्दैः विष्णोरेवाभिधानात् ॥ ११ ॥

सहस्रनामस्तोत्रे शर्वशिवशम्भुरुद्रादिशब्दा विष्णुनामानि पठ्यन्ते। तेषां तत्र प्रवृत्तौ निमित्तानि चोक्तानि

---

वंशे प्रसिद्धम्। तत्र तयोः सपरिकरयोरद्वैतं कण्ठतः पठितम्। शिवस्य श्रीविष्णोरिति पाद्मे सनत्कुमारवाक्यम्। अत इति। अभिन्नयोर्भेददर्शनादेव हेतोरित्यर्थः। यत्त्विति। सहस्रशीर्षादिविष्णुरर्जुनादिप्रत्यक्षश्च हरस्तु त्रिनेत्रो वृषभध्वजो दुर्गापतिः ख्यातः यच्च क्वचित् सहस्रशीर्षा हरोऽपि पठ्यते तत् खलु तदन्तर्यामिविष्णुपरतयैव नेयम् ॥ ११ ॥

उक्तं हेतुमुपपादयति-सहस्रेति। वैशम्पायनोक्ते इति बोध्यम्। तत्रेति। रुद्रपिनाकिकृत्तिवासःशब्दानां येन निमित्तेन शितिकण्ठे प्रवृत्तिस्ततोऽन्येन तु विष्णौ प्रायेणोभयत्र योगरूढिरियम्। ईशानमहादेवशिवहरब्रह्मेन्द्रशब्दाः शितिकण्ठादिषु योगेन विष्णौ तु प-

ब्रह्माण्डे—"रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः। ईशनादेव चेशानो महादेवो महत्त्वतः ॥ पिबन्ति ये नरा नाकं मुक्ताः संसारसागरात् । तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः ॥ शिवः सुखात्मकत्वेन सर्वसंरोधनाद्धरः। कृत्त्यात्मकमिदं विश्वं यतो वस्ते प्रवर्त्तयन्॥ कृत्तिवासास्ततो देवो विरिञ्चश्च विरेचनात् । बृंहणाद्ब्रह्मनामासावैश्वर्य्यादिन्द्र उच्यते ॥ एवं नानाविधैः शब्दैरेक एव त्रिविक्रमः। वेदेषु स पुराणेषु गीयते पुरुषोत्तमः" इति ॥ १२ ॥

"नारायणादीनि विनाऽन्यानि नामानि स्वनामानि द्रुहिणादिभ्यो ददौ" इति चोक्तं स्कान्दे । "ऋते नारायणादीनि नामानि पुरुषोत्तमः । प्रादादन्यत्र भगवान् राजेवर्त्ते स्वकं पुरम्" इति। ब्राह्मे च "चतुर्मुखः शतानन्दी ब्रह्मणः पद्मभूरिति। उग्रो भस्मध-

---

हायोगेन प्रवर्त्तन्ते, मण्डलाधिपेषु सार्वभौमेषु च यथा भूपादिशब्दास्तेन तेनेति बोध्यम् । रुजमिति । रुजं संसारव्यथां द्रावयतेऽपनयति नाकं परमानन्दं पिबन्त्यनुभवन्ति । कृत्त्यात्मकं चर्ममयं वस्ते आच्छादयति । विरेचनात् प्रधानादितत्त्वानां तमः शब्दितायाः मूलप्रकृतेः प्रकटनादित्यर्थः ॥ १२ ॥

राजेवेति । नृपो यथा स्वावासं विनान्यानि नगराणि स्वा-

रो नग्नः कपालीति शिवस्य च। विशेषनामानि ददौ स्वकीयान्यपि केशवः" इति। स्वकीयानि रुद्रविरिञ्चादीनि च॥ १३॥

ब्रह्मवादिनो वदन्तीत्युपक्रान्ते ब्रह्मैव तैः शब्दैस्तस्यामभिधीयते। इतरथा "या ते रुद्र शिवा तनुरघोरा पापकाशिनी। महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्त्तकः॥ सुनिर्मलामिमां शान्तिमीशानो ज्योतिरव्ययः" इत्यादिविशेषोक्तिव्याकोपः। कपालिनस्तु शिवस्य घोररूपता मुमुक्षुहेयता च स्मृता-"मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ। नारायणकलाः शान्ता भजन्ति ह्यनसूयवः" इत्यादौ॥ १४॥

'शिवस्य हृदयं विष्णुः" इत्यादिषु तु तयोरछद्म नि-

---

माखेभ्यो ददाति तद्वत्॥ १३॥

तस्यां हरादिशब्दैर्विष्णोरेवाभिधानादिति पूर्वोक्तमिदानीं प्रतिपादयति—ब्रह्मेत्यादिना। ब्रह्मोपक्रमात्ते शब्दा ब्रह्माभिधायिन इत्यर्थः। विपक्षेऽनुपपत्तिमाह—इतरथेति। विशेषोक्तीति। अघोरतनुत्वसत्त्वप्रवर्तकत्वशान्तेशानत्वरूपवैष्णवधर्मावेदकवाक्यबाधः स्यादित्यर्थः। ननु रुद्रेपि ते धर्मा नेया इति चेत्तत्राह—कपालिनास्त्विति। मुमुक्षव इति। प्रथमस्कन्धे प्रकटार्थम्॥ १४॥

शिवस्येति। तयोर्हरिहरयोः विरोधं भनक्ति—अपरे त्विति।

वेद्यते न तु स्वरूपाभेदः प्रागुक्तश्रुत्यादिभ्यः। "शिवस्य श्रीविष्णोः" इत्यादौ तु तस्य स्वतन्त्रदेवतात्वदृष्टिर्निषिद्धा तद्वृत्ताधिपत्याभिधानत्वेन तदायत्तवृत्तिकत्वात्तद्रूपत्वं वेति न कापि क्षतिः। अपरे त्वाहुः—नामादीत्यादिना स्वरूपं च तदभिन्नं यः पश्येदित्यर्थः "ब्रह्माणं शितिकण्ठं च" इत्यादिपूर्वोक्तेः "यस्तु नारायणं देवम्" इत्यादिवक्ष्यमाणाच्च। तस्मात् स्वरूपैक्यं तयोर्नास्तीति सिद्धं श्रीविष्णोरेव पारम्यम्॥ १५॥

अन्ये त्वाहुः। मास्तु त्रयाणामभेदो द्वयोर्वा, किन्तु त्रयो देवाः समा इत्यङ्गीकार्य्यम्-"यथा ससर्ज देवोऽसौ देवर्षिपितृदानवान्। मनुष्यतिर्य्यग्यक्षादीन् भूव्योमसलि-

---

श्रीवैष्णवा इति बोध्यम्। अग्रे धर्मव्रतेत्यादौ शिवनामापराध इति। मङ्गलरूपस्य नाम्नोऽपराध इत्यर्थः। यद्वा, शिवस्य मङ्गलरूपस्य विष्णोर्नामादि यो धियापि भिन्नं पश्येत् स नामाहितकरस्तन्नामादेस्तत्स्वरूपाभिन्नत्वादिति। तथा च न काचिच्छङ्केति। यत्तु क्वचित्पुराणे रुद्रस्य पारम्यं सहेतुकमुक्तं तदुपेक्ष्यं तस्य तामसत्वात् सात्त्विकपुराणेन बाधितत्वाच्चेति। मात्स्यादावत्रगतं निर्णीतं चैतद्वेदान्तस्यमन्तकादौ। भारतीयं तत्त्वग्रे निरसनीयम्॥ १६॥

त्रिदेवीसाम्यं निराकर्त्तुं तदादावुपन्यस्यति—अन्ये त्विति त्या-

लौकसः ॥ यद्गुणं यत्स्वभावं च यद्रूपं च जगद् द्विज । सर्गादौ सृष्टवान् ब्रह्मा तन्ममाचक्ष्व विस्तरात् ॥ चराचरस्य सर्वस्य रुद्रः संहारकारकः । ततः कालाग्निरुद्रोऽसौ संहरत्यखिलं जगत् ॥ न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम्" इत्यादिस्मृतिषु कार्य्यत्रये त्रयाणां निरपेक्षहेतुत्वप्रतीतेः । ततश्च विष्णोरेव पारमैश्वर्य्यनिर्णयो नोपयुक्त इति । नैतच्चतुरस्रम्, पूर्वोक्तश्रुतिस्मृतिभ्यः ॥ १६ ॥

"न तत्समश्चाभ्यधिकश्च दृश्यते," "न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः", "न त्वत्समश्चाभ्यधिकः कुतोऽन्यः", "स्वयं त्वसाम्यातिशयस्त्र्यधीशः","नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् ।

---

दिना । यथा ससर्जेत्यादिकं श्रीवैष्णवे दृष्टं प्रस्फुटार्थम् । कार्यत्रये सृष्टिसंहारपालनलक्षणे । निराकरोति—नैतदिति । चतुरस्रं पूर्णमित्यर्थः ॥ १६ ॥

न तदिति न तस्येति च श्वेताश्वतराणां श्रुतिः । न त्वदिति । श्रीगीतास्वर्जुनवाक्यम् । स्वयमिति । तृतीयस्कन्ध उद्धववाक्यम् । नित्यं हीति नारायणीये । विधिरुद्रादिप्रधानं जगदानित्यम् । तत्रैको वासुदेवो विष्णुस्तु नित्य इत्यर्थः । अत उक्तं ब्राह्मे ब्रह्मणा 'नाहं शिवो न चान्ये च तच्छक्त्येकांशभागिनः । बालः

ऋते तमेकं पुरुषं वासुदेवं सनातनम्'' इत्यादिश्रुतिस्मृतिषु साम्यप्रतिषेधाच्च ॥ १७ ॥

सर्वेश्वरो हरिरेव सृष्टिसंहारौ करोति चतुर्मुखकपालिनौ तु तद्वश्यौ तयोर्निमित्तमात्रमेव "निमित्तं परमीशस्य विश्वसर्गनिरोधयोः । हिरण्यगर्भः शर्वश्च कालस्यारूपिणस्तव ॥ ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च । निगृह्य हरते यस्मात्तस्माद्धरिरिहोच्यते" इत्यादिस्मरणात् ॥ १८ ॥

---

क्रीडनकैर्यद्वत् क्रीडतेऽस्माभिरच्युतः' इति ॥ १७ ॥

स्वस्वकार्ये नैरपेक्ष्यं ब्रह्मशिवयोर्निराकरोति-सर्वेश्वर इति । निमित्तमिति । श्रीदशमे उद्धवोक्तिः । ब्रह्माणमिति । हरते स्वाभिमते कार्ये नियोजयति । निगृह्य नियम्य । आदिना निमित्तमात्रं तावत्रेत्यादिनारायणीयवाक्यं गृह्यते ॥ १८ ॥

श्रीविष्णुपुराणेऽप्येतदभिप्रेत्याह श्रीमान् पराशरः —"जुषन् रजोगुणं तत्र स्वयं विश्वेश्वरो हरिः। ब्रह्मा भूत्वाऽथ जगतो विसृष्ट्यै संप्रवर्त्तते ॥ सृष्टं च पात्यनुयुगं यावत् कल्पविकल्पना। सत्त्वयुग्भगवान् विष्णुरप्रमेयपराक्रमः ॥ तमोद्रेकी च कल्पान्ते रुद्ररूपी जनार्दनः। मैत्रेयाखिलभूतानि भक्षयत्यतिभीषणः" इति ॥ १९ ॥

तत्रैव रैवतं प्रति ब्रह्मा चैवमाह—"यस्य प्रसादादहमच्युतस्य भूतः प्रजासृष्टिकरोऽन्तकारी। क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्तात् ॥ मद्रूपमास्थाय सृजत्यजो यः स्थितौ च योऽसौ पुरुषस्वरू-

---

जुषन्निति। अत्युग्रपुण्यवता जीवेन रजोगुणं जुषन् तमाविश्य। ब्रह्मा भूत्वेति। तथा तादृशेन तेन द्वारा तमोद्रेकी (?) रुद्रो रूपं यस्य स रुद्ररूपी। रुद्रतयाविश्येति च व्याख्येयम्। भक्षयति संहरतीत्यर्थः ॥१९॥

उक्तमर्थं ब्रह्मवाक्येन पुष्णाति तत्रैवेत्यादिना। यस्य सर्वेश्वरस्य विष्णोः। प्रकटार्थमन्यत्। साक्षाद्विष्णुरेव कदाचिद्ब्रह्मा रुद्रश्च भवति यदि योग्यो जीवो न लभ्यते। योग्यजीवलाभे तु तं तमाविश्य स च स च भवतीति विष्णुपुराणे सिद्धान्तः। तत्र प्रथमः पक्षो ब्रह्मा नारायणाख्योसावित्यादिना दर्शितः। द्वितीयस्तु जुषन् रजोगुणं तत्रेत्यादिना। एवमेव संक्षिप्तभागवतामृते श्रीरूपचरणैर्निर्णीतम्—युगकोटि-

पी। रुद्रस्वरूपेण च योऽस्ति विश्वं धत्ते तथानन्तवपुः समस्तम्" इत्यादिना। तदेवं समाभ्यधिकशून्यत्वात् पारमैश्वर्य्यं श्रीविष्णौ सिद्धम्। तत्साम्यदर्शिनस्तु दोषः स्मर्य्यते—"यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः। समत्वेनाभिजानाति स पाषण्डी भवेद् ध्रुवम्" ॥ २० ॥

यत्तु भारतान्तर्गतौपमन्यवाख्याने श्रीकृष्णेन जाम्बवतीपुत्रार्थं तपसा रुद्रः समाराधितः, रुद्राङ्गेभ्यः सवि-

---

सहस्राणि विष्णुमाराध्येत्यादि। पद्मभवपक्षे दोषमाह यस्त्विति। पाषण्डी वेदबाह्यः। पुनस्त्रैलोक्यधातृत्वमाप्तवानिति शुश्रुमः—'मया सृष्टः पुरा ब्रह्मा मद्यज्ञमयजत् स्वयम्। ततस्तस्य वरान् प्रीतो ददावहमनुत्तमान्॥ मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च। विश्वरूपो महादेवः सर्वमेधे महाक्रतौ। जुहाव सर्वभूतानि स्वयमात्मानमात्मना॥ महादेवः सर्वमेधे महात्मा हुत्वात्मानं देवदेवो बभूव। विश्वांल्लोकान् व्याप्य विष्टभ्य कीर्त्या विराजते द्युतिमान् कृत्तिवासा' इत्येभिर्महाभारतवाक्यैः कर्मलब्धैश्वर्य्यकीर्त्तनाच्च तयोर्जीवत्वम्। एवं पाञ्चरात्रे च—'यो मोहाद्विष्णुमन्येन हीनदेवेन दुर्मतिः। साधारणं सकृद्ब्रूते सोऽन्त्यजो नान्त्यजोऽन्त्यज' इति। हीनेन विष्णवपेक्षया निकृष्टेन॥ २०॥

ननु रुद्रोऽपि विष्णुना नियम्य इति न संभवति, रुद्रपारमैश्वर्य्यसाधने कृष्णवक्तृकस्यौपमन्यवाख्यानस्य जाग-

ष्णूना देवानामुत्पत्तिरिति स्मरणात् पारमैश्वर्यं रुद्रस्य दुर्निवारमित्यज्ञाः कल्पयन्ति, तदतीव स्थूलम्। पूर्वोक्त-श्रुत्यादिभ्य एव रुद्रः खलु वाणयुद्धे भगवता पराभूत-स्तुष्टाव च मूलभूतं तं मोहितश्च मोहिनीवेषेण तेन मोचित-श्च वृककेशादितो ब्रह्मवधपातकाच्चेति स्मरणाच्च ॥२१॥

तस्मात् स्वेतरेषु सर्वेषु सकामेषु रुद्रोपासना स्थे-

---

रूकत्वात् । श्रीहरिवंशेऽपि शक्रेण सह युद्धार्थी कृष्णो रुद्रमेवं तुष्टाव-'अहं ब्रह्मा कपिलोऽथाप्यनन्तः पुत्राः सर्वे ब्रह्मणश्चाति-वीराः। त्वत्तः सर्वे देवदेव प्रसूता एवं सर्वेशः कारणात्मा त्व-मीड्य' इति ॥ तस्मादुभयोरभेदेन तौल्येन वा भाव्यम् । रुद्रस्यैव पारमैश्वर्यं तु साम्प्रतमिति चेत्तत्राह यारिवति । निरस्यति तदतीव स्थूलमिति । तत्र हेतुः पूर्वोक्तेति । वाणेति ॥ वाणयु-द्धपराभवादिकं श्रीभागवतादौ ख्यातम् । वृकः शकुनेः पुत्रः । आदिपदात् त्रिपुरयुद्धे रुद्ररथस्य पतनं तस्य वृषभवपुषा भग-वता पुनरुत्थापनं रुद्रे बलार्पणं च कृतमिति हरिवंशे विहितम् । ब्रह्मवधेति । रुद्रो ब्रह्मणः पितुः शिरश्चिच्छेद । तत्कपालं रुद्र-स्य लस्य लग्नं बहुतीर्थस्नानेनाऽपि न पपात । विष्णुप्रसादात्तु स्फुटिततत्कपालः स विशुद्धिमवापेति मात्स्ये प्रसिद्धम् । कर्मा-धीनैश्वर्यं च भारतोक्तं तस्य जीवत्वे लिङ्गं पुरोक्तम् । वराप्त-भूतपतित्वमनपहतपाप्मत्वं च तत्त्वे लिङ्गं वक्ष्यामः ॥२१॥

ननु विष्णुरेव चेत् सर्वेश्वरस्तदोपमन्यूपाख्या कथं संगता य-

म्ने मे स्वकीयस्य तस्य तथाराधनं ख्यापयंस्तदन्तर्यामिणमात्मानमसौ सत्करोतीति मन्तव्यम् । "अहमात्मा हि लोकानां विश्वेषां पाण्डुनन्दन । तस्मादात्मानमेवाग्रे रुद्रं संपूजयाम्यहम् ॥ मया कृतं प्रमाणं हि लोकः समनुवर्त्तते । प्रमाणानि हि पूज्यानि ततस्तं पूजयाम्यहम् ॥ न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय च । अत आत्मानमेवेति ततो रुद्रं भजाम्यहम्" इति नारायणीये भगवद्वाक्यादेव ॥ २२ ॥

---

श्र विष्णो रुद्राराधकता समाधिगता, तत्राह तस्मादिति । स्वकीयस्य स्वभक्तस्य । यथोग्रसेनादेः सत्कारस्ततत्प्रातिष्ठायै तथैष द्रष्टव्यः । अहमित्यर्जुनं प्रति कृष्णवाक्यम् । आत्मा प्रवर्त्तकोऽन्तर्यामीत्यर्थः । आत्मानं रुद्रमिति रुद्राविशिनं स्वामित्यर्थः । न त्वहमित्यादिपद्यत्रयान्तराले योऽसौ रुद्रः सोऽहमस्मीत्यादिना रुद्रस्य स्वाभेद उक्तः स कथं संगच्छेतेति चेत् । देवताबान्धवाः सन्तः सन्त आत्माहमेव चेत्यादिवत् प्रेमनिमित्तकः स इति गृहाण । साधुमात्रेषु चेत्तस्य तन्निमित्तकः सः किमुत साधुशिरोमणौ रुद्रे इति सन्तोष्टव्यम् । अन्यथैतौ तौ विबुधश्रेष्ठाविस्यादिपूर्ववाक्ये तवान्तरात्मेत्याद्यन्तिमवाक्ये च तस्य तन्नियम्यत्वोक्तिर्व्याकुप्येत । मया कृतं प्रमाणं हीत्युत्तरत्र लिखिष्यामः । न हि विष्णुरिति । 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः' इति श्रुतेः २२ ॥

• अत्र विश्वेषामन्तर्याम्यहमतस्तस्य यःपिण्डवदविविक्तं रुद्रावेशिनं मदंशमहं पूजयामि। रुद्रादयो देवाः पूज्या इति प्रमाणं मया कृतं तदन्यथा व्याकुप्येत, तदर्थमहं तान् पूजयामि। स्वोत्कृष्टस्याभावादेव तद्बुद्ध्याहं न कञ्चिद्भजामि, किन्तु तादृशं मदंशमहं भजामीति विस्फुटम्। ब्रह्मरुद्रादिसर्वान्तर्यामी विष्णुरिति तत्रैव रुद्रं प्रत्युक्तं ब्रह्मणा—"तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः। सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्"इति ॥ २३ ॥

तस्मात् स्वभक्तस्य रुद्रस्य सकामेषूपासनादृढना-

---

वाक्यार्थं संगमयति—अत्रेति। विष्णोरुद्राद्यन्तर्यामित्वं चरमवाक्येन प्रस्फुटयति तवान्तरात्मेति। एतेनैव—न ते गिरिशाखिललोकपाल विरिञ्चिवैकुण्ठसुरेन्द्रगम्यम्। ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्मनिरस्तभेदमित्यष्टमवाक्यं च व्याख्यातम्। त्वं हृदि परं ज्योतिर्ब्रह्म चिन्तितवानस्यतो विषापनयं शक्नोषि कर्त्तुमिति। अन्यथा वयं न तात प्रभवाम भूम्नीत्यादि नवमस्थगिरिशवाक्यविरोधः। तच्च ज्योतिर्वैकुण्ठस्याप्यगम्यमिति नायुक्तम्। द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपीत्यादिस्मृतेः ॥ २३ ॥

उपसंहरति तस्मादिति। तत् सत्कृतिस्तदर्थितेति दिवैः स्व-

यै ततसतकृतिस्तदर्थिता तेन कृतेति न तस्य पारमै·

---

पूजां याचितो विष्णुस्तान् पूज्यान् चकारेत्यादि वाराहे कथास्ति । वराह उवाच—एवं सृष्ट्वा जगत् सर्वं भगवान् भूतभावनः । विरराम ततः सृष्टिर्व्यवर्धत धरे तदा ॥ वृद्धायामथ सृष्टौ तु सर्वे देवाः सवासवाः ॥ सत्रैर्महाद्भिः सर्वत्र यजन्तः श्रद्धयान्विताः । तोषयामासुरत्यर्थं स्वं पूज्यं कर्त्तुमीप्सवः ॥ एवं तोषयतां तेषां बहुवर्षसहस्रके । काले देवस्तदा तुष्टः प्रत्यक्षत्वं जगाम ह ॥ अनेकबाहूदरवक्त्रनेत्रो महागिरेः शृङ्गमिवोल्लिखंस्तदा । उवाच किं कार्य्यमथो सुरेशो ब्रूतां वरं देववरा वरं वः॥ देवा ऊचुः । जयस्व गोविन्द महानुभाव त्वया वरं नाथ वरेण देवाः । मनुष्यलोकेऽपि भवन्तमार्यं विहाय तस्माद् भजतीह कश्चित् ॥ चन्द्रादित्यौ वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च । सर्वे भवन्तं शरणं गताः स्मः कुरुष्व पूज्यानिह विश्वमूर्त्ते ॥ एवमुक्तस्तदा तैस्तु महायोगेश्वरो हरिः । करोमि सर्वान् वः पूज्यानित्युक्त्वान्तरधीयत ॥ देवा अपि निजौकांसि गतवन्तः सनातनम् । स्तुवन्तः परमेशोपि त्रिविधं भावमास्थितः । एवं त्रिधा जगद्धाता भूत्वा देवान् महेश्वरः । आराध्य सात्त्विकं राजतामसत्वं त्रिधा स्थितः । सात्त्विकेन पठंद्रुदान् यजेद्यज्ञेन देवताः । आत्मनोवयवो भूत्वा राजसेनापि केशवः । स कालरूपिणं रौद्रं प्रकृत्या शूलपाणिनम् । आत्मनो राजसीं मूर्त्तिं पूजयामास भक्तितः ॥ तामसेनापि भावेन असुरेषु व्यवास्थितः । एवं त्रिधा जगद्धाता भूत्वा देवान्महेश्वरः । आराधयामास ततो लोकोऽपि त्रिविधोऽभवदिति ॥ तत्रैव प्रजाः सृजेति ब्रह्मणोक्तः सर्वेशं विष्णुं बहु स्तुत्वा रुद्र उवाच—ब्रह्मणाहं नियुक्तस्तु प्रजाः

श्वर्यम् ॥ २४ ॥

यत्र सामान्यविशेषाभ्यां प्रश्नोत्तरे भवेतां तत्रैव तन्निश्चीयते । यत्र विशेषेणैव ते स्यातां तत्र तात्पर्यान्तरं कल्पनीयमिति । यथा भारते—"किमेकं दैवतं लोके किं वाप्येकं परायणम् । स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ को धर्मः सर्वधर्माणां भवतः परमो

---

मृज इति प्रभो । तत्र ज्ञानं प्रयच्छस्व त्रिविधं भूतभावन ॥ विष्णुरुवाच । सर्वज्ञस्त्वं न संदेहो ज्ञानराशिः सनातनः । देवानां च परं पूज्यः सर्वदा त्वं भविष्यसि ॥ एवमुक्तः पुनर्वाक्यमुवाचोमापतिर्मुदा । अन्यं देहि वरं देव प्रसिद्धं सर्वजन्तुषु । मूर्तो भूत्वा भवानेव मामाराधय केशव । मां वहस्व स्वदेहेन वरं मत्तो गृहाण च । येनाहं सर्वदेवानां पूज्यः पूज्यतरो भवे ॥ विष्णुरुवाच । देवकार्यावतारेषु मानुषत्वमुपागतः । त्वामेवाराधयिष्यामि त्वं च मे वरदो भव । यत्त्वयोक्तं वहस्वेति देवदेव उमापते । सोऽहं वहामि त्वां देव मेघो भूत्वा शतं समाः ॥ एवमुक्त्वा हरिर्मेघः स्वयं भूत्वा महेश्वरम् । उज्जहार जलात्तस्माद्वाक्यं चेदमुवाच हेत्यादि । एवमन्यच्चान्यत्र द्रष्टव्यम् ॥ २४ ॥

पारतम्यनिर्णये निर्णायकाः सामान्यविशेषरूपप्रश्नोत्तरमयीं युक्तिं स्वीकुर्वन्ति, तस्या विष्णुपक्ष एव दृष्टत्वात् तत्रैव पारतम्यमिति योजयति यत्रेति । तदिति पारमैश्वर्यम् । प्रकटार्थमन्यत् ।

मतः । किं जपन् मुच्यते जन्तुर्जन्मसंसारबन्धनात्” इति युधिष्ठिरेण सामान्यतः परमं तत्त्वं पृष्टो भीष्मो विशेषेणोत्तरयति—“जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् । स्तुवन्नामसहस्रेण पुरुषः स ततोत्थितः” इत्यादिभिः । इह हि विष्णुरेव परमं तत्त्वं तद्भक्त्या संसारविनिवृत्तिरिति विशिष्योत्तरितम् । एवं तत्रैवान्यत्र बहुत्र सामान्यविशेषरूपप्रश्नोत्तराभ्यां भगवतो विष्णोरेव परतमत्वं निर्णीतं दृश्यते शास्त्रविस्तरभयान्नाऽत्र तन्निर्दिष्टम् ॥ २५ ॥

औपमन्यवाख्याने तु विशेषेणैव प्रश्नोत्तरयोः सत्त्वात्तत्र तात्पर्यान्तरं कल्पनीयम् । तच्च दर्शितमेव ।

---

अन्यत्र नारायणीयादौ । एवमेव श्रीविष्णुपुराणे—यन्मयं च जगद्ब्रह्म यतश्चैतच्चराचरम् । लीनमासीद्यथा यत्र लयमेष्यति यत्र चेति मैत्रेयेण सामान्यतः परतत्त्वं पृष्टः पराशरो ‘विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् । स्थिति संयमकर्त्तासौ जगतोऽस्य जगच्च य’ इति विशेषेणोत्तरयति । एवमेव श्रीगोपालतापन्यां च दृष्टम् ॥ २५ ॥

औपमन्यवेति । मोक्षधर्मे शिवमहिमानं ब्रूहीति युधिष्ठिरेण पृष्टो भीष्मस्तं पुण्डरीकाक्षः श्रीकृष्णो वक्ष्यतीत्यवोचत् । कृष्णस्तं सविस्तरं तमभाणीदिति विशेषेण ते द्वे स्थिते । इतरथेति । कृष्णेनार्चितस्य रुद्रस्य कृष्णादुत्कर्षे संमते समुद्र-

इतरथा समुद्रस्यापीश्वरतापत्तिः श्रीरामेण तत्पूजाया विधानात् ॥ २६ ॥

एवं क्वचिद्भगवत्पार्षदानां देवतान्तराराधनमपि तदाराध्यताख्यापनार्थं लीलारूपमेव, न हि तत् सिद्धान्तकक्षामारोक्ष्यति ॥ २७ ॥

महेशादिसमाख्या तु महेन्द्रादिसमाख्यावद् विफलैव बोध्या । द्रोणपर्वान्ते रुद्रस्य यच्छतरुद्रीयार्थत्वमुक्तं तद्धि तदन्तर्यामिपरम् । अन्यथाऽसङ्गतेः । यश्चान्ते द्रौणिना युध्यमानस्य रुद्रस्य तेजोमरीचिभ्यः केशवानां बहूनां प्रादुर्भावः स्मर्यते, सोऽपि नायुक्तः, तदन्तः—

---

तस्यापीति । लङ्कामार्गार्थी श्रीरामः सिन्धुमानर्च, अदत्तमार्गं तं तिरश्चकारेति श्रीरामायणे कथास्ति ॥ २६ ॥

एवमिति । यथा भगवतस्तथेत्यर्थः । नन्दादिभिरम्बिकावने साम्बिकः शिवो ऽभ्यर्चितः । गोपकन्याभिः कात्यायनी । श्रीराधास्वामिन्या तु रविरिति तदन्तर्यामी कृष्ण एव तैस्ताभिश्चाभ्यर्च्यते । तन्मतमनुसृत्य तदीयत्वेन तदाराधनं वेति न तत्र तत्र पारम्यं श्रद्धातव्यम् ॥ २७ ॥

यत्तु महेशमहादेवसमाख्यया रुद्रस्य पारमैश्वर्यं शैवाः कल्पयन्ति तत् प्रत्याचष्टे महेशादिति । इन्द्रशब्दः खलु स्वार्थस्य पारमैश्वर्यं ब्रूते इति धात्वर्थानुसारादेवं स पुनर्महच्छब्देन विशेषितो नातिशयं तत्र प्रत्याययेत्तदभावादेव । शताश्वमेधया-

स्थितस्य तस्य तत्साहाय्यातुरस्य तथाविर्भावात् । त-स्माद् विष्णुरेव सर्वाराध्यो रुद्रस्तु तदाराधको जगदा-राध्यश्चेति विष्णावेव तन्निश्चितम् ॥ २८ ॥

इह कश्चिदेवं मन्यते । ब्रह्मविष्णुरुद्रा यत्कार्याणि भवन्ति तत् सदाशिवाख्यं मूलं तत्त्वं भवेत् । कैवल्यो-पनिषदि—"अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भ-

---

जिनो जीवस्येन्द्रत्वं सर्वाभ्युपगतम् । तस्मान्महेन्द्रसमाख्या यथा व्यर्था तथा महेशसमाख्यापि । पूर्वोक्तैः श्रुत्यादिनित्यस्य श्रुत्यादिभिस्तस्य जीवत्वविनिश्चयान्न सा मुक्तप्रग्रहया वृत्त्या तस्य पारमैश्वर्यं शक्नुयादभिधातुं किन्त्वन्यदेवापेक्षया तदै-श्वर्ये महत्त्वं ब्रूयादेवेति भावः । शतरुद्रीयार्थत्वमिति । ज-गज्जन्मादिहेतुर्ब्रह्मैव तदर्थत्वेनोक्तम् । तद्धेतुत्वे रुद्रस्यापि स्वीकृते ब्रह्मद्वयापत्तिलक्षणो विरोधः स्यात्तस्मात्तदन्तर्यामि परं तदिति सुष्ठु । यश्चान्त इति । तत्रैवमस्ति । 'तस्यास्य नासिकाभ्यां च श्रवणाभ्यां च सर्वशः । तेभ्यश्चाक्षिसहस्रेभ्यः प्रादुरासन् महार्चि-षः ॥ तथा तेजोमरीचिभ्यः शङ्खचक्रगदाधराः । प्रादुरासन् हृ-षीकेशाः शतशोऽथ सहस्रशः ॥ तदत्यद्भुतमालोक्य भूतं लोक-भयङ्करम् । द्रौणिरव्यथितो दिव्यैः शरवर्षैरवाकिर'दिति ॥ अत्र रुद्राङ्गाद्विष्णोः प्राकट्यं स्तम्भादिवन्नृसिंहस्य ब्रह्मनासातो वराह-स्येवेति बोध्यम् । प्रकरणं योजयति तस्मादिति । विस्पष्टार्थम् ॥ २८ ॥

अथ महाशैवं निराकर्तुं तन्मतमुपन्यस्यति—इदं कश्चिदि-त्यादिना । अत्याश्रमे प्रशस्ते संन्यासे स्थितो विरक्त इत्यर्थः ।

क्त्या स्वगुरुं प्रणम्य। हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम्॥ अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्। तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम्॥ उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्। ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात॥ स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्। स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः॥ स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्। ज्ञात्वा मृत्युमत्येति नान्यः पन्था विमुक्तये" इत्यादि श्रवणात। उपरिष्टाच्च—"त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत्। तेभ्यो

---

'अतिशब्दः प्रशंसायामि'ति विश्वः। हृत्पुण्डरीकं विशुद्धं विचिन्त्य विषयस्पृहामलापाकरणेन निर्मलं विधायेत्यर्थः। तन्मध्ये शिवं ध्यात्वेत्यन्वयः। कीदृशं विशदं शुचं मायापङ्कास्पृष्टम्। विकसितार्थमन्यत्। मायया तु स्वशक्त्या स एव सर्वात्मेत्याह स ब्रह्मेति। सर्वात्मकत्वेपि स्वावस्थातो न च्यवत इत्याह सोऽक्षर इति। सर्वं वर्त्तमानं ब्रह्मादि। भूतं पुरा यदभूत्। भव्यं यदागामिसृष्टौ भविष्यत्। तत् सर्वं मायया स एवेत्यर्थः। तं सनातनं ज्ञात्वेत्यन्वयः। उपरिष्टादित्यग्रिमग्रन्थ इत्यर्थः। धामसु लोकेषु। भोक्ता ब्रह्मादिप्राणिनिकरः। तेभ्यो भोग्यभोक्तृ-

विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः'' इति। अन्यत्र च—"शिवमद्वैतं चतुर्थं मन्यन्ते" इति ॥ २९ ॥

तस्मात् सदाशिवो मूलकारणं, ब्रह्मादयस्तु तस्य कार्य्याणि। ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे प्रसूयन्ते इति श्रुत्यन्तराच्च। विज्ञानानन्दरूपाद् विशुद्धात्तस्मादचिन्त्यशक्तियोगाद्ब्रह्मादिसृष्टेस्तदुपासनया विमुक्तिः। श्वेताश्वतरोपनिषदि चैष एव हररुद्रादिशब्दैरभिधीयते ॥ ३० ॥

अत्रोच्यते—सदाशिवोऽसौ विष्णुरेव तस्यैव सकलदोषशून्यस्य सर्वदेवमङ्गलात्मकत्वात्। स्मृतिश्च—"एवं प्रकारममलं नित्यं व्यापकमक्षयम्। समस्तहेयरहितं विष्णवाख्यं परमं पदमि"ति, "पवित्राणां पवित्रं यो मङ्ग-

---

भोगेभ्यः। अन्यत्रेति माण्डूक्योपनिषदि। चतुर्थं तुरीयं विश्वतैजसप्राज्ञभिन्नं सदाशिवं चिदेकरसमित्यर्थः ॥ २९ ॥

निगमयति—तस्मादिति। ब्रह्मादीनां सदाशिवकार्य्यत्वे निःसन्देहं प्रमाणमाह ब्रह्मेति। तस्मात् सदाशिवात् ॥ ३० ॥

परिहरति—अत्रोच्यते इति। एवमिति। श्रीवैष्णवे। इतः पूर्वमस्ति। 'निर्व्यापारमनाख्येयं व्याप्तिमात्रमनौपमम्। आत्मसम्बोधविषयं सत्तामात्रमलक्षणम् ॥ प्रशान्तमभयं शुद्धं दुर्विभाव्यमसंश्रितम्। विष्णोर्ज्ञानमयस्योक्तं तज्ज्ञानं परमं पद'मित्येवम्प्रकारम्। अस्यार्थः। निर्व्यापारमक्रियम्। अनाख्येयं कात्स्न्येन वाचाम-

लानां च मङ्गलम् । दैवतं देवतानां च भूतानां योऽव्ययः पिते''ति च । उदधिमन्थनोद्भूतया श्रीदेव्यापि स एव सुमङ्गलरूपो निर्णीतः ॥ ३१ ॥

सुबालोपनिषदि च "अन्तःशरीरे निहितो गुहायामज एको नित्यो यस्य पृथिवी शरीर''मित्युपक्रम्य "स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण'' इत्यपहतपाप्मतया सुमङ्गलत्वं नारायणस्य विष्णोरेवाभिहितम् ।

---

ग्राह्यम् । आत्मसम्बोधविषयं स्वस्मै स्वयं प्रकाशमानम् । सत्तामात्रमस्तीत्येवोपलब्धव्यम् । अलक्षणमननुमेयं श्रुत्येकगम्यम् । तत्रैव ब्रह्मरुद्राद्यगम्यं विष्णोरेव स्वरूपमित्युक्तम् । 'यत्र देवा न मुनयो न चाहं न च शङ्करः । जानन्ति परमेशस्य तद्विष्णोः परमं पद'मिति, 'शक्तयो यस्य देवस्य ब्रह्मविष्णुशिवात्मिकाः । भवन्त्यभूतपूर्वस्य तद्विष्णोः परमं पद'मिति च । न भूतः कश्चित्पूर्वो यस्मात्तस्यानादेरित्यर्थः । इत्थं ब्रह्माद्यगम्यं सदाशिवस्य स्वरूपमिति भ्रान्तिरपास्ता । पवित्रमिति भारते । पवित्राणां गङ्गादीनां पवित्रं पावित्र्यशक्तिप्रदम् । मङ्गलानां विघ्नहर्तॄणां गणेशादीनां मङ्गलं तद्धन्तृत्वशक्तिप्रदम् । देवतानामाराध्यानामिन्द्रादीनां दैवतमाराध्यत्वशक्तिप्रदम् । उदधीति । अष्टमस्कन्धे द्रष्टव्यमेतत् ॥ ३१ ॥

उक्तेऽर्थे श्रुतिशैलीमुदाहरति सुबालेत्यादिना । गुहायां हृत्पुण्डरीके । देवकीति । 'ब्रह्मण्यो देवकीपुत्र' इति तत्र चोक्तेः ।

नारायणोपनिषदि च "अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति नारायणाद्ब्रह्माऽजायत" इत्यादिना नारायणशब्दितादेवकीपुत्राद्विष्णोर्ब्रह्मरुद्रादिसृष्टिः श्रूयते। स च समस्तहेयराहित्यात् सुमङ्गलो भवति तदुपासनया विमुक्तिरित्यपि चोर्ध्वमुपादिश्यते। "अथ नित्यो निष्कलङ्को निराख्यातो निर्विकल्पो निरञ्जनः। शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित्। य एवं वेद स विष्णुरेव भवती"त्यादीना। अन्यत्र च श्रूयते—"एको ह वै नारायण आसीन्न ब्रह्मा न ईशानः। एको वै नारायण आसीन्न ब्रह्मा न च शङ्करः॥ स मुनिर्भूत्वा समचिन्तयत्तत एते व्यजायन्त विश्वे हिरण्यगर्भाग्नियमवरुणरुद्रेन्द्रा" इत्यादि॥ ३२॥

---

निष्कलङ्को निर्दोषः। निराख्यातः सर्वदेवाव्याख्यः। निर्विकल्पो द्वैरूप्यशून्यः। गतिसामान्यादिति सूत्रात्। निरञ्जनः प्रकृतिलेपरहितः। अत एव शुद्धः। ईदृशो द्वितीयः कोपि नास्तीत्यद्वितीयः। न तत्समश्चेति श्रवणात्। यस्तमेवं वेत्ति जानात्युपास्ते च स विष्णुरेव भवति। निर्मायत्वेनांशेन विष्णुतुल्यो न भवति। 'एवौपम्येऽवधारणे' इति विश्वः। अन्यत्रेति। महोपनिषदादिष्विति ज्ञेयम्॥ ३२॥

तैत्तिरीयके च शिवशब्दो नारायणशब्दसामानाधिकरण्येनोपदिष्टः श्रूयते । "सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवमक्षरं परमं पदम् ॥ विश्वतः परमं नित्यं विश्वं नारायणं हरिम् । विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ॥ पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् । नारायणं महाज्ञेयं विश्वात्मानं परायणम ॥ नारायणः परं ज्योतिरात्मा नारायणः परः । नारायणः परं ब्रह्म तत्त्वं नारायणः परः ॥ नारायणः परो ध्याता ध्यानं नारायणः परम । यच्च किञ्चिज्जगत्यस्मिन् दृश्यते

---

शिवनारायणशब्दयोः सामानाधिकरण्याच्च शिवो विष्णुरेवेति स्वीकार्य्यमित्याह—तैत्तिरीयके चेति । तद्गतायां बृहन्नारायणोपनिषदि चेत्यर्थः । विश्वमक्ष्णोति व्याप्नोतीति विश्वाक्षम् । विश्वस्य शं कल्याणं भावयत्युत्पादयतीति विश्वशम्भुवम् । स्वशक्त्या विश्वं जगदाकारम् । एवमग्रेपि पुनःपुनरुक्तिर्दृढतार्था । पुरुष एव विश्वमित्यन्वयः । विश्वं कर्तृ तत्पुरुषरूपवस्तूपजीवति समाश्रयति । यतो विश्वस्य पतिं पालकम् । आत्मनां ब्रह्मादिजीवानामीश्वरं नियामकम् । ज्ञेयेषु तत्त्वेषु मध्ये महानिति महाज्ञेयस्तं मुमुक्षुध्येयमित्यर्थः । ध्याता तदुपासकगणो ध्यानं च तदुभयं नारायण एव । अयमभेदव्यपदेशो व्याप्यव्यापकादनतिरिक्तमिति भावेनैव न तु स्वरूपेणेत्येतत् स्फुटयति यच्चेति । यत् किञ्चिज्जगति दृश्यते राजादि, श्रूयते चेन्द्रादि, तत्सर्वं व्याप्य नारायणः

श्रूयतेपि वा ॥ अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः” इत्यादिना। अत एवमुक्तं नारायणीये—“तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखः। तत्त्वमेको महायोगी हरिर्नारायणः प्रभु”रिति ॥ ३३ ॥

नारायणशब्दः खलु लक्ष्मीपतेः संज्ञा, तस्यामेव णत्वविधानात्। यदाह भगवान् पाणिनिः—“पूर्वपदात्संज्ञायामगः” इति। पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात् संज्ञायां न तु गकारव्यवधाने—इति तदर्थः। नारायणः। अगः किम्—ऋगयनमिति। तस्माद्विष्णुरेव सदाशिवशब्दितः। इतरथा सर्वश्रुतिस्मृतिव्याकोपः। तत्रैव च ब्रह्मविद्यात्वव्यपदेशब्रह्मपरमा-

---

स्थितोऽस्तीति व्यापकाद्वैतभावनया ध्यातृध्यानयोर्ध्येयादभेद इत्यर्थः। भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे वृत्तिर्हि सामानाधिकरण्यम्। नारायणशब्दो विष्णावेवेति भारतवाक्येनाह—तत्त्वमिति। स्फुटार्थम् ॥ ३३ ॥

“आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं यस्य ताः पूर्वं तेन नारायणः स्मृतः ॥ नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः। तस्य तान्ययनं पूर्वं तेन नारायणः स्मृत” इति च स्मृतेः। पुरुषाज्जातानां कारणाम्भसां तत्त्वानां वा समाश्रयतालक्षणेन योगेन नारायणशब्दो विष्णोरेव समाख्येत्येतत्

वमशब्दा विरुध्येरन्। तौ शब्दौ किल विष्णोरेवाभिधायकौ प्रसिद्धौ। शिवादिशब्दास्तत्रैव प्रवर्तन्त इति प्रागुक्तम ॥ ३४ ॥

ननूमासहायत्रिलोचननीलकण्ठशब्दाः कथमत्र प्रवर्तेरन्निमित्तविरहादिति चेन्मन्दमेतत, तेषामर्थान्तरसत्त्वात्। तथा हि—उमा कीर्तिः "उमाऽतसी हैमवती हरिद्राकीर्त्तिकान्तिष्वि"ति विश्वप्रकाशात। सा सर्गादौ सहाया यस्य तम्। त्रिनेत्रं त्रीणि नेत्राणि भूतवर्तमानभविष्यद्विषयाणि ज्ञानानि यस्य तं त्रिकालज्ञमित्यर्थः। "वेदाहं समतीतानि वर्तमानानि चार्जुन। भविष्याणि च भूतानि मां तु वेद न कश्चन" इति स्मृतेः। नीलो मणिविशेषः स्ववर्णसादृश्यातिप्रियत्वात् कण्ठे यस्य त-

---

पाणिनिसूत्रादप्यवगतमित्याह—नारायण इत्यादिना। इतरथेति। विष्णोरपि कारणं सदाशिवोन्योस्तीति स्वीकारे इत्यर्थः। तत्रैवेति। कैवल्योपनिषदि। ताविति ब्रह्मपरात्मशब्दौ। प्रसिद्धौ श्रीगीतादिषु ॥ ३४ ॥

नन्विति। अत्र विष्णुपक्षे। निमित्तेति। पार्वतीसाहाय्यादिकं प्रवृत्तिनिमित्तं तदभावादित्यर्थः। सा कीर्त्तिः प्रवृत्तिहेतुतया यस्य सहाया भवतीत्यर्थः। निधिविशेषो वेति निध्यन्तराणामुपलक्षणम्। यदाशीर्वादात् सकामभक्तानां सर्वे निधयो

मिन्द्रनीलमणिहारिणमित्यर्थः। निधिविशेषो वा नीलः कण्ठे यस्य स तथा। परोक्षवादेन विद्योपदेशप्रवृत्तेरत्र न शब्दस्वारस्यभङ्गो दोषः ॥ ३५ ॥

त्वदभिमते सदाशिवे त्वेते शब्दा न प्रवर्त्तेरन्। पार्वतीपतित्वादीनां निमित्तानां तत्राभावात्। कार्य्ये कपालिन्येव तेषा भावात् ॥ ३६ ॥

श्वेताश्वतरोपनिषदि च परब्रह्मभूतो विष्णुरेवोपदिष्टः, ब्रह्मवादिनो वदन्तीत्युपक्रान्तस्य ब्रह्मशब्दस्यापूर्तेरभ्यासात्। "सर्वव्यापी स भगवान्", "एवं स देवो भगवान् वरेण्य" इति भगवच्छब्दोऽप्यभ्यस्तः, स च विष्णौ मुख्यः। विष्णुप्रमेयं हि पुराणं भागवतमित्याख्यायते।

---

भवन्तीति भावः। ननु श्रुतिरेव कथमुपदिशतीत्यत्राह-परोक्षेति ॥ ३५ ॥

स्वमतमुपपाद्य परमतेऽनुपपत्तिमाह त्वदिति। तत्रेति। चिदेकरसेऽद्वितीये सर्वकारणे सदाशिवे इत्यर्थः। कार्य्ये इति। ब्रह्मपुत्रे कपालिने रुद्रे इत्यर्थः ॥ ३६ ॥

श्वेताश्वतरैश्च हरादिशब्दानुद्गिरद्भिः स्वोपनिषदि सदाशिव एवासौ वर्णित इति चेत् मोक्तं तदप्यनुपपन्नमित्याह श्वेतेत्यादिना। तस्मिन्निति। तस्मिन् विष्णावेवामुं भगवच्छब्दं व्युत्पाद्य पराशरो महर्षिः। तस्मादिति। इयं श्वेताश्वतरैः पठिता षडध्यायी। यदीति। सदाशिवो यो मया निरूप्यते स एव

संभवेति तथा भवेत्यादिना तस्मिन्नेवामुं व्युत्पाद्य पुनर्निगमयति—"एवमेष महाशब्दो मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः" इति श्रीविष्णुपुराणे । तस्माद्विष्णुपरैवेयमुपनिषत् । यदि सदाशिवोऽपि ब्रह्मशब्दितत्वादिधर्मेति वाच्यं तर्हि संज्ञामात्र एव विसंवादो न तु संज्ञिनीति यत्किञ्चिदेतत् ॥ ३७ ॥

ननु त्रिमूर्त्तिमध्यो विष्णुरुत्पत्तिमान् "ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे प्रसूयन्ते" इति श्रवणात् गर्भोदशायिनः पुरुषाद्ब्रह्मविष्णुरुद्रास्त्रयो गुणावतारा भवन्तीति भागवत-

---

परं ब्रह्म स एव भगवानिति चेन्महाशैवो ब्रूयात्तदा नाममात्रे भेदो नामी त्वेक एवावयोरित्यर्थः । अयं भावः । अन्तश्चिह्नं त्वयास्माकं धृतमेव चक्रोर्ध्वपुण्ड्र(?)तुलस्यादिके बाह्यचिह्ने धृते तु न कोपि तत्क्लेशः। ननु सूतसंहितया निन्दितत्वात्तन्न ध्रियते भस्मतिर्य्यक्पुण्ड्रादिकं तु स्तुतत्वाद्ध्रियते इति चेत् ज्ञानाविजृम्भितया सूपया(?)तन्निन्दा केनाचित् कृतेत्यवगच्छ न खलु व्यासाश्रितः सूतस्तथा ब्रुवन् पाण्यादौ शङ्खचक्रादिधारणं स्तुवता स्वप्रभुणा शक्नुयाद्विरोद्धुम् । न च तथा वदन् श्लाघ्यवाग् भवेदिति काशीखण्डयोगवाशिष्ठाद्यावक्रादिवत्कल्पितैव सा । एषु संमतांशोक्तिस्त्वन्याकर्षणार्थेति वदन्ति ॥ ३७ ॥

एवं महाशैवेऽपि निरस्ते कपाल्येकान्ती तज्जन्मादि श्रुत्वातिखिन्नः क्रोधताम्रनेत्रो वैतण्डिकतया सत्त्वाधिष्ठातुर्विष्णोर्जगत्पा-

प्रक्रियादर्शनाच्चेति चेत् । सत्यं, ब्रह्मरुद्रयोर्जीवत्वा-देव कर्मवश्योत्पत्त्यादिप्रकीर्तनम् । विष्णो "स्त्वेकोऽपि सन् बहुधा योऽवभाति", "एकं सन्तं बहुधा दृश्यमानम्", "अजायमानो बहुधा विजायत" इत्यादिषु कर्मवश्योत्पत्त्यादिनिरासादप्रच्युतस्वरूपशक्तिस्वभावस्य तस्य स्वसृष्टिपालनाय त्रिमूर्त्तिमध्ये स्वेच्छावताराविर्भावादिपर्यायाभिव्यक्तिरि-

---

लकस्यानित्यतां ववतुं प्रतिवर्त्तते नत्विति । नैवात्र विप्रतिपत्तव्यं भवतामपि संमतिर्यदस्तीत्याह गर्भोदकेत्यादि । अयं खलु शूकरादियोनिजातत्वशस्त्रक्षतिश्यामत्वानि विष्णोरपकर्षे कारणानि । रुद्रस्य तस्मादुत्कर्षेऽजातत्वशस्त्राक्षतिशुक्लत्वानि कारणानि स्वगोष्ठ्यां जल्पति द्विजत्वादुदमाश्रयन्नपि विष्णुविद्वेषादस्फुरिततदर्थः सन् । समाधत्ते सत्यमित्यादिना । कर्मवश्योत्पत्त्यादीति । आदिना मृत्युः । युगकोटीत्यादेर्विश्वरूप इत्यादेर्ब्रह्मा शम्भुरित्यादेश्च पूर्वोक्तस्मृतेर्बोध्यम् । एकं सन्तमिति । अजायमान इति पुरुषसूक्ते । कर्मवश्योत्पत्त्यादिनिरासादित्यत्रादिपदात्कर्मवश्यो नाशस्तस्य नास्ति किंत्विच्छया तिरोधिरेवेच्छन् मुहूर्त्तान्नश्येयमित्यादौ वर्ण्यते इत्यर्थः । अप्रच्युतेति । स्वभावः शीलम् । स्वभावः प्रकृतिः शीलमिति धनञ्जयकोषात् । स्वेच्छयेति आत्मेच्छया । निजलोकात्प्रपञ्चेऽवतरणं स्वेच्छावतारः । अत एवेति । श्रीवैष्णवेऽपि त्रीन् ब्रह्मादीन् परब्रह्मणः शक्तीरुक्त्वा तेषु विष्णोः साक्षाद्ब्रह्मत्वमुक्तवान् पराशरः । ब्रह्मविष्णुशिवा ब्रह्मशक्तयः । सर्वशक्तिमयो विष्णुः स्वरूपं ब्रह्मणः परम् । स परः सर्वशक्तीनां

ति। अत एव "सृजामि तन्नियुक्तोऽहमि"त्यादौ विश्वपुरुषरूपेण परिपातीत्युक्तं न तु तद्वश्यता तस्योच्यते ॥३८॥

सुबालोपनिषदि च तमःशब्दितसूक्ष्मशक्तिकात्पुरुषाद्ब्रह्माण्डं जातम्। तस्मिन् सहस्रशीर्षाख्यपुरुषवपुषा स एवाविर्भूतस्तस्माद्ब्रह्मरुद्रादिसृष्टिरभूदिति श्रूयते। तदाहुः "किं तदासीत्तस्मै स होवाच न सन्नासदसदिति। तस्मात्तमः सञ्जायते तमसो भूतादिर्भूतादेराकाशमाकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी तदण्डं समभवत्। तत्संवत्सरमुषित्वा द्विधाऽकरोत्—अधस्ताद्भूमिरुपरिष्टादाकाशम्। मध्ये पुरुषो दिव्यः। सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् सहस्रबाहुरिति। सोऽग्रे भूतानां मृत्युमसृजत् त्र्यक्षं त्रिशिरस्कं त्रिपादं खण्ड-

---

ब्रह्मणः समनन्तरः। मूर्त्तं ब्रह्म महाभाग सर्वब्रह्ममयो हरिरिति। ब्रह्मणः शक्तीनां ब्रह्मादीनां मध्ये परं श्रेष्ठः यतः समनन्तरः प्रणष्टभेदः। यतो मूर्त्तं ब्रह्म सान्द्रज्ञानानन्दराशि नैवं ब्रह्मा शिवश्च। सर्वब्रह्ममयश्च कृत्स्नब्रह्मस्वरूपस्ततस्त्वांश इत्यर्थः॥ तौ तु तद्विभिन्नांशौ जीवाविति भावः॥ ३८॥

सत्त्वाधिष्ठातुर्विष्णोः परब्रह्मत्वादेवाविर्भावतिरोभावौ स्यातां न त्वितरयोरिव जनिविनाशौ। अतः श्रुतिशैल्यां ताभ्यां सह तस्योत्पत्तिर्नोदीर्य्यत इति भावेन तामुदाहर्त्तुमवतारयति सुबा-

परशुं तस्य ब्रह्माविभेत् । सोयं ब्रह्माणमाविवेश । स मानसान् सहपुत्रानसृजत्तं ह विराजः सप्त मानसानसृजत् । ते ह प्रजापतयो ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत । चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । श्रोत्राद्वायुश्च प्राणश्च हृदयात् सर्वमिदं जायते । अपानान्निषादा यक्षराक्षसगन्धर्वा अस्थिभ्यः पर्वता लोमभ्य औषधिवनस्प-

---

लेत्यादिना । तदाहुरिति । तं गुरुं शिष्याः पृच्छन्तीत्यर्थः । प्रष्टव्यमाह किमिति । सृष्टेः पूर्वमविनाशि वस्तु किं तदासीदिति । एवं पृष्टः स गुरुस्तस्य शिष्यवृन्दाय होवाच सदित्यादि । सृष्टेः पूर्वं यद्वस्त्वासीत् । तन्न सत् । तेजोबन्नरूपं स्थूलं नेत्यर्थः । नाप्यसत् । प्रधानमहदादिरूपं सूक्ष्मं नेत्यर्थः । न च सदसत् । वियद्वायुरूपं स्थूलं सूक्ष्मं च नासीदित्यर्थः । तर्हि किमासीदिति चेत्तत्तद्विलक्षणं तमःशक्तिकं ब्रह्मैवासीदित्युक्तं बोध्यम् । तस्मात् स्वविलीनक्षेत्रज्ञगणबुभुक्षाभ्युदितानुकम्पादीक्षिततमसो ब्रह्मणस्तमः सञ्जायते प्रधानशरीरकाक्षरव्यञ्जनाभिमुखमभवत् । तमसोऽक्षरशब्दितोऽव्यक्तशरीरकः क्षेत्रज्ञः । तस्मादभिव्यक्तत्रिगुणमव्यक्तम । ततस्त्रिविधो महान । ततस्तादृशोहङ्कारः । तस्मात् सात्त्विकादिन्द्रियदेवता मनश्च । राजसादिन्द्रियाणि दश । तामसात्तु भूतादिसञ्ज्ञात्तन्मात्रद्वारा खादीनि पञ्चेत्यग्रिमप्रलयश्रुत्यनुसारेणेदं व्याख्यातं बोध्यम् । स सूक्ष्मे भाष्ये निरूपितं द्रष्टव्यम् । सोग्रे इति । अग्रे प्रथमं स सहस्रशीर्षा विष्णुर्भू-

तमो ललाटात् क्रोधजो रुद्रोऽजायत। तस्यैतस्यैतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद” इत्यादिना॥३९॥

शतपथे च श्रूयते “भूतानां पतिः संवत्सरे उषसि रेतोऽसिञ्चत्। तत् संवत्सरे कुमारोऽजायत सोऽरोदीत्तं प्रजापतिरब्रवीत् । कुमार किं रोदिषि यत् श्रमात्तपसोऽधिजातोऽसीति। सोऽब्रवीदनपहतपाप्मा वा अहमस्मि नाम मे धेहि पाप्मनोऽपहत्या इति । तं प्रजापति-

---

तानां प्राणिनां मृत्युं संहारकं रुद्रमसृजदिति विष्णुपुत्रो रुद्रः। तस्येति। तस्माद् रुद्रात्। सोयं रुद्रो ब्रह्माणमाविवेशेति पुनर्ब्रह्मणश्च तदुत्पत्तिः। स विष्णुनाधिष्ठितो ब्रह्मा सह युगपदेव मानसान् सनकादींश्चतुरः पुत्रानसृजत्। ते ह विराजो विशिष्टदीप्तयो बभूवुः। सप्त मरीच्यादीन् मानसान् स ब्रह्माऽसृजत्। एवमुक्तं श्रीवैष्णवे। वैवस्वते च महति वारुणे वितते क्रतौ। जुह्वानस्य ब्रह्मणो वै प्रजासर्ग इहोच्यते॥ पूर्वं यत्र तु सप्तर्षीनुत्पन्नान् सप्त प्रजापतयो बभूवुः। ब्राह्मणोऽस्येति। अस्य हिरण्यगर्भशरीरकस्य विष्णोः। ललाटादिति। यो ब्रह्माणमाविवेश स रुद्रस्तस्य ललाटादुदभूदित्यर्थः॥ ३९ ॥

शतपथे चेति। यजुर्वेदे शतपथे षष्ठे काण्डे तृतीये ब्राह्मणे विच्छिद्य विच्छिद्येदं वाक्यं स्थितं बोध्यम्। भूतानामिति। सर्वेश्वराद्विष्णोरुत्पन्नो रुद्रो ब्राह्मणमाविश्य स्थितः। अथ भूतानां पतिर्ब्रह्मा रुद्रात्मकं रेत उषसि योनावसिञ्चत्। अनपहतपाप्मा निष्पापो नाहं नामकरणाद्विनास्मि। अतो मे नाम धेहि। नामा-

रब्रवीत् रुद्रोऽसीति तस्य तन्नामाकरोदग्निस्तद्रूपम-भवत्। अग्नि वै रुद्रो यदरोदीत्तस्माद्रुद्रः। सोऽब्र-वीत् ज्यायान् वा अहमस्मि देह्येव नामेति। तं प्रजा-पतिरब्रवीत् भवोऽसीति शर्वोऽसीति ईशानोऽसीति पशुपतिरसीति भीमोऽसीति महादेवोऽसीति। प्रजापति-र्देवानसृजत। ते पाप्मना संवीता अजायन्त विरूपा-क्षाय ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठायामोघाय कर्मा-धिपतये। सोऽब्रवीत् वरं वृणीष्व। अहमेव पशूनाम-धिपति"रिति ॥ ४० ॥

इह हि परस्य भगवतः परमकारणत्वं तस्माद्रु-

---

न्तराण्याकाङ्क्षन्नाह—"ज्यायानिति"। ते ज्येष्ठपुत्रोऽहमस्मि। एवं नाम मे देहि येन मे ज्येष्ठत्वं ख्यातं स्यादित्यर्थः। एवं रुद्रप्रमुखनामानि च तस्य कृत्वा सोऽन्यान् पुत्रानसृजदित्याह—"प्रजापतिरिति"। ते देवा अकृतनामानः पाप्मना संवीता व्याप्ता एव सन्तोऽजायन्त जाताः। अथ कृतनामानस्ते निष्पाप्मानो ज्येष्ठस्य रुद्रस्यानुयायिनो बभूवुरित्याह—विरूपाक्षायेत्यादि। क्रियार्थोपपदस्येत्यादिसूत्राच्चतुर्थी। तमनुकूलयितुमित्यर्थः। ज्येष्ठाया-तिश्लाघ्याय। अमोघाय सफलाय फलदात्रे चेत्यर्थः। कर्माधिपतये वैदेककर्मप्रवर्तकाय। स ब्रह्मा रुद्रमब्रवीत् वरं वृणीष्वेति। स रुद्रो वरं वव्रे। अहमेवेति। पशूनां जीवानाम् ॥४०॥

एवं श्रुतिशैलीमुदाहृत्य तदर्थं योजयति इहेति। सुबालो-

ह्मरुद्रयोरुत्पत्तिः रुद्राद्ब्रह्मणो भीतिः । रुद्रस्यानपहतपाप्मत्वं चात्रगम्यते । न चैवं विष्णोः श्रूयते । तस्मात् सर्वेश्वरो विष्णुश्चौरेषु मिलितो राजेव जगत्कार्य्याय देवेषु प्रविष्टस्तस्य स्वेच्छाभिव्यक्तिर्जन्मेत्यभिधीयते । यच्च दिव्यमिति ज्ञानान्नृणां जन्मनिवृत्तिरिति श्रीभगवताभिहितम् । जन्मकर्म च मे दिव्यमित्यादि । तस्मात्त्रिमूर्त्तिमध्येऽवतीर्णो विष्णुः साक्षात् सर्वेश्वर इति सिद्धं

---

पनिषदि शतपथब्राह्मणे चेत्यर्थः । तस्माद् ब्रह्मरुद्रयोरुत्पत्तिरिति ।तस्माद्विष्णोरुत्पत्तिर्नोक्ता । यदसौ स्वयमेव विष्णुरिति भावः । तयोरुत्पत्तिभयानामत्वहेतुकसपापत्वानि जीवत्वे लिङ्गानि । न चैवं विष्णोरिति । नित्यविग्रहत्वात् सर्वेशत्वादविद्याविध्वंसिस्वात्मकनामत्वाच्च स्वप्नेपि नामूनि सम्भवन्ति । अविकाराय नित्याय परमात्मने सदैकरूपाय विष्णवे सर्वजिष्णवे । पापे गुरूणि गुरूणि स्वल्पे स्वल्पानि तद्विदः । प्रायश्चित्तानि मैत्रेय जगुः स्वायम्भुवादयः । प्रायश्चित्तान्यशेषाणि तपःकर्मात्मिकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परम् । कृते पापेऽनुतापो वै यस्य पुंसः प्रजायते । प्रायश्चित्तं तदेवास्य हरिसंस्मरणं परमित्यादि श्रीवैष्णवात् । यद्येवं तर्हि ब्रह्माविष्णुरुद्रेन्द्रास्ते सर्वे प्रसूयन्ते इति श्रुतिः कथं सङ्गता तत्राह—तस्मादिति । न हि नगरवार्त्ताविजिज्ञासुर्नृपतिश्चौरवेशेन चौरेषु मिलितश्चौरः शक्यते वक्तुमपि तु तेषां

तस्य देवताविशेषत्वम् ॥ ४१ ॥

इति सिद्धान्तरत्नाख्ये भाष्यपीठके विष्णुपारम्य-निर्णयस्तृतीयः पादः ॥ ३ ॥

---

नियन्तैव स वाच्य इत्यर्थः । स्फुटार्थमन्यत् ॥ ४१ ॥

इति श्रीगोविन्दभाष्यपीठकटिप्पण्यां तृतीयः सुदर्शनपादो व्याख्यातः ॥ ३ ॥

# चतुर्थः पादः ।

अत्राहुः—द्विविधानि वाक्यानि श्रूयन्ते—सगुणविषयाणि निर्गुणविषयाणि च । "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः" "एष आत्मापहतपाप्मा विजरो विमृत्यु"रित्यादीनि सगुणब्रह्मपराणि । "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा कर्माध्यक्षः सर्वभूताधि-

---

तृतीयेन पादेन देवतैक्यादिवादिनः शैवांश्च निरस्य प्रथमादिपादाभ्यां सिद्धे दिव्यगुणकर्मणि विज्ञानानन्दविग्रहे सर्वेशे परब्रह्मणि स्थिरीकृते तमसहमानाः साङ्ख्यसौगतच्छायावलम्बिनः केवलात्मैक्यवादिनः प्रत्यवतिष्ठन्ते द्विविधानीत्यादिना । तार्क्ष्यपादोऽयं तत्पूर्वपक्षदन्दशूकानां भक्षकत्वादिति । वदन्ति य इति । सर्वविन्नित्योपलब्धसर्वसम्पत् । तप आलोचनम् । एक इति काठके । एको द्वितीयभेदासहः । देवो द्योतमानश्चिदेकधातुः । सर्वेषु भूतेषु खादिषु गूढः । "चतुर्विधेषु जीवेषु पृथिव्यादिषु पञ्चसु अतीते देवयोनौ च भूतशब्दं प्रयुञ्जते" इति हलायुधः । सर्वाणि तानि बहिरन्तश्च व्याप्नुवन् सर्वव्यापी सर्वेषां भूतानां वह्निविस्फुलिङ्गन्यायेन स्वस्मान्मायाया विच्छिन्नानां चित्परमाणूनां चतुर्विधानां जीवानामन्तर्नियमयन् सर्वभूतान्तरात्मा व्यवहर्तॄणां तेषां कर्मफलान्यर्पयन् कर्माध्यक्षः तेष्वन्तःस्थितः

वासः साक्षी चेताः केवलो निर्गुणश्च" "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादीनि तु निर्गुणब्रह्मपराणि ॥ १ ॥

तत्र सगुणवाक्यानां न गुणविधाने तात्पर्यम् । तदनुवादमात्रेणैव चारितार्थ्यात् । निर्गुणवाक्याविरोधाय तदेकार्थताया युक्तेश्च । तस्मात् सर्वैर्वेदैः निर्गुणमेव लक्ष्यं न तु सर्वेश्वरो विष्णुरेव तेषामर्थ इति ॥ २ ॥

---

सर्वभूताधिवासः तेषां शुभाशुभयोः साक्षाद्द्रष्टृत्वात् साक्षी । तेषु ज्ञानान्यर्पयंश्चेताश्चेतयिता । वस्तुतस्तु केवलो विशुद्धः । यतो निर्गुण इति पूर्वपक्षार्थः । सिद्धान्तार्थेऽप्येवं बोध्यः । एकः मुख्यः । "एके मुख्यान्यकेवला" इत्यमरः । देवः सर्वाराध्यः । सर्वेषु भूतेषु जीवेषु गूढस्तेषां हृद्वर्ती । प्राप्तं परिच्छेदं निरस्यति सर्वव्यापीति । वियद्वत्ताटस्थ्यं निरस्यति सर्वभूतान्तरात्मेति । दयालुतामाह—कर्म्माध्यक्षः इति । तेभ्यः कर्मफलानां दातेत्यर्थः । सर्वेषां तेषां भूतानामधिवासः परमाश्रयः । एवमपि निर्लेप इत्याह—साक्षीति । औदासीन्येन तत्र तत्र स्थित इत्यर्थः । चेत्यश्चित्स्वभावः । यतो निर्गुणो माययाऽनाघ्रात इति ॥ १ ॥

यद्येवं तर्हि द्विरूपं ब्रह्माऽस्तु । नेत्याह—तत्र सगुणेति । गुणविधाने तात्पर्येण गुणावेदने । तदनुवादेति । देवेषु महर्षिषु पार्थिवेषु चोग्रपुण्येषु दृष्टा येऽपहतपाप्मत्वादयो गुणास्तान् ब्रह्मणि निर्गुणेऽपि हृत्प्रवेशाय वेदो निगदतीत्येतावतैव तस्योपक्षीणत्वात् । तदेकेति । निर्गुणवाक्याविरुद्धताया इत्यर्थः । कथं सेति चेत्तत्राह तस्मादिति । सर्वैर्गुणावेदिभिर्वेदवाक्यैरित्यर्थः । निर्गुणं चिन्मात्रमेकमिति बोध्यम् । तेषामिति । द्विविधानां वाक्यानामित्यर्थः ॥२॥

मन्दमिदम् । गुणानामनन्तराप्राप्त्यानुवादसम्भवात् । तत्प्राप्तस्य हि कीर्त्तनमनुवादः । न च ते गुणाः प्रत्यक्षादिप्राप्ताः किन्त्वौपनिषदा एव । पारमार्थिकाश्च ते "परास्य शक्ति"रित्यादौ स्वाभाविकीतिश्रवणात् "इमे चान्ये च भगवन्नित्या यत्र महागुणाः । प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचिदि"ति नित्यत्वस्मरणाच्च । अत एवेदं हरवाक्ये तस्मिन् यदन्तस्तदन्वेष्टव्यमिति मुमुक्षुमृग्यत्वं तेषामुक्तम् ॥ ३ ॥

यत्त्वाहुर्वाचं धेनुमुपासीतेत्यादिवत् सगुणवाक्यान्युपासनार्थानि । उपासनया विमृष्टा हृद्वृत्तिर्निर्गुणं सूक्ष्मं प्रवेक्ष्यतीति । इतरथोपासनायाः कार्यत्वे

---

प्रत्याचष्टे मन्दमिदमिति । तत्प्राप्तस्य मानान्तरलब्धस्य । ननु देवेषु महर्षिष्वित्यादियुक्त्या गुणानां प्रत्यक्षादिप्राप्तिर्व्यक्तैवेति चेत्तत्राह न च ते इति । ननूपनिषदा कल्पितान् गुणान् ब्रूते तत्राह-पारमार्थिकाश्चेति । इमे चेति प्रथमस्कन्धे धर्मदेवतां प्रति पृथिवीदेव्या वचनम् । भगवन् हे धर्म ! यत्र कृष्णे इमे सत्यादयः कथिताः । अन्ये चाऽकथिता नित्या महागुणाः कर्हिचिदपि न वियन्ति च्यवन्ते । यत्ते नित्याः । तस्मिन्निति । दहरे ब्रह्मणि यद्गुणाष्टकमन्तःस्वरूपभूतमस्ति तदन्वेष्टव्यं मृग्यमित्यर्थः । कल्पितत्वे मोक्षार्थिभिर्मृग्यं तन्न स्यादिति भावः ॥३॥

युक्त्यन्तराणि निराकरोति यत्त्वित्यादिना । अधेनौ

गुणेषु तात्पर्ये च वाक्यभेदापत्तिरिति। तदिदमविचारिताभिधानं तेषु वाक्येषूपासनापदाऽदर्शनात्। तत्पदविरहिणामपि तेषां तदर्थत्वकल्पनायामात्मेत्येवोपासीतेत्यादीनामपि तदर्थत्वापत्तेः। किञ्च—आनन्दादयः प्रधानस्य व्यतिहारो विशिंषन्ति हीतरवदित्यत्रानन्दादेर्जीवेशाभेदस्य वोपास्यत्वेपि तात्त्विकत्वं परैरुक्तम्। तद्वत् सार्वज्ञ्यादेरपि तत्किं न स्यात्॥ ४॥

---

वाचि यथा धेनुत्वं तथा निर्गुणे ब्रह्मणि सगुणत्वमुपासनार्थं कल्पनीयमित्यर्थः। प्रवेक्ष्यन्ते शाखाचन्द्रन्यायेन। इतरथोपासनार्थत्वाभावे। तेषु यः सर्वज्ञः इत्यादिवाक्येषु। तत्पदविरहिणामुपासनापदशून्यानाम्। तदर्थत्वापत्तेरुपासनार्थत्वप्रसङ्गात्। आत्मत्वादिधर्माणामुपासनार्थत्वेन कल्पितत्वात् ब्रह्मणो नात्मत्वापत्तिरिति भावः। यदुपास्यं तत्कल्पितमिति भवतापि न शक्यं वक्तुं स्वोक्तिव्याघातादित्याह—किं चेत्यादि। आनन्दादय इत्यादिकं ब्रह्मसूत्रद्वयम्। तत्र प्रधानस्य ब्रह्म आनन्दरूपत्वादयो धर्मा उपास्या इति पूर्वसूत्रार्थः। "त्वं वा अहमस्मि भगवो देव ते अहं वै त्वमसि तत्त्वमसि तत्त्वमसी"-त्यादीनि वाक्यानि जीवभावेन ब्रह्म विशिंषन्ति ब्रह्मभावेन जीवञ्चेति व्यतिहारस्तयोः परस्पराभेदः सिद्धः इति परसूत्रस्यार्थः शङ्करेण भाषितः। अत्राऽऽनन्दादेर्जीवब्रह्माभेदस्य चोपास्यत्वेऽपि तात्त्विकत्वं यथा केवलाद्वैतवादे स्वीक्रियते तथा सार्वज्ञ्यादेरपि तत्तत्स्वीकार्यमिति कुतस्त्रपसे इति भावः॥ ४॥

न चोभयविधवाक्यावलोकाद्विकल्पः कदाचित् सगुणं ब्रह्म कदाचित्तु निर्गुणमिति वाच्यं, सिद्धे वस्तुनि विकल्पाभावात्। न हि वन्हिरुष्णः कदाचित्तु शीत इति शक्यमभिधातुम्। अनुष्ठाने तु साध्ये स स्यात्। षोडशिग्रहणाग्रहणाभ्यामतिरात्रवत्, उदितानुदितहोमवच्च ॥ ५ ॥

यत्तु सगुणवाक्यानां व्यावहारिकगुणविधायित्वं निर्गुणवाक्यानान्तु पारमार्थिकगुणाभावबोधकत्वमित्याहुस्तदतीव मन्दम्, व्यावहारिकत्ववाचिपदाभावाद्गुणानां मृषात्वेन तद्विधायिनां तेषामप्रामाण्यापत्तेः।

---

अथ ब्रह्मणो द्वैरूप्यं निरस्यति न चेत्यादिना। सिद्धे निष्पन्ने ब्रह्मणि। अनुष्ठाने यागहोमादौ कर्मणि। साध्ये कृतिनिष्पाद्ये इत्यर्थः। स विकल्पस्तमुदाहरति षोडशीति। षोडशी यज्ञियपात्रविशेषः। अतिरात्रं कर्मविशेषः। 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाती'ति श्रवणात्। षोडशियोगायोगाभ्यामतिरात्रं द्विरूपम्। अनुदितहोमनिन्दयोदितहोम उदितहोमनिन्दयानुदितहोमश्च श्रुत्या विहित इत्युदितानुदितकालयोगेन द्विरूपो होमः ॥ ५ ॥

यत्त्विति मस्फुटार्थम्। गुणानामिति। त्वन्मते गुणाः सर्वे कल्पितत्वान्मृषाभूता एव ततस्तद्वाचिनां वेदवचसां 'एष वन्ध्यासुतो भाती'त्यादिवदप्रामाण्यापत्तेस्तव नास्तिकतापत्तिः

षोडाशिग्रहणाग्रहणयोस्तत्तदापत्त्या पूर्वतन्त्राविरोधापत्ते-श्च । सदेव सौम्येति श्रुतसत्त्वस्य मृषात्वेन ब्रह्मणः शून्यभावापत्तेश्च । "असन्नेव स भवति असद् ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु"-रित्यत्रासद्वादिनं निन्दित्वा सद्वादी स्तूयते तच्च पीड्येत ॥ ६ ॥

तस्मात् सगुणवाक्यानि मानान्तराप्राप्तानलौकि-कान् गुणान् विदध्युरेव । निर्गुणवाक्यानि तु प्राकृतां-स्तान्निषेधेयुरिति व्यवस्था । "मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् । सुहृदं प्रियमात्मानं साम्यासङ्गा-द्यो ऽगुणाः ॥ सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः । स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदत्वि"ति

---

स्यादिति षष्ठे पादेऽस्य विस्तरः स्यात् । तत्तदापत्त्येति । षोड-शियोगो व्यावहारिकस्तदयोगस्तु पारमार्थिक इति प्रसक्त्या पूर्वमीमांसाविरोधप्रसङ्गादित्यर्थः । न हि जैमिनिनैवमङ्गी-कृतमिति भावः । श्रुतसत्त्वस्येति । श्रुत्युक्तस्य सत्तालक्षणस्य ब्रह्मधर्मस्येत्यर्थः । स्फुटमन्यत् । गुणमिथ्यात्ववादिनि दोषद्वयमेत-दुदुष्परिहरम् ॥ ६ ॥

उक्तमर्थं योजयति तस्मादिति । विदध्युस्तात्पर्येण प्रति-पादयेयुः । मामित्येकादशे । अगुणाः सत्त्वादिगुणविकारा न भवन्त्यपि तु स्वरूपानुबन्धिन एव ते इत्यर्थः । सत्त्वादय इति

स्मरणात्। "स सर्वभूतप्रकृतिर्विकारगुणांश्च दोषांश्च मुने व्यतीत" इति विकारात्मकान् गुणान्निषेधता पुन"रनन्तकल्याणगुणात्मकोऽसा"विति स्वरूपानुबन्धिनः कल्याणगुणान् स्वीकुर्वता श्रीपराशरेण स्फुटीकृतासौ ॥७॥

निर्गुणवाक्येऽपि साक्षित्वादयो धर्मा निर्दिष्टाः। इतरथा निमित्तमन्तरा साक्ष्यादिशब्दास्तस्मिन्न प्रवर्तेरन् समन्वयाध्यायश्च पीड्येत। तत्र खलु गुणान् प्रवृत्तिनिमित्तानि स्वीचकार भगवान् सूत्रकारः—अन्तस्तद्-

---

श्रीवैष्णवे। प्राकृता न सन्तीत्युक्तेरप्राकृताः सन्तीत्यागतम्। ते च शुद्धत्वादयो बोध्याः। उक्तां व्यवस्थां प्रस्फुटयति-स सर्वेति। असौ व्यवस्था ॥ ७ ॥

ननु नैर्गुण्यबोधकानामपि वचसां जागरूकत्वाद्ब्रह्मणो द्वैरूप्यं दुष्परिहरमिति चेत्तत्राह-निर्गुणेति। इतरथा धर्माभावे। निमित्तमन्तरा धर्मं विना। तस्मिन् ब्रह्मणि। अन्तरित्यस्यार्थः। 'य एषोऽन्त'रित्यादि छान्दोग्यवाक्ये। आदित्यान्तःस्थो हरिरेव बोध्यः। कुतः—हिरण्यत्वपुण्डरीकाक्षत्वापहतपाप्मत्वादितद्धर्मोक्तेरिति अन्तर्यामीत्यस्यार्थः। यः पृथिव्यां तिष्ठन्नित्यादिबृहदारण्यकवाक्ये ऽधिदैवादिपदोपेतेषु वाक्येषु श्रुतोऽन्तर्यामी हरिर्बोध्यः। कुतः पृथिव्यादिसर्वविकारनियमनामृतत्वादितद्धर्मोक्तेरिति अदृश्येत्यस्यार्थः। अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यम। दिव्यो ह्यमूर्तः

धर्मोपदेशात् , अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् , अदृश्यत्वादिगुणको धर्मोक्तेः, सर्वधर्मोपपत्तेश्च ॥ ८ ॥

सर्वशब्दावाच्ये लक्षणा तु न समस्तीत्युदितं प्राक् । चिन्मात्रादिशब्दस्य पुनर्लक्षणायां लक्ष्यस्याचैतन्यत्वम् । भागत्यागलक्षणा त्वत्र न सम्भवेद्विरुद्धभागाभावादिति तुच्छमेतत् । इत्थं च निर्गुण इत्यनेन गुणनिषेधाय साक्षित्वादिधर्मानुक्तिरिति बालजल्पितमपि दूरापास्तम् । श्रुतिप्राप्तस्य साक्षित्वादेः श्रुत्यानुवादो न सम्भवतीत्युक्तं प्राक् । तस्मादप्राकृतानन्तगुणरत्नाकरो हरिः सर्ववेदवाच्यः ॥ ९ ॥

---

पुरुष इति मुण्डकवाक्ये ऽदृश्यत्वादिधर्मा हरिर्बोध्यः । कुतः—यः सर्वज्ञः इत्यादितद्धर्मकथनादिति ॥ ८ ॥

ननु साक्षित्वादिगुणत्यागेन चिन्मात्रं लक्ष्यमिति चेत्तत्राह—सर्वेति । सोऽयं देवदत्त इत्यत्र लक्ष्यं पिण्डमात्रशब्देन वाच्यं दृष्टं—तद्वत्तवापि साक्ष्यादिशब्दलक्ष्यं चिन्मात्रशब्देन वाच्यमेव स्यात् । त्वया खलु सर्वशब्दावाच्यं शुद्धं स्वीक्रियते । कथमधुना तादृशे लक्षणामाश्रयसीति भावः । ननु चिन्मात्रशब्दस्य चेत् पिण्डमात्रशब्दवच्छक्तिं ब्रूषे तस्यापि मया लक्षणा कार्येति चेत्तत्रानिष्टं दर्शयति—चिन्मात्रादीति । चिन्मात्रे सा लक्षणैव न सम्भवतीत्याह—भागेति । श्रुतीति । एकेनोक्तस्यार्थस्य ततोऽन्येन कीर्तनमनुवादः । तस्मादिति । गुणवान् हरिर्वेदवाच्य इत्यर्थः ॥ ९ ॥

• निर्गुणाचिन्मात्रं त्वलीकमेव । "न तत्समश्चाभ्यधिकश्च दृश्यते", "मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जये"त्यादिश्रुतिस्मृतिभ्यः। गुणवानेवाऽनुरागविषयो न त्वगुणस्तच्छयात । मोक्षश्च सगुणज्ञानादेव । "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" "भोक्तारं यज्ञतपसां सर्वभूतमहेश्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छती"त्यादिस्मृतिभ्यः॥ १० ॥

ननु विष्णोरेव वेदवाच्यत्वे "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह", "यद्वाचा ऽनभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।

---

अथ शब्दशक्तेरचिन्त्यत्वादेव प्रवृत्तिनिमित्तानिमित्तानि लक्षणां च विना साक्ष्यादिशब्दाश्चिन्मात्रं प्रकाशयेयुरिति चेत्तत्राह निर्गुणेति। अलीकं मृषा। न तदित्यादिवाक्यैः सगुणादन्यस्य चिन्मात्रस्योत्कृष्टस्य प्रतिषेधात्। तया कुसृष्ट्या स्वगोष्ठ्यां साधितोऽपि निर्गुणो न पुमर्थ इत्याह- गुणवानिति। दुःखहरः सुखार्पकश्चानुरागयोग्यो, न तु तद्विलक्षणः। ततोऽपार्थस्ते श्रम इति भावः। सगुणस्य पुरुषार्थत्वं दर्शयति मोक्षश्चेति। यदेति मुण्डके। भोक्तारमिति श्रीगीतासु ॥ १० ॥

विष्णोः सर्ववेदवाच्यत्वमाक्षिपति—नन्विति। यत इति तै-

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इत्यादिश्रुतेः, "यतोऽप्राप्य निवर्तन्ते वाचश्च मनसा सह । अहं वान्य इमे देवास्तस्मै भगवते नम" इत्यादिस्मृतेश्च का गतिरिति चेन्न । साकल्याद्वाच्यतायास्तद्गतेर्दर्शयिष्यमाणत्वात् । सार्वज्ञ्यादयः शब्दाः सार्वज्ञ्यादिना निमित्तेन भगवति प्रवर्तन्ते । निर्गुणादयस्तु नैर्गुण्यादिनेति कृत्स्नवेदस्य भगवत्परत्वम् । इत्थं च सर्वे वेदा यत्पदमामनन्ति इत्यादिश्रुतिस्मृत्यबाधः ॥ ११ ॥

तदिदं शुद्धस्य पूर्णस्य विष्णोर्वेदवाच्यत्वं भगवता सूत्रकारेणोक्तम्—ईक्षतेर्नाशब्दम-इत्यस्मिन्नधिकरणे वेदेषु वाच्यत्वदर्शनादशब्दं ब्रह्म न भवति किन्तु शब्दवाच्यमेव भवतीति भाषितं च । यत्त्वशब्दमिति प्रधानं व्याचष्टे

---

त्तिरीयके । यतो ब्रह्मणो वाङ्मनश्च निवर्तत इत्यर्थः । यदिति । केनोपनिषदि । यद्ब्रह्म वाचाऽनभ्युदितं प्रोक्तं नेत्यर्थः । अभ्युद्यते प्रकाश्यते । नेदमिति । इदं मनः प्रभृति ब्रह्म नेत्यर्थः । यदिति न शृणोति न श्रूयते । यत इति तृतीये मैत्रेयवचनात् । का गतिरिति । एषु वाच्यत्वप्रतिषेधाल्लक्ष्यता तु भवेदिति भावः । ततश्च सर्ववेदवाच्यत्वक्षतिरिति स्फुटार्थमन्यत् ॥ ११ ॥

उक्तेऽर्थे व्याससंमतिमाह—तदिदमिति । व्याख्यान्तरं निराकरोति यत्त्विति । व्याचष्टे केवलाद्वैती । तस्यापि प्रधानस्या-

तत्र तस्याप्यजामेकामित्यादिशब्दवाच्यत्वात् ॥ १२ ॥

किञ्च विज्ञानकाण्डं साक्षादेव ब्रह्म प्राह—"तं त्वौपनिषदं पुरुषं पृच्छामी"ति श्रुतेः। कर्मकाण्डन्तु ज्ञानाङ्गकर्मप्रतिपादनात् परम्परयेति "तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेने"ति श्रुतेः "यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवा" इति स्मृतेश्च ॥ १३ ॥

ननु वृष्टिपुत्रस्वर्गादिफलकानि कर्माणि विदधानोऽसौ प्रतीयते । मैवम्, तथा तद्विधानस्य प्ररोचनाजनकत्वात् । कारीर्यादिफलस्य वृष्ट्यादेर्दृष्टत्वेन वेदे

---

पीत्यर्थः । अजामेकामित्यादिमन्त्रेऽजाशब्देन प्रधानमुच्यते॥ १२॥

ननु ज्ञानकाण्डे विष्णोर्वाच्यता शक्या वक्तुं, कर्मकाण्डे तु न शक्यते वक्तुम् । तत्र हि साङ्गेतिकर्तव्यताकं कर्मैव प्रतिपाद्यमिति चेत्तत्राह–किञ्च ज्ञानेति । तं त्विति बृहदारण्यके । उपनिषदा प्रतिपाद्यते औपनिषदः। शैषिकोऽण् । तमेतमिति तत्रैव । तं परमात्मानम् । अत्र वेदानुवचनादीनां कर्मणां विविदिषाङ्गत्वं विस्फुटम् । यत इति श्रीगीतासु । सिद्धिं स्वपरात्मज्ञानलक्षणाम् ॥ १३ ॥

अत्राशङ्कते–नन्विति । 'कारीर्या यजेत वृष्टिकाम' इत्यादिको वेदो वृष्ट्यादिफलकानि कर्माणि विधत्ते न तु विष्णुफलकं

सश्रद्धस्य तदभिरुच्या तदर्थं सम्यग्विचारयतो "यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात् प्रैति स कृपण इत्यब्रह्मज्ञस्य दैन्यं तमेतं वेदानुवचनेन" त्यादिना कर्मणां तज्ज्ञानाङ्गताञ्च विजानतो निष्कामानि तान्यनुतिष्ठतो ब्रह्मधिषणामसौ जनयतीति सिद्धं तस्य सर्वस्य तत्परत्वम् ॥ १४ ॥

यदुक्तम्—"परोक्षवादो वेदोऽयं बालानामनुशासनम् । कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥ वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे । नैष्कर्म्यं लभते सिद्धिं रोचनार्था फलश्रुति"रिति कामितस्यैव स्व-

---

ज्ञानमित्यर्थः । ज्ञानकाण्डमपि क्रत्वर्थकर्तृदेवताप्रतिपादनात् कर्मपरमेवेति भावः । निरस्यति नैवमिति । तथेति । वृष्ट्यादिफलकतयेत्यर्थः । प्ररोचना रुचिः । तज्जनकताप्रकारमाह—कारीर्यादीनि । यो वा इति बृहदारण्यके । अक्षरं ब्रह्म । प्रैति परलोकं याति म्रियत इत्यर्थः । तानि कर्माणि । अनुतिष्ठतः कुर्वतः । असौ वेदः ॥ १४ ॥

उक्तां व्यवस्थां प्रमाणयति—यदुक्तमित्यादिना । परोक्षेत्येकादशे । वेदः कर्ममोक्षाय कर्माणि विधत्ते न तु वृष्टिपुत्राद्यर्थम् । यदयं परोक्षवाद आकृत्यार्थवक्ता बालानामनुशासने यथा भवति तथा । तत्र दृष्टान्तोऽगदं यथेति । कटुकमौषधं पाययन् पिता यथा फाणितेन प्रलोभयन् पाययति दत्ते च तत् , न चौ-

र्मादेः फलत्वेन प्रतीतेरकामितोऽसौ न भवेत् । किन्तु चित्तशुद्धिरेव ज्ञानोदयार्था भवेदिति ॥१५॥

एतेनेदं च निरस्तम् । तथा हि—नवीनाः कल्पयन्ति । आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते । तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वादिति विधिकाण्डे कृत्स्नस्य वेदस्य क्रियापरत्वनिरूपणान्न तस्य विष्णुपरत्वम् । तत्र कर्मकाण्डं साक्षादेव क्रियां निरूपयति । ज्ञानकाण्डन्तु तदङ्गभूतकर्तृदेवताप्रकाशनद्वारैवेति ॥ १६ ॥

---

षधपानस्य फाणितलाभः फलं किन्त्वारोग्यमेव; तथा दृष्ट्यादिफलैः प्रलोभयन् वेदः कर्ममोक्षाय कर्माणि विधत्ते । तस्माद्वेदोक्तमेव कुर्वाणो न तु तन्निषिद्धम् । ननु कर्माणि कर्तुः प्रीतिस्तत्फलं च स्यादेव न तु नैष्कर्म्यसिद्धिरिति चेत्तत्राह—निःसङ्गोऽभिनिवेशशून्यः । ईश्वरेऽर्पितं न तु फलोद्देशेन । ननु श्रुतत्वात् फलं स्यादेवेति चेत्तत्राह-रोचनार्थेति । औषधपाने फाणितदर्शनवदित्यर्थः ॥ १५ ॥

एतेनेति । सर्वस्य वेदस्य विष्णुपरत्वनिरूपणेन । इदं वक्ष्यमाणं सर्वस्य वेदस्य क्रियापरत्वम् । नवीनाः प्रभाकरादयः । विधिकाण्डे कर्ममीमांसायाम् । क्रियामग्निहोत्रादिकाम् । ज्ञानकाण्डं त्विति । तत्र यज्जीवप्रतिपादनं तत्कर्मकर्तुर्यजमानस्य यच्च विष्णोस्तत्कर्मेज्याया देवताया इति कर्माङ्गयोरुभयोः प्रतिपादनमित्यर्थः ॥ १६ ॥

यत्तु प्रकरणभेदा“त्तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयत” इत्यादिना क्रियाफलविगानाच्च न ज्ञानकाण्डं क्रियापरं किन्तु ब्रह्मपरमेवेति वदन्ति, तत्र भूतार्थविषयत्वे नैरर्थक्यप्राप्तेः “स्वर्गकामो यजेत” “तस्माद ब्राह्मणः सुरां न पिवेदि”-त्यादीनि प्रवृत्तिनिवृत्तिबोधकान्येव वाक्यान्यर्थवन्ति वीक्ष्यन्ते, न तु सप्तद्वीपा वसुन्धरेत्यादीनि भूतवस्तुपराणि । तस्मात् कृत्स्नस्य क्रियापरत्वमिति ॥१७॥

तदिदं करकृतद्युमणिपिधानवदुपहासास्पदं कुबुद्धिविजृम्भितं “सर्वे वेदा यत्पदमामनन्ती”त्यादिश्रुतिस्मृतिभ्यः, ईदृशजैमिन्युक्त्यदर्शनाच्च । आम्नायस्ये-

---

सिद्धान्तयुक्तिं श्लथयति—यत्त्विति । प्रकारणेति । कर्मकाण्डाज्ज्ञानकाण्डस्य भिन्नत्वाद् भिन्नविषयत्वाच्चेत्यर्थः । ननु कर्माङ्गकर्तृदेवताप्रतिपादकत्वाज्ज्ञानकाण्डस्य कर्मकाण्डानुगतिर्भविष्यतीति चेज्ज्ञानकाण्डे कर्मफलनिन्दनान्न भविष्यतीत्याह—तद्यथेति छान्दोग्ये । कर्मजितो दुर्गादिः पुण्यजितो स्वर्गादिः । भूतार्थेति । ज्ञानकाण्डस्यानादिसिद्धजीवेशप्रतिपादकत्वे निष्फलत्वप्रसङ्गादित्यर्थः । क्रियापरस्य ग्रन्थस्य सफलत्वं सिद्धवस्तुपरस्य तु निष्फलत्वं दर्शयति स्वर्गेत्यादिना । प्रकटार्थम् ॥१७॥

प्रत्याचष्टे तदिदमित्यादिना । सर्वे वेदा इति । आदिशब्दाद्वैदैश्च सर्वैरहमेव वेद्य इत्यादि ग्राह्यम् । ईदृशेति । एतदर्थकजैमिनि-

त्यनेन कृत्स्नस्य कर्मकाण्डस्य क्रियापरत्वे संश्रिते तदन्तर्गतानां सोऽरोदीदित्यादीनां केषाञ्चिद्वाक्यानां तदेकवाक्यत्वाय तद्भूतानामिति समर्थनम् ॥ १८ ॥

तथा हि—आम्नायस्येति पूर्वपक्षसूत्रम् । तस्यार्थः—चोदनालक्षणो धर्म इत्युपक्रमात् तस्य ज्ञानमुपदेश इति मध्ये परामर्शात्तद्भूतानामित्युपसंहाराच्चाम्नायः क्रियार्थ इत्यवगम्यते । ततश्चाम्नायस्य वेदस्य क्रियार्थत्वाद्यज्ञादिक्रियापरत्वादतदर्थानां पुरुषानधीनार्थत्वेन विधौ पर्यवसायितुमशक्यानां सोऽरोदीत्तद्रोदीत्तद्रुद्रस्य रुद्रत्वं प्रजापतिरात्मनो वपामुदखिदत् । देवा वै देवयजनमध्यवसाय दिशो न प्रजानन्नित्येवमादीनां च वेदवाक्यानामानर्थक्यं धर्मप्रमितिरूपार्थप्रतिपादकत्वविरहः । तस्मादेवंजातीयकं वाक्यजातमनित्यमुच्यते । अनित्यमिव न त्व-

---

वाक्यालाभाच्चेत्यर्थः । ननु तद्भूतानामिति जैमिनिवाक्यं दृश्यते इति चेत्तत्राह—आम्नायस्येत्यादि ॥ १८ ॥

तथा हीति । कर्मकाण्डस्यैव जैमिनिमते क्रियापरत्वं न तु ज्ञानकाण्डस्यापीति पूर्वोक्तमर्थं दर्शयतीत्यर्थः । चोदनेत्यादीनि जैमिनिसूत्राणि बोध्यानि । अतदर्थानां अक्रियार्थानां वाक्यानामित्यन्वयः । नित्यत्वेति । औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति

नित्यमेव । अपौरुषेयत्वान्नित्यत्वाभ्युपगतिविरोधाच्च । रोदनवयोतृखातदिगज्ञानादिरूपसिद्धार्थबोधकत्वात्तस्याक्रियार्थत्वम् ॥ १९ ॥

---

जैमिनिना वेदस्य तदर्थस्य तयोः सम्बन्धस्य च नित्यत्वं स्वीकृतम् । तस्य स्वीकारस्य विरोधापत्तेश्चेत्यर्थः ॥ १९ ॥



तद्भूतानामिति सिद्धान्तसूत्रम्, तस्यायमर्थः। तेषु पदार्थेषु रोदनादिषु भूतानां वर्तमानानां पदानां सोऽरोदीदित्यादीनां क्रियार्थेन पदेन यजेतेत्यादिना समाम्नायः समुच्चारणं सम्बन्ध इति यावत्। कुतः? अर्थस्य तन्निमित्तत्वात्। अर्थः पदार्थस्तस्य तन्निमित्तत्वाद्वाक्यार्थप्रत्ययनिमित्तत्वात्। पदानि तावत् स्वार्थानभिदधति। पश्चात्ते पदार्था आकाङ्क्षायोग्यतासन्निधिसाचिव्याद् वाक्यार्थमवबोधयन्तीति। तस्मादाकाङ्क्षादिमहिम्ना सोऽरोदीदित्यादिवाक्यानां कथञ्चिद् विध्येकवाक्यता कल्प्येति ते क्रियायां तथा तथाविष्टा बभूवुस्तस्मादन्यैरप्यावेशेन सा कार्येति। न च जैमिनिना तेषां वाक्यार्थानां स्वार्थे प्रामाण्यं त्यक्तम्। औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इति शब्दार्थसम्बन्धनित्यत्वस्वीकारविरोधात् सर्वेषां प्रमाणानां स्वविषयावगतिपर्यवसायित्वाच्च॥ २०॥

---

तद्भूतानामित्यादिकं प्रायः प्रकटार्थम्। औत्पत्तिकस्त्विति जैमिनिसूत्रखण्डः। वेदशब्दस्य तदर्थस्यौत्पत्तिकः स्वाभाविकः सम्बन्ध इत्यर्थः। सर्वेषामिति। प्रत्यक्षादीनि प्रमाणानि स्वविषयाणां घटादीनामवगतिषु ज्ञानेषु पर्यवस्यन्त्यन्यथा तेषां प्रमाणत्वं हीयेत। प्रमाजनकं खलु प्रमाणमुच्यते॥ २०॥

न च ज्ञानकाण्डस्यापि कर्मकाण्डैकवाक्यता शक्या वक्तुं प्रकरणभेदात् श्रुतहान्यश्रुतकल्पनप्रसङ्गात्। प्रत्युत कर्मतत्फलयोस्तुच्छतया प्रतिपादनाच्च ॥ २१ ॥

न च प्रवृत्तिनिवृत्तिपरताविरहिणो भूतात्मवस्तुविषयस्य ज्ञानकाण्डस्य 'सप्तद्वीपा वसुन्धरे'त्यादिवाक्यवदानर्थक्यम् । तस्य ब्रह्मास्तित्वबोधनेनैवार्थवत्त्वात् निधिसत्त्वावबोधिवाक्यवत् । यथा त्वद्गृहे निधिरस्तीत्याप्तवाक्यात् पुंसो हर्षरूपोऽर्थो भवेत्तथा परमानन्दरूपं मदंशि ब्रह्मास्तीति तत्सत्त्वावगमात् स इति नाऽनर्थक्यप्राप्तिस्ततस्तदर्थाप्रवृत्तिश्च । पुत्रस्ते जातो नाऽयं सर्प इति स्वरूपपरेष्वपि वाक्येषु हर्षभयनिवृत्तिरूपोऽर्थो

---

यत्तूक्तं ज्ञानकाण्डमपि कर्माङ्गकर्त्रादिप्रतिपादनेन कर्मकाण्डानुगामीति तदिदानीं निराकरोति—न च ज्ञानेति । श्रुतेति । ज्ञानकाण्डस्यात्मपरत्वं श्रुतं हीयेत । अश्रुतं कर्मपरत्वं कल्प्यं स्यादित्यर्थः । प्रत्युतेति । प्लवा ह्येते अदृढा यज्ञरूपा इति कर्म। तद्यथेहेति। कर्मफलं स्वश्च ज्ञानकाण्डेन निन्द्यते । तस्य कथं कर्मकाण्डानुसारित्वमित्यर्थः ॥ २१ ॥

यच्चोक्तं-प्रवृत्तिनिवृत्तिक्रियाबोधकानि वाक्यानि फलवन्ति न तु सिद्धवस्तुबोधकानि तथेति तन्निरस्यति—न च प्रवृत्तीति । भूतात्मेति । पूर्वसिद्धजीवब्रह्मप्रतिपादकस्येत्यर्थः ।

दृष्टः। तस्मादानर्थक्यवादः पुमर्थानुपयोग्युपाख्यानादि-भूतार्थविषयो बोध्यः। इतरथा प्रतिषेधकानामपि तत्प्राप्तिरक्रियार्थत्वात्। 'न सुरां पिबे'दिति हि निवृत्ति-रुपदिष्टा' न तु सा क्रिया, किन्तु प्रसक्तक्रियानिवृत्त्यौ-दासीन्यमेवेति ॥ २२ ॥

किञ्च द्विरूपं ब्रह्मेति जैमिनेरभिमतम्—अनुष्ठेयं क्रियारूपं प्राप्यं चित्सुखरूपं चेति। 'यज्ञो वै विष्णु'रिति 'ब्रह्मविदाप्नोति परं तदेषाभ्युक्ता' 'सत्यं ज्ञानमनन्तं ब्रह्म' 'आनन्दो ब्रह्मे'ति चैवमादिश्रुतेः। तत्र पूर्वानुष्ठानमन्तरा परप्राप्तिर्न स्यादिति तत्रैव तत्परः। ब्रह्मनिष्ठा तु तस्य

---

आनर्थक्यं फलसत्त्वावगमाद् ब्रह्मास्तित्वज्ञानात् परमानन्दरूपोऽर्थः। तदर्थप्रवृत्तिस्तत्प्रापिका श्रवणमननादिः। लौकिकार्थं दृष्टान्तयति पुत्रस्ते इति। ननु तदर्थाम्नायस्येति सूत्रोक्त आनर्थक्यवादः क नेयस्तत्राह तस्मादिति। इतरथेति। क्रियार्थभिन्नानां सर्वेषां वाक्यानामानर्थक्येऽङ्गीकृते सतीत्यर्थः। प्रतिषेधकानां 'न सुरा'मित्यादीनाम् ॥ २२ ॥

जैमिनेर्हरिभक्तत्वं प्रतिपादयति किञ्च द्वीति। अनुष्ठेयमिति। ब्रह्मणः क्रियारूपत्वं वेदराशित्ववद् वाचनिकं बोध्यम्। तदेषेति। तद् ब्रह्माऽभिमुखीकृत्यैषा ऋक् प्रवृत्तेत्यर्थः। पूर्वेति। यज्ञादिकरणं विनेत्यर्थः। परप्राप्तिश्चित्सुखब्रह्मलाभः। तत्रैवेति।

बादरायणभगवच्छिष्यत्वात्, तेन तन्मतोपन्यासाच्च। तस्माद् ब्रह्मैव वेदवाच्यमिति निर्णीतम् ॥ २३ ॥

ननु 'सर्वे वेदा यत्पदमामनन्ति' 'यद् वाचाऽनभ्युदित'मित्यादिषु वाच्यत्वावाच्यत्वयोः श्रवणादेवं प्रतीयते। मायोपाधिरीश्वरो वेदवाच्यो निर्विशेषः। शुद्धस्तु तल्लक्ष्य एव भवेत्। न च शुद्धे शब्दप्रवृत्तिनिमित्तं नामजात्यादि किञ्चिदस्ति अनामरूपत्वस्मरणादिति। मैवम्। वेदवाच्यस्यैवेश्वरस्य शुद्धत्वात्। 'सत्त्वादयो न सन्तीशे' इत्यादिस्मृतिभ्यः। तस्य निर्विशेषत्वं तु न पूर्वत्र स्वरूपानुबन्धिगुणस्मरणात् डित्थादिवत्। कल्पितं नामादि तस्य तस्य नास्ति स्वरूपानुबन्धि, दिव्यन्तु तदस्तीति पुरतः स्फुटीभविष्यतीति ॥ २४ ॥

---

यज्ञाद्यनुष्ठाने। तद्धरो जैमिनेरभिनिवेश इत्यर्थः। ब्रह्मनिष्ठेति। तस्य जैमिनेः। तेन बादरायणेन तस्य जैमिनिमतस्य स्वसूत्रेषूपन्यासात् ॥ २३ ॥

एवं कर्मठेष्वनीश्वरेषु प्रभाकरादिषु निरस्तेषु पुरा निरस्तोऽपि निर्विशेषविदैक्यवादी निस्त्रपः पुनः शङ्कते—नन्विति। न चेति। नाम संज्ञा। तस्येति। वेदवाच्यस्य शुद्धस्य। पूर्वत्र ग्रन्थे। तदिति नामादीत्यर्थः ॥ २४ ॥

तस्मादेवमत्र बोध्यम् । स भगवान् स्वयमेव वेदरूपः स्वरूपानुबन्धिभिस्तत्सिद्धैर्नामाभिर्गोचरीभवतीति । 'नमो वेदादिरूपाय ॐकाराय नमो नमः' 'तस्य वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद' इत्यादिश्रवणात् । 'वेदो नारायणः साक्षात् स्वयंभूरिति शुश्रुम'—इत्यादिस्मृतेश्च । अत औपनिषद इति परात्मनः समाख्या ॥ २५ ॥

वेदस्य नित्यत्वञ्च भगवता सूत्रकारेणाऽभिहितम्—'अत एव च नित्यत्वमि'ति । न च वर्णमात्रस्य तस्य सा स्तुतिरिति वाच्यम् । आविर्भावान्तरवद्वर्णात्मकोऽयं

---

शुद्धस्य वेदवाच्यत्वं वक्तुं प्रवर्तते तस्मादेवमिति । अत्र वेदान्तशास्त्रे । त्वयाप्येवं मन्तव्यम् । कथमिति चेत्तत्राह—स भगवानित्यादि । तत्सिद्धैर्वेदात्मकैर्नामभिर्गोचरीभवतीति वाच्योऽस्ति । नम इति श्रीरामोपनिषदि । तस्येति बृहदारण्यके । इह भगवत्प्राणत्वं वेदस्योक्तम् । वेद इति षष्ठे । अतः स्वात्मकवेदवाच्यत्वात् । समाख्या यौगिकः शब्दः ॥ २५ ॥

ननु वेदस्य शब्दराशित्वेन तृतीयक्षणध्वंसप्रतियोगित्वादनित्यत्वमिति चेत्तत्राह—वेदस्येति।अत इति ब्रह्मसूत्रम् । नित्येन्द्राद्याकृतिवाचित्वात् कर्तुरस्मरणाच्च वेदस्य नित्यत्वमित्यर्थः । तस्याविर्भावतिरोभावौ स्तः । तावज्ञैरुत्पत्तिविनाशौ कथ्येते इति भावः ।

परस्याविर्भाव इति तेनैव श्रुत्यादिबलेन गृहीते तदभेदे तत्तत्सम्भवात् ॥ २६ ॥

अत एव तद्भूतानां नाम्नां चिद्रूपतामोचकता कात्स्न्र्याऽगोचरता च स्वरूपवदेव निरूपिता दृश्यते। 'तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन। आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे' 'ॐ तत्स'दिति ऋक्श्रुतौ। 'सकृदुच्चारितं येन हरिरित्यक्षरद्वयम्। बद्धः परिकरस्तेन मोक्षाय गमनं

---

तस्य वेदस्य सा भगवदात्मकता नित्यता च स्तुतिः प्रशंसेत्यर्थः। आविरिति। यथा देवाकारस्य हरेर्हंसमत्स्यादिर्विजातीयाकार आविर्भावस्तथा वर्णराशिर्वेदोऽपि तस्याविर्भाव इति। नमो वेदादिरूपायेत्यादिबलेनैव लब्धे तदभेदे भगवदैक्ये वर्णराशेर्वेदस्यापि नित्यत्वचिद्रूपत्वादिसंभवादित्यर्थः ॥ २६ ॥

आर्थिकं चिद्रूपत्वादि वाचनिकं कर्तुं प्रयतते—अत इति। भगवद्रूपत्वादेवेत्यर्थः। तद्भूतानां वेदात्मकानाम्। तमिति। उ संबोधने हे विष्णो! यथाविदो यथार्थज्ञा वयं पूर्व्यमनादिं ऋतस्य सत्यस्य परव्योम्नो गर्भं गर्भवत्तस्मिन्निहितं तं त्वां स्तोतारः स्तुतवन्तः। जनुषा जन्मचरितेन पिपर्तन पूरयतः; अस्य ते नाम आ ईषज्जानन्तः विवक्तन केवलं तद्ब्रुवाणाः सुमतिं त्वद्विषयां धियां भजामहे। कीदृशं नाम चिद्विज्ञानस्वरूपम्, अतो महः स्वप्रकाशम्। तन्नाम किञ्चिन्निर्दिशति ॐमिति। एवमुक्तं श्रीगीतासु—ॐतत्स-

प्रती'त्यादौ 'नामकर्मस्वरूपाणि न परिच्छेदगोचरे(?)। यस्याऽखिलप्रमाणानां स विष्णुर्गर्भगस्तवे'त्यादौ च स्मृतौ॥ २७॥

एवं सति यदनात्मत्वं क्वचिदुच्यते तत्तु 'अप्रसिद्धेस्तद्गुणानामनामासौ प्रकीर्तितः। अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जना'दित्यादि स्मृत्या समाधेयम् ।

---

दिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति। 'ॐमित्येतत् ब्रह्मणो नेदिष्ठं नामे'ति 'तत्त्वमसी'ति 'स सदेव सौम्ये'ति च श्रुतेरोङ्कारादीनि त्रीणि परमात्मनो नामानि भवन्ति। कृष्णादिनाम्नामुपलक्षणमेतत्। मोचकतामुदाहरति सकृदिति। भारतेऽनुस्मृतौ दृष्टम्। कात्स्न्र्येनाऽगोचरतामुदाहरति—नामकर्मेति श्रीवैष्णवे। अत्र स्वरूपस्येव नामकर्मणोश्च कात्स्न्र्येन प्रमाणविषयतोक्ता ॥ २७ ॥

न तु—'अनामरूप एवायं भगवान् हरिरीश्वरः। अकर्तेति च यो वेदैः स्मृतिभिश्चाभिधीयते' ॥ इत्यादीनि ब्राह्मादिवाक्यानि कथं सङ्गतिमन्तीति तत्राह—एवं सतीति। स्वरूपानुबन्धिनामरूपत्वे निर्णीते सतीत्यर्थः। अप्रसिद्धेरिति। वासुदेवाध्यातये एतदर्थकानन्तरम्—'अप्राकृतत्वाद्रूपस्याप्यरूपोऽसावुदीर्यते। सम्बन्धेन प्रधानस्य हरेर्नास्त्येव कर्तृता। अकर्तारमतः प्राहुः पुराणं तं पुराविदः'॥ इति सार्द्धकम्बोध्यम्। अनामासौ इति ब्राह्मे। प्राकृतेति। देवमानवादिसाम्येन ग्रहणादित्यर्थः। 'न नामरूपे गुणजन्मकर्मभिर्निरूपितव्ये तव तस्य साक्षिणः। मनोवचोभ्यामनुमेयवर्त्मनो देवक्रियायां प्रति यं तथापि ही'ति श्रीदशमवाक्ये तु हे देव! साक्षिणस्तव गुणादिभिर्ये नामरूपे ते अप्रसिद्धेर्निरूपितव्ये वि-

अप्रसिद्धिश्च प्राकृतवैलक्षण्येनाऽग्रहात्कार्त्स्न्येनाऽविदित-तया वा ॥ २८ ॥

तथा—'न यत्र नाथ विद्यन्ते नामजात्यादिकल्पनाः। तद् ब्रह्म परमं नित्यमविकारि भवानज ॥ न कल्पना-मृतेऽर्थस्य सर्वस्याधिगमो यतः । अतः कृष्णाऽच्युता-

---

दुषामपि याथात्म्येनाऽनुभवितुं शक्ये न भवतस्तथापि क्रियायां शुद्धभक्तौ सत्यां भक्तास्ते प्रतियन्ति याथात्म्येनाऽनुभवन्त्येव । तेषामनुभवस्त्वनुमानेन ज्ञायत इत्याह—मन इति । निवृत्तिमता मनसा कीर्तनवता वचसा च लिङ्गेनाऽनुमेयं वर्त्म प्रेमपद्धति-र्यस्य तवेति व्याख्येयम् । सर्वथा नामरूपाभावे तु तन्निरूपकानि वचांसि व्याकुप्येयुः । 'न विद्यते यस्य च जन्म कर्म वा न नाम-रूपे गुणदोष एव वा । तथापि लोकाप्ययसम्भवाय यः स्वमायया तान्यनुकालमृच्छती'त्यष्टमवाक्ये तु यस्य प्राकृतानि जन्मादीनि न सन्ति तथापि यो लोकाप्ययसम्भवाय जगत्संहार-सर्गार्थमनुकालं तत्तदवसरे स्वमायया कपर्दिपद्मभूरूपधरः संस्ता-नृच्छति प्राप्नोतीति व्याख्यानान्न कोऽपि सन्देहगन्धः । अत्र लोकस्थितये विष्णुरूपधरः सन् जन्मादीनृच्छतीति नोक्तम् । तज्जन्मादीनाममायिकत्वादिति ज्ञेयम् ॥ २८ ॥

तथेति । अप्रसिद्धेस्तद्गुणानामित्यादिस्मृतिदृष्ट्या यथाऽना-मरूप एव यमित्यादिवाक्यानां प्रातीतिकोऽर्थो निरस्तस्तथा-ऽनुपपत्तिदर्शनेन यत्र नाथेत्यादिविष्णवाक्ययोः प्रातीतिकोऽर्थो

ऽनन्त विष्णुनामभिरीड्यसे' ॥ इत्यक्रूरोक्तौ स्फुटार्थोऽपि निरस्तः ॥ २९ ॥

तत्र कल्पनाशब्दो व्यर्थः, नामजात्यादयो नेत्यनेनैवेष्टसिद्धेः । स्वयमेव तत्रैव तद् ब्रह्म परमं नित्यमिति परत्र च रूपं परं सदिति वाचकमक्षरं यदिति ब्रह्माजसच्छब्दानां पारमार्थिकनामतया स्वीकाराच्च । 'अजामेका'मित्यादिष्वजत्वलक्षणा जातिश्च प्रतीता । तथा नामादिकल्पनां निषिध्य पुनः कृष्णादिनामकल्पनोक्तिर्विरुद्धा । न च कल्पनया तस्येड्यभावः, नापि कृष्णादिनामनियमस्तस्यामनियमात्मकत्वात् ॥ ३० ॥

तस्मादयमेव तदर्थः—यत्र कृष्णादिशब्दानां जा-

---

निरसनीय इत्यर्थः ॥ २९ ॥

मुख्यार्थानुपपत्तिं तावदाहुः—तत्रेत्यादिना । इष्टसिद्धेरनात्वनिष्पत्तेः । स्वयमक्रूरेणैव । अजामिति । प्रकृतिर्जीवेश्वरा अजास्तेष्वजत्वं जातिर्नित्यत्वे सत्यनेकसमवेतत्वात् । न चेति । तस्य सर्वेशस्य कृष्णस्य । ईड्यभावः स्तुत्यता । तस्यां कल्पनायां अनियमात्मकत्वादिति कल्पनायां नियमो नास्ति मनुष्यपश्वादिषु देवदत्तादिडित्थादिनाम्नां यथेच्छं कल्पनीयत्वदर्शनात् । न चैवं प्रकृते शक्यते वक्तुं तत्र नामसहस्रस्य नियमेनोक्तम् ॥ ३० ॥

पूर्वपक्षव्याख्यां दूषयित्वा सिद्धान्तव्याख्यामाह—तस्मा-

तीनां देवत्वमनुष्यत्वादीनामादिपदात् कर्मणां च कल्प-ना न, किन्तु—'विशुद्धविज्ञानघनं स्वसंस्थया समाप्तसर्वार्थममोघवाञ्छितम्। स्वतेजसा नित्यनिरस्तमायागुणप्रवाहं भगवन्तमीमहीं'त्युक्तदिशा स्वरूपशक्तिविलासात्मकान्येव तानि सन्ति तद् ब्रह्म भवानित्यन्वयः। प्रपञ्चवैलक्षण्यात्तथेत्याह नेति। सर्वस्यार्थस्य मनुष्यपश्वादिदृष्टवस्तुनः कल्पनां नामादिघटनां विना नाधिगमो व्यवहारेषु बोधो न स्यात्। कल्पितैरेव नामादिभिस्तस्याऽसौ भवेदित्यर्थः। अतस्तद्विलक्षणस्त्वं तद्विलक्षणैरेव विष्णुनामभिर्विष्ण्वात्मकैर्नामभिर्व्यापकनामाभिन्नैरिति यावत्। ईड्यसे स्तूयसे व्यक्तमाहात्म्यीक्रियसे इत्यर्थः। तादृशैरेव तैस्तव महिमा व्यक्तीभवतीत्यर्थः। नाम्नां तादृक्त्वन्तु—'नामचिन्तामणिः कृष्णश्चैतन्यरसविग्रहः। पूर्णः शुद्धो नित्यमुक्तोऽभिन्नत्वान्नामनामि-

---

दिति। पूर्वपक्षिव्याख्याया निरस्तत्वादित्यर्थः। कल्पना आरोपः। विशुद्धविज्ञानेति श्रीदशमे नारदवाक्यम्। स्वसंस्थया स्वानुबन्धिन्या पराख्यया शक्त्या सम्यगाप्ताः सर्वे नामगुणविभूतिरूपा अर्था येन तम्। नामादीनां मायिकत्वं निराकुर्वन् विशिनष्टि स्वचेतसीति। परात्मकेन प्रभावेणेत्यर्थः। तस्येति। मनु-

नो'रिति स्मृतेः । कृष्णादिकं सम्बुध्यन्तम् ॥ ३१ ॥

तस्मात् पूर्णः शुद्धो हरिरेव वेदवाच्यः । स च वेदः कृष्णादिशब्दैराश्रयभूतं शुद्धं विभुचैतन्यं प्रतिपादयति । जीवप्रकृतिकालादिशब्दैस्तु चिज्जडात्मकमाश्रितमिति सिद्धं सर्ववेदवेद्यत्वम् । इत्थाश्चानामादिशब्दाः सर्वत्र व्याख्याताः । यस्तु तेषां स्फुटार्थं जल्पति स एवं प्रष्टव्यः—तैर्ब्रह्मणो बोधः स्यान्न वेति । आद्ये तेपि तस्याख्याः । अन्त्ये तदारम्भवैयर्थ्यापत्तिः । सर्वशब्दावाच्ये लक्षणा तु न सम्भवति ॥ ३२ ॥

'यतो वाचो निवर्तन्ते' 'यद्वाचाऽनभ्युदित'मित्यादिषु

---

व्यपदेशादेर्दृष्टवस्तुनः । असावधिगमः तद्विलक्षणः प्रपञ्चविजातीयः । तादृक्त्वं विष्णवात्मकत्वम् । नामेति पाद्मे । कृष्णादीति । हे कृष्ण हे अच्युत हे अनन्तेति सम्बोधनविभक्त्यन्तमित्यर्थः ॥३१॥

प्रकरणार्थं सङ्गमयति तस्मादिति । विकसितार्थम् । इत्थमिति । अप्रसिद्धगुणतयाऽनामशब्दः अभौतिकमूर्तितयाऽरूपशब्दश्च व्याकृत इत्यर्थः । तेषामित्यनामादिशब्दानां स्फुटार्थं नामरूपशून्यतारूपम् । तैरित्यनामादिशब्दैः । आद्ये बोधः स्यादिति पक्षे । अन्त्ये बोधो न स्यादिति पक्षे । यद्यनामादिशब्देष्वपि लक्षणाऽऽश्रीयते तर्हि सापि त्वन्मते न सम्भवतीत्याह सर्वेति । पूर्वमभाणीत्येतत् ॥ ३२ ॥

अनामादित्वेऽरूपादित्वे च यां दुर्धियः श्रुतिमुदाहरन्ति न तथा

साकल्येन वाच्यत्वं तस्य निषिध्यते। न तु सर्वथैवा-ऽवाच्यत्वमुच्यते, 'सर्वे वेदा यत्पदमामनन्ती'त्यादिश्रुति-स्मृतिनिर्विषयतापत्तेर्यत इत्यपादाननिर्देशानुपपत्तेश्च। अतस्तत्र तत्रैव—'आनन्दं ब्रह्मणो विद्वा'निति। 'तदेव ब्रह्मत्वं विद्धी'ति च पुनस्तस्य गोचरत्वमुक्तम् ॥ ३३ ॥

एवमेव केनोपनिषदि ज्ञातत्वाज्ञातत्वे दृश्येते। 'यदि मन्यसे सुवेदेति दहरमेवापि नूनम्। त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य देवेष्वथ मीमांस्यमेव ते मन्ये विदितम्। नाहं मन्ये सुवेदेति नो न वेदेति वेद च। यो नस्तद्वेद तद्वेद नो न वेदेति वेद च। यस्यामतं तस्य मतं

---

तत्त्वं लब्धुं शक्यमित्याह यत इत्यादिना। यत इत्यपादानेति। गङ्गातो निवृत्तो विप्र इत्यत्र गङ्गादर्शनं किञ्चिदायात्येवेति भावाचत्र तत्रैव तद्वाक्यान्त एवेत्यर्थः। तस्य ब्रह्मणो गोचरत्वं वाग्विषयत्वमुक्तम् ॥ ३३ ॥

स्वशक्त्यनुसारेण ब्रह्मणः प्रतिपादनं न तु सामस्त्येनेत्युक्तां व्यवस्थां द्रढयत्येवमिति। अस्मदुक्तप्रकारेणेत्यर्थः। शिष्ये ज्ञानाभिमानमालक्ष्य गुरुराह यदीति। हे शिष्य अहं ब्रह्म सुवेद सुष्ठु वेद्मीति यदि मन्यसे तर्हि तव तज्ज्ञानं नूनं दहर-मल्पमेव। तदेवाक्षिपन् गुरुराह। हे शिष्य अस्य ब्रह्मणो यद्रूपं तत्त्वं वेत्थ जानासि यदस्य देवेषु नियन्तृतया स्थितं रूपं तत्त्वं वे-

मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानता'मि'ति । इह हि कार्त्स्न्येन ज्ञातत्वमविज्ञातत्वञ्च नास्ति किञ्चिज्ज्ञातत्वमस्त्येवेति निर्णीयते । एवं हि स्मरन्ति 'कार्त्स्न्येन नाऽज्ञोप्यभिधातुमीश' इति। 'अप्रसिद्धेरवाच्यं तद् वाच्यं सर्वागमोक्तितः । अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृत'मिति। अप्रसिद्धिः कार्त्स्न्येनाऽवाच्यतादिः ॥ ३४ ॥

ननु कार्त्स्न्येनाऽवाच्यत्वादिकं कुत इति चेदान-

---

स्येति । न वेद्मेति चेत्तत्राह । तद्रूपं ते मीमांस्यमेव सतीर्थ्यैः सह विचार्यमेवेत्यर्थः । गुरोराशयमालक्ष्य शिष्य आह मन्ये इति । हे गुरो तद् ब्रह्माहमधुना विदितं ज्ञातं मन्ये कथमित्यत्राह तद्ब्रह्माऽहं सुवेद सम्यग् वेदमीति न मन्ये। न वेद न वेदमीति च नो मन्ये किन्तु कथञ्चित्तद्वेद च । चेवेत्यर्थः । एवं स्वज्ञाने दर्शितां विधामन्येषामाह य इति । नोऽस्माकं सतीर्थ्यानां मध्ये यस्तद्ब्रह्म वेद स एवं वेद। तां विधां दर्शयति नो नेति। न वेदेति च। नो नास्ति किन्तु कथञ्चिद्वेदेत्यर्थः । एतदेव पुनर्द्रढयति यस्येति । विजानतां विज्ञानाभिमानिनां, अविजानतां विज्ञानाभिमानशून्यानाम् । उक्तमर्थं स्मृत्या स्फुटयति एवं हीति । कार्त्स्न्येनेति श्रीदशमे । अजो ब्रह्मापीत्यर्थः । अप्रसिद्धेरिति। काण्डेषु त्रिष्वेतत्पदं योज्यम्। परं ब्रह्मतत्त्वम्।३४॥

कार्त्स्न्येनाऽवाच्यत्वे हेतुं पृच्छति नन्विति । जन्मेति श्रीद-

न्स्यादिति गृहाण। यदुक्तम्—'जन्मकर्माभिधानानि सन्ति मेऽङ्ग! सहस्रशः। न शक्यन्तेऽनुसङ्ख्यातुमनन्तत्वान्मयापि हीति। 'द्युपतय एव ते न ययुरन्तमनन्ततया त्वमपि यदन्तराण्डनिचया ननु सावरणाः। ख इव रजांसि वान्ति वयसा सह यच्छ्रुतयस्त्वयि हि फलन्त्यतन्निरसनेन भवन्निधना' इति च। यस्य कार्त्स्न्ये-

---

शमे मुचुकुन्दं प्रति भगवद्वाक्यम्। द्युपतय एवेति। तत्रैव भगवन्तं प्रति श्रुतिवाक्यम्। ननु हे भगवन् सर्वेश्वर द्युपतयो ब्रह्मादयोऽपि तवान्तं पारं न ययुः। त्वमपि तवान्तं न यासि। कुत इत्याहुरनन्ततयेति। स्वरूपगुणविभूतीनामन्ताभावेनेत्यर्थः। न चैवं तव सार्वज्ञ्यहानिर्न खलु खपुष्पाद्यज्ञानेन पण्डितस्याज्ञत्वमिति भावः। अनन्तमाहुः—यस्य तवान्तरा मध्ये सावरणा अण्डनिचया वान्ति परिभ्रमन्ति वयसा कालचक्रेण। तत्र दृष्टान्तः खे वियति रजांसीवेति। सह युगपन्न तु क्रमादित्यर्थः। यद्यत एवं तस्मात्त्वयि श्रुतयः फलन्ति स्वशक्त्यनुसारेण त्वां विषयं विधाय सफला भवन्तीत्यर्थः। न तु कार्त्स्न्येन त्वां निरूपयितुं प्रभवन्तीत्याह अतदिति। समासेन त्वां धर्मिणं निरूपयितुं प्रवृत्ता अतन्निरसनेन भवन्निधना यद्भवन्तीति मणिक्षेत्रात् मृत्पाषाणादीनामपसारणेन यथा मणिलाभस्तथा प्रकृत्यादीनामतद्वस्तूनां निरसनेन ब्रह्मलाभः इत्यनन्तानि तान्यब्रह्मत्वेन निरस्यन्तीनां नः समागतेन प्रलयेन भवति त्वयि निधनं विलयो भवती-

नधिगमो न स्यात्तदज्ञातमिति व्यवह्रियते। 'न तदीदृगिति ज्ञेयं न वाच्यं न च तर्क्यते। पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चित' इति। तस्माद् वेदवाच्यमेव परं ब्रह्म। तदेव जीवजडात्मकात् प्रपञ्चाद् विभिन्नम्। ज्ञातं ध्यातञ्च सदा विद्यां निवारयति च परमानन्दं स्वपदमिति सर्वेषां तत्त्वविदां सिद्धान्तः॥ ३५॥

एवमेव श्रीगीतासु भगवता पङ्कजाक्षेण निगदितं, 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद् वेदविदेव चाऽहम्'।

---

ति कथं स्वत्पारलाभ इत्यर्थः। न तदिति। तद् ब्रह्म। ईदृगिति। परिमितस्वरूपगुणविभूतीति न ज्ञेयम्। किन्त्वपरिमितस्वरूपादिकं तमित्यर्थः। तथा च ज्ञातब्रह्मापि विद्वानब्रह्मोच्यते। दृष्टमेरुरपि पुमान् कात्स्न्र्येनाऽदर्शनाददृष्टमेरुर्यथा। एवमुक्तं श्रीभागवते-'नभः पतन्त्यात्मसमं पतत्त्रिणस्तथा समं विष्णुगतिं विपश्चितः'। ज्ञात मिति। सर्वेषां पराशरादीनाम्॥ ३५॥

पराशरादयश्च ते सर्वे भगवन्मतं विज्ञायैव तथा तथा निर्णिन्युरिति तन्मतमाह-वेदैश्चेति। वेदान्तकृद्बादरायणवपुषा चतुर्लक्षण्या वेदार्थनिर्णयकर्ताऽहमेवेत्यर्थः। वेदविदेव स्वरतो वर्णतश्चाहमेव वेदज्ञ इत्यर्थः। कोऽसौ वेदार्थस्तत्राह-द्वाविति। लोके वेदे लोक्यते तत्त्वमनेनेति निरुक्तेः। द्वाविमौ पुरुषौ तौ कावित्याह क्षरश्चेति। देहक्षरणात् क्षरोऽनेकावस्थो बद्धजीववर्गः। अचित्संसर्गैकधर्मसम्बन्धादेकत्वेन निर्दिष्टः अक्षरस्तत्सम्ब-

'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ यो मामेवमसंमूढो

---

न्धाभावादेकावस्थो मुक्तजीववर्गः । अचिद्वियोगैकधर्माभिसम्बन्धादेकत्वेन चिदेकत्वेन निर्दिष्टः । तौ विशदयति क्षर इति । ब्रह्मादिस्तम्बान्तानि सर्वाणि भूतानि क्षरः कूटस्थः सर्वदैकावस्थो मुक्तस्त्वक्षरः। पूर्वोक्तैर्युक्तैरेकत्वनिर्देशो बोध्यः । यदर्थं द्वौ निरूपितौ तमाहोत्तम इति । अन्यः क्षराक्षराभ्यां भिन्नो न तु तयोरेवैकः स कल्पनीय इति भावः । उत्तमताप्रयोजकं तस्य धर्ममाह—य इति । न च जगदधिधारणपालनलक्षणं कर्म बद्धजीवस्याऽसम्भवात् । न च मुक्तजीवस्य जगद्व्यापारवर्जमिति प्रतिषेधात् । जगद्बिभरणादित्यन्वयः । कथं तमहं परिचिनुयामिति चेन्मामेव तं विद्धीत्याह यस्मादिति । लोके स्मृतिशास्त्रे लोक्यते वेदार्थोऽनेनेति निरुक्तेः । प्रथितः प्रख्यातः । 'जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् । स्तुवन्नामसहस्रेण पुरुषः सततोत्थित' इत्यादिस्मृतौ । एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाऽभिनिष्पद्यते स उत्तमः पुरुषः इत्यादिश्रुतौ चाऽहमेव पुरुषोत्तमत्वेन प्रसिद्ध इत्यर्थः । तात्पर्यद्योतनाय पुरुषोत्तम-

जानाति पुरुषोत्तमम् । स सर्वविद् भजति मां सर्वभावेन भारत! ॥ इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ । एतद् बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारते'ति । एवमन्यत्राऽपि दृश्यते ॥ ३६ ॥

इति सिद्धान्तरत्नाख्ये भाष्यपीठके विष्णोः सर्ववेदवेद्यत्वनिर्णयश्चतुर्थः पादः ॥ ४ ॥

---

त्ववेत्तुः फलमाह यो मामिति । एवं मत्कृतनिरुक्त्या न तु महावृक्षादिवत् संज्ञामात्रत्वेनेत्यर्थः । असंमूढो मम पुरुषोत्तमत्वे निःसन्देहः सन् स सर्ववित् सर्वस्य वेदस्य त्रिश्लोक्यर्थे तात्पर्य्यात् । स एव मां सर्वभावेन भजत्याराधयति। तत्त्वे सन्दिहानस्तु सर्ववेदज्ञोऽप्यज्ञः षोडशोपचारां पूजां मे कुर्वाणोऽप्यभक्तभावः । न चैतदपात्रेषु प्रकाश्यमिति भावेनाह-इतीति । बुद्धिमान् परोक्षज्ञानी । कृतकृत्योऽपरोक्षज्ञानी च ॥ ३६ ॥

इति श्रीगोविन्दभाष्यपीठकटिप्पण्यां चतुर्थस्ताक्ष्र्यपादो व्याख्यातः ॥ ४ ॥



# पञ्चमः पादः ।

अत्राहुः—स्वतः परब्रह्मभूतस्यैव जीवस्याऽज्ञानहेतुकः प्रपञ्चः । स पुनरद्वैतज्ञानमात्रनिवर्तनीय इत्यतोऽस्याऽनर्थबीजस्य विनाशाय परापरात्मनोरद्वैतमेवेह विजिज्ञास्यं तत्रैव शास्त्रतात्पर्य्यमिति ॥ १ ॥

अर्थात् स्वाभीष्टान्निरूपयताचार्य्येणाऽन्तरा पतितः केवलचिदद्वैती निरस्तः । मधुररसान् भुञ्जानेनागतः श्वेव लोष्ठानि निक्षिपता । अथ कृत्स्नबलभृत् प्रतिप्रवृत्तस्तद्वादी विभग्नमुखतया निरस्यः । तदर्थं वामनत्रिविक्रमाख्यौ पञ्चमषष्ठौ पादौ प्रवर्त्त्येते । युक्तिच्छलप्राचुर्यादाद्यो वामनः । श्रुतियुक्तिभिरतिदीर्घत्वात्परस्त्रिविक्रमः । अत्राहुरिति । अत्र विज्ञानानन्दात्ममूर्तिर्नित्यधामादिकः सर्वावतारी मायादिस्वेतरनियन्ता पुरुषोत्तमो ज्ञातो ध्यातश्च सन् सर्वदुःखहरः स्वपर्य्यन्तसर्वार्थप्रदश्चेति सन्निरूपितेऽर्थे केवलाद्वैतिनस्तमसहमानाः स्वसिद्धान्तं दर्शयन्तीत्यर्थः । अज्ञानेति । रज्ज्वज्ञानेन यथा सर्पादिसर्ग इत्यर्थः । स पुनरद्वैतेति । रज्जुमात्रज्ञानेन यथा सर्पादिसर्गविनाश इत्यर्थः । अस्येति । अनर्थबीजस्य ब्रह्मभूतस्वाज्ञानस्येत्यर्थः । परापरात्मनोरद्वैतमिति । विजिज्ञास्यं तत्त्वमस्यादिवाक्यैर्ज्ञातुमेष्टव्यम् । ननु द्वा सुपर्णेत्यादिवचसां का गतिस्तत्राह—तत्रैवेति ॥ १ ॥

इदमसत्, अद्वैतासिद्धेः। तथा हि—तदद्वैतं ब्रह्मातिरिक्तं ब्रह्मात्मकं वा। नाद्यः, अद्वैतहानात्। तदातिरिक्तस्य मिथ्यात्वेन शास्त्रस्यातत्त्वावेदकत्वापाताच्च। सत्यता च भेदस्य। मिथो विरुद्धयोरन्यतरनिषेधस्याऽन्यतरविधिव्याप्तत्वात्। नाऽप्यन्त्यः, आत्मनः स्वप्रकाशत्वेन नित्यसिद्धत्वाच्छास्त्रस्य सिद्धसाधनतापत्तेः॥२॥

ननु तत्त्वेन तस्य नित्यसिद्धत्वेऽप्यद्वैतादिविशेषाकारेणाऽनधिगतेर्न तस्य दूषणम्। यथा तव गुणगुणिनोरद्वैतेपि गुणिनः स्पर्शेनोपलम्भेपि गुणस्याऽनधिगतिरेव-

---

निरस्यति—इदमसदिति। तदतिरिक्तस्येति। ब्रह्मभिन्नार्थमात्रस्य मिथ्यात्वेन तदतिरिक्तस्यापि मिथ्यात्वम्। ततस्तत्त्वमस्यादिशास्त्रं मिथ्यार्थावेदकं स्यादित्यर्थः। सत्यता च भेदस्येति। भावाभावरूपत्वात्तेजस्तमोवन्मिथो विरुद्धे द्वैताद्वैते। ब्रह्मातिरिक्तेऽद्वैते मृषाभूते सति तद्बाधितद्वैतमुज्जीवेदित्यर्थः। नाप्यन्त्य इति। ब्रह्मात्मकं चेदद्वैतं तर्हि स्वप्रकाशतया नित्यसिद्धं ब्रह्म साधयच्छास्त्रं सिद्धसाधनं निरर्थकं स्यादिति भावः॥२॥

चिदद्वैती पुनः प्रत्यवतिष्ठते नन्विति। तत्त्वेन स्वप्रकाशत्वेन। तस्यात्मनो ब्रह्मणः। तस्येति शास्त्रस्य। तत् सिद्धसाधनत्वे दूषणं नेत्यर्थः। यथेति। तव द्वैतिनः। गुणगुणिनो रूपघटयोः। यथा त्वन्मते त्वगिन्द्रियेण घटे साक्षात्कृतेऽपि तदभिन्नरूपसाक्षात्काराय प्रवृत्तं दृगिन्द्रियं न व्यर्थं तथा

मिति चेत्, मन्दमेतत्। आत्मनो निर्विशेषत्वादनधि-+(?)शेषाभावात्। अत एव गुणिदृष्टान्तोऽपि निरस्तः। यतो रूपं घटाभिन्नमपि तद्विशेषतया मतं न तु तन्मात्रम्॥३॥

ननु स्यादिदं दूषणं शास्त्रं चेत् सदद्वैतमाहेति ब्रूमः। किन्तर्हि? आवरणरूपमज्ञानं निवर्तयतीति निवृत्ते त्वावरणेऽद्वैतं स्वत एव सिद्धमिति चेत, नैतच्चतुरस्रम्। न ह्यज्ञानं कस्यचिदावश्यकं स्वप्रकाशत्वेन नित्यसिद्धत्वात् स्वरूपस्य विशेषाभावाच्च॥ ४ ॥

---

स्वप्रकाशतया नित्यसिद्धेपि ब्रह्मात्मन्यद्वैतनित्यशुद्धबुद्धमुक्तत्वरूपं विशेषं बोधयच्छास्त्रं न व्यर्थमित्यर्थः। परिहरति मन्दमिति। भ्रान्तमित्यर्थः। अत एवेति। दार्ष्टान्तिकस्यात्मनो निर्विशेषत्वादेवेत्यर्थः। गुणी खलु दृष्टान्तः, स तु विशेष एवेति॥३॥

विषमदृष्टान्ततया दूषितश्चिदद्वैती पुनर्विधान्तरेण प्रत्यवतिष्ठते नन्विति। इदं सिद्धसाधनत्वरूपम्। किन्तर्हीति। मायाविद्यादिपर्यायं यदनिर्वचनीयं तम आत्मन्यद्वैतादिकमावृत्य तत्रेश्वरत्वं जीवत्वादिप्रपञ्चमुद्भासयति तदज्ञानरूपमावरणं निवर्तयति शास्त्रम्, आवरणनिवृत्तेः पूर्वमसत्त्वान्न सिद्धसाधनं तदित्यर्थः। एवं तर्ह्यद्वैतं कुतो लभ्यम्? तत्राह—निवृत्ते त्विति। परिहरति नैतदिति। चतुरस्रं चतुःकोणम्। 'अस्रः स्यात् कोणकेशयो'रिति श्रीधरः। नैतत् पूर्णं समाधानम्। कस्य चिदिति। स्वरूपस्य वेत्यर्थः। स्वरूपस्येत्युभयत्राऽन्वेति॥ ४ ॥

तथा हि—आवरणं ह्याव्रियमाणेन व्याप्तम् । न चाज्ञानस्य तदस्ति । तद्धि किमावृणोति स्वरूपं तद्विशेषं वा । नाद्यः, तस्य नित्यसिद्धप्रकाशत्वात् । न चेतरः, अस्वीकारात् । तथा च व्यापकाभावाद्व्याप्यमावरणमप्यसम्भवीति, न तन्निवर्तकतया शास्त्रमदोषम् ॥५॥

एवञ्च सति सिद्धसाधनत्वेऽनुपादेयताऽप्रामाण्यञ्च ।

---

तथा हीति । उक्तमर्थं विशद्य दर्शयतीत्यर्थः । आवरणं हीति । यत्रान्धकारादिरूपमावरणं तत्रास्त्येव भूम्यादिरूपमाव्रियमाणमिति तेन तद्व्याप्तं नियतसाहचर्यमित्यर्थः । न चेति । तदित्याव्रियमाणम् । अस्तीति ब्रुवन्तं पृच्छति तद्धीति । तदज्ञानरूपमावरणम् । नाद्य इति । ब्रह्मस्वरूपमावृणोतीति पक्षो न सम्भवतीत्यर्थः । तस्येति । ब्रह्मस्वरूपस्य । न चेतर इति । ब्रह्मनिष्ठं विशेषं गुणविभूत्यादिकमावृणोतीति पक्षोपि नेत्यर्थः । कुत इत्यत्राहाऽस्वीकारादिति । केवलाद्वैतवादे विशेषानङ्गीकारादित्यर्थः । साधितमर्थं दर्शयति तथा चेति । वन्हिवदधिकदेशत्वादाव्रियमाणं ब्रह्म स्वं रूपं तद्विशेषो वा व्यापकम् । धूमवदल्पदेशत्वादावरणमज्ञानं व्याप्यमुच्यते । अत्र व्यापकस्य स्वरूपतद्विशेषान्यतरस्य पक्षद्वयनिराकृतत्वेनाव्रियमाणतयाऽसद्रूपत्वादज्ञानं पुनः कस्यावरणं भवत्स्वीकार्यं, यन्निवर्तकतया शास्त्रमसिद्धसाधनं वदसीत्यर्थः ॥ ५ ॥

एवञ्चेति । उक्तरीत्याऽज्ञानस्याऽऽवरणत्वनिराकरणेन त-

शास्त्रं खलु परार्थम् । तस्य च परसिद्धबोधनेऽनुपादेय्य-ता, अनधिगतार्थगन्तृप्रमाणमिति हि लक्षणं तदभावाद-प्रामाण्यञ्चेति ॥ ६ ॥

एवमज्ञानासम्भवाद्विषयाद्यपि न सम्भवति । अ-ज्ञातो हि विषयः । अन्यथाऽतिप्रसङ्गात् । प्रयोजनं च मोक्षः, स चाऽज्ञाननिवृत्तिरूपः । यदुक्तम्—'अविद्यास्त-

---

त्वेनाऽसद्रूपत्वे सत्त्वावरणनिवर्तकत्वेनासिद्धसाधनतयोक्तस्य शास्त्रस्य पुनः सिद्धसाधनत्वे स्थिते सति तस्याऽनुपादेयत्वं स्या-दप्रामाण्यं चाधिकमागतमित्यर्थः । अनुपादेयतां ग्राहयति शा-स्त्रमिति । परार्थं परस्यात्मजिज्ञासोरज्ञानात्मस्वरूपज्ञानार्थम् । त-स्येति शास्त्रस्य । परसिद्धेति । परस्यात्मजिज्ञासोर्नित्यस्वप्रकाश-तया सिद्धो यो ब्रह्मभूत आत्मा तद्बोधनेऽनुपादेयताऽग्राह्यते-त्यर्थः । अप्रामाण्यं कथं तत्राह—अनधीती । अनधिगतमर्थं यद् गमयति तत् प्रमाणम् । आत्मा हि नित्यमधिगतः । 'यत् साक्षादपरोक्षाद् ब्रह्मे'ति श्रुतेः । ततश्चाधिगतात्मगन्तृत्वाच्छास्त्रं न प्रमाणमिति । यत्तु हतहननवच्चिदृत्तमेव निवर्त्यते विस्मृत-कण्ठमणिवत् प्राप्तमेव प्राप्यते इति न सिद्धसाधनतेत्याह तद्-भसादेव । तथात्वे प्रवृत्तावुन्मत्ततापत्तेः तथाप्राप्तावद्वैतभङ्गाच्चेति यत् किञ्चिदेतत् ॥ ६ ॥

अज्ञानस्यावरणत्वं निरस्य तन्निमित्तकं विषयत्वं प्रयोजन-त्वञ्च निरस्यति—एवमिति । उक्तयुक्त्याबरणत्वेनाऽज्ञानस्या-

मयो मोक्षः सा संसार उदाहृत' इति। न चाऽज्ञानासंभवे तन्निवृत्तिरुपपद्यते। यच्चाऽज्ञानहानेरात्मरूपत्वमिष्टं तद-सत्, आत्मनः पूर्वसिद्धत्वेन तद्धानेरसाध्यत्वापत्तेः। न चाऽज्ञात आत्मैवाऽज्ञानहानिर्नात्ममात्रमिति वाच्यं ज्ञानकर्मताऽनङ्गीकारात् ॥ ७ ॥

या च सत्त्वादिपक्षत्रये दोषमाशङ्क्य चतुर्थप्रकारता-मज्ञानस्य प्रकल्प्य तत्राप्यस्य पुनः पञ्चमप्रकारता स्वीकृता, साऽप्यज्ञानासम्भवेनैव निरस्ता ॥ ८ ॥

---

ऽसम्भवात् शास्त्रस्य विषयः प्रयोजनञ्च न सम्भवतीत्यर्थः। कथं तदसम्भवस्तत्राह—अज्ञातो हीति। अन्यथा ज्ञानस्यापि शास्त्र-विषयत्वे चाक्षुषेऽपि घटे शास्त्रमपेक्ष्येतेति भावः। न चाज्ञानेति। आवरणत्वेनाऽऽज्ञानस्यासम्भवे सति न तस्याज्ञानावरणस्य निवृ-त्तिः शक्याऽभिधातुं, न ह्यसति परिच्छेद तदपसारणं स्यादित्यर्थः। नन्वज्ञाननिवृत्तिरात्मैव तस्य सत्त्वात् प्रयोजनासिद्धिरिति चेत्तत्राह यच्चेति। विकसितार्थम्। ज्ञानकर्मेति। 'यतो वाचो निवर्तन्त' इत्यादिश्रुतिप्रामाण्यादिति भावः ॥ ७ ॥

अज्ञाननिवृत्तिर्मोक्ष इत्यादयस्त्रयः पक्षा दूषिताः। अथ विधान्तरेणाऽज्ञाननिवृत्तेर्मोक्षत्वं कैवल्याद्वैतिना साधितं दूषयति या चेति। तन्नाशस्याऽज्ञानप्रध्वंसस्य। अज्ञानेति। आवरणतया सत्त्वाभावेनेत्यर्थः ॥ ८ ॥

एवं हि परैरङ्गीकृतम्—अज्ञानस्य न सत्त्वं, अद्वैतहानात् । नाऽप्यसत्त्वं, प्रतीतिवैपरीत्यात् । न च सदसत्त्वं, विरोधात् । अतश्चतुर्थः प्रकारोऽनिर्वचनीयत्वं स्वीकार्यम् । न च तन्नाशोऽपि तादृक्, प्रतियोगितन्निवृत्त्योर्वैलक्षण्यस्याऽऽवश्यकत्वादिति पञ्चमप्रकारताऽङ्गीकार्या । यदाहु—'न सन्नासन्न सदसन्नाऽनिर्वाच्यश्च तत्क्षयः । यक्षानुरूपो बलिरित्याचार्याः प्रत्यपीपद'न्निति ।

---

उक्तमर्थमुद्घाटयति—एवं हीति । परैः केवलाचिदद्वैतिभिः । नाऽप्यसत्त्वमिति । अज्ञानाभावे ह्यहमज्ञ इति प्रत्ययो न स्यादित्यर्थः । न च सदसत्त्वमिति । शैत्यौष्ण्यवदेकत्र सत्त्वासत्त्वयोर्विरोधादित्यर्थः । अतोऽज्ञानस्य सदसद्विलक्षणत्वं चतुर्थः प्रकारः स्वीकार्यमित्यर्थः । न चेति । तन्नाशोऽज्ञाननाशोऽपि तादृक् चतुर्थप्रकारो न भवतीत्यर्थः । कुत इत्याह—प्रतियोगीति । अज्ञाननिवृत्तेः प्रतियोगी ह्यज्ञानम् । तयोर्वैलक्षण्यमावश्यकम् । यथा घटतद्ध्वंसयोः । तस्मादज्ञाननिवृत्तिः पञ्चमः प्रकार इत्यर्थः । अत्राचार्यसंमतिमाह न सन्निति । स तत्क्षयोऽज्ञाननाशः सन्न भवति, उपलक्षणत्वस्वीकारात् । विशेषणत्वे निर्विशेषत्वक्षतिरिति भावः । नाऽप्यसन्, शुद्धबुद्धमुक्तस्वरूपोऽहमस्मीत्यनुभवविरोधापत्तेः । न च सदसन्, विरोधात् । नाऽप्यनिर्वाच्यः, अज्ञानस्य तथात्वेन तत्क्षये ततो वैलक्षण्यस्यावश्यकत्वात् । तस्मात् सदसद्विलक्षणविलक्षणस्तत्क्षय इति । परिहरति—इदमपी-

इत्थमप्यपेशलं, उक्तरीत्या ज्ञानासम्भवात्तेन कल्प्यमानायास्तस्याः खपुष्पतौल्यात् ॥ ९ ॥

अथ पञ्चमप्रकाराऽज्ञाननिवृत्तिरात्मेतराऽऽत्मस्वरूपा वा। आद्येऽप्यज्ञानकार्य्यं न वा ? न तावदाद्यः। तदाप्यज्ञानावस्थितेः संभवात्। न ह्युपादानेन विनोपादेयस्य स्थितिरस्ति। न चान्त्यः। आत्मेतरस्याज्ञानतत्कार्य्यान्यतरत्वावश्यम्भावाभ्युपगमात्। नापि द्वितीयः।

---

ति। असुन्दरमित्यर्थः। 'पेशलो रुचिरे दक्षे' इति विश्वः। उक्तरीत्या व्यापकाभावाद् व्याप्यमावरणं न संभवेदित्येवंरूपया। तेनेत्यज्ञानेन। तस्याः पञ्चमप्रकारतायाः ॥ ९ ॥

प्रकारान्तरेण तां दूषयति अथेति। आद्येऽप्यात्मेतरे पक्षेऽज्ञाननिवृत्तिरज्ञानकार्यं न वेत्यर्थः। न तावदाद्य इति। आत्मेतराऽज्ञाननिवृत्तिरज्ञानकार्यमिति। प्रथमः पक्षो न सम्भवतीत्यर्थः। तदाऽप्यज्ञाननिवृत्तिकालेपीत्यर्थः। विशदयति-न ह्युपादानेनेति। ब्रह्माकारया चित्तवृत्त्याऽज्ञाननिवृत्तिर्जन्यते। सा चित्तवृत्तिस्तन्निवृत्तेरुपादानं स्वोपादेयतन्निवृत्त्यावेशनाऽनुवर्तेतैव। ततश्चाऽज्ञानांशसत्त्वान्न स्यान्मोक्षत्वमित्यर्थः। न चान्त्य इति। आत्मेतराऽज्ञाननिवृत्तिरज्ञानकार्य्यं नेति द्वितीयः पक्षोऽपि नाख्यातुं शक्य इत्यर्थः। कुत इत्याह—आत्मेतरस्येति। यत् खल्वात्मनो भिन्नं तदज्ञानं स्यादज्ञानकार्यं वा स्यादिति त्वया स्वीकृतत्वादेवेत्यर्थः। तथा चाऽज्ञाननिवृत्तेर्मोक्षत्वं नेत्यर्थः।

दर्शितदोषापत्तेः। एवमज्ञाननिवृत्तेरुभयथाऽप्यसम्भवेन स्वरूपाभावात्। सा पुनः सुदूरापास्तेति॥ १०॥

किञ्च घटादीनां सत्त्वं शशशृङ्गादीनामसत्त्वं घटादीनामेव देशकालव्यवस्थया सदसत्त्वमिति प्रकारत्रयस्यैवाऽनुभवाच्चतुर्थः प्रकार एव नास्ति, तदभावात् पञ्चमप्रकारताप्यष्टमरसवदशक्यसम्भावनेति॥ ११॥

एवञ्च विषयप्रयोजनयोरभावादधिकारात्तदभावात् सम्बन्धश्च निरस्तः। सतामेव हि सम्बन्धः, स चा-

---

नाऽपि द्वितीय इति। पञ्चमप्रकाराऽज्ञाननिवृत्तिरात्मस्वरूपैवेति प्रथमविकल्पस्य द्वितीयः पक्षोऽपि न शक्यो भणितुमित्यर्थः। कुत इत्याह--दर्शितेनेति। आत्मनः पूर्वसिद्धत्वेन तद्रूपाज्ञाननिवृत्तेरसाध्यतापत्तेरित्यर्थः। एवमिति। उभयथापीति। आत्मेतरत्वेनात्मस्वरूपत्वेन चाऽज्ञाननिवृत्तेर्निरूपणासम्भवात्तस्याः पञ्चमप्रकारताऽतिदूरे निक्षिप्तेत्यर्थः॥ १०॥

सदसद्विलक्षणवस्तुनोऽप्रसिद्धेश्चाऽज्ञानस्य तथात्वं न शक्यं वक्तुमित्याह किञ्चेत्यादिना। चतुर्थप्रकारोऽज्ञानस्य सदसद्विलक्षणत्वं पञ्चमप्रकारताऽज्ञाननिवृत्तेः सदसद्विलक्षणविलक्षणत्वम्। तत्र दृष्टान्तोऽष्टमेति। षडेव रसास्तेषु सप्तमस्यैवाभावादष्टमो यथा दूरापास्तस्तद्वदित्यर्थः॥ ११॥

शास्त्रादज्ञातमर्थं ज्ञातुमज्ञाननिवृत्तिरूपं प्रयोजनञ्च लब्धम्। तत्र शमाद्युपेतोऽधिकारी प्रवर्तते। तत्रोक्तरीत्याऽज्ञानासम्भवा-

ऽज्ञानासम्भवेन विषयादेरभावान्नेति । विचारारम्भवैयर्थ्यञ्च तस्मादेव । तथाऽऽवरणरूपमज्ञानं निवर्तयच्छास्त्रमदोषमिति रिक्तं वचः ॥ १२ ॥

इति सिद्धान्तरत्नाख्ये भाष्यपीठके केवलाद्वैतनिरासः पञ्चमः पादः ॥५॥

---

दधिकारी च त्वन्मते न सम्भवेदित्याहैवं चेति । तदभावाद् विषयादीनामभावात् । सम्बन्धाभावं दर्शयति सतामिति । शास्त्रस्यात्मना सह बोध्यबोधकभावः सम्बन्धः । अधिकारिणा सहाऽध्येयाऽध्येतृभावः । आत्मना मोक्षेण च सह ग्राह्यग्राहकभावः । स चैष विस्तारोऽज्ञानहेतुक एव, अज्ञानाभावे तु नैते सम्भवन्तीति कस्य केन सम्बन्ध इत्यर्थः । विचारेति । सन्दिग्धे वस्तुनि तत्त्वनिर्णयो हि विचारः । सन्देहस्त्वज्ञानकृत एव, तदभावान्न विचारारम्भ इत्यर्थः ॥ १२ ॥

इति श्रीगोविन्दभाष्यपीठकटिप्पण्यां पञ्चमो वामनपादो व्याख्यातः ॥ ५ ॥

# षष्ठः पादः ।

अत्राहुः—फलवत्यज्ञातेऽर्थे श्रुतेस्तात्पर्य्यादभेदः परमार्थः। अनन्तानन्दब्रह्मभावो हि फलम्। शास्त्रैकगम्यो ब्रह्माभेदः । तस्मिन्नद्वितीये ब्रह्मणि नानाविधज्ञातृज्ञेयज्ञानभेदादि सर्वं परिकल्पितमतो मिथ्यैवेति । एवमेवाह श्रुतिः—'ब्रह्मविद् ब्रह्मैव भवति' 'ब्रह्मैव सन् ब्रह्माप्येति' 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्' 'नेह नानास्ति किञ्चन' 'यत्र हि द्वैतमिव भवति तदितर इतरं

---

अथ विधान्तरैः प्रतिप्रवृत्तः केवलाद्वैती प्रत्याख्यातव्यस्तदर्थं त्रिविक्रमाख्यः षष्ठः पादोऽयं प्रवर्त्तते । तत्र तावत्तन्मतमुपन्यस्यति—अत्राहुरित्यादिना । फलवतीति । तादृशब्रह्मतापत्तिर्जीवस्य मुमुक्षोः फलम् । शास्त्रैकेति । ननु प्रत्यक्षादिगम्यः स इत्यर्थः । परिकल्पितमिति । तादृशब्रह्माज्ञानादिति भावः । उक्तेऽर्थे क्रमात् प्रमाणान्याह—ब्रह्मविदित्यादिना । सदिति । अग्रे सृष्टेः प्राक् । सदेव सत्तामात्रं ब्रह्मैवासीदित्यर्थः । अस्तीत्येवोपलब्धव्य इति श्रुतेः । 'अपक्षयविनाशाभ्यां परिणामाधिजन्मभिः । वर्जितः शक्यते वक्तुं यः सदास्तीति केवल'मिति स्मृतेश्च । तदज्ञानादिदं जगत्तत्र कल्पितं

पश्यति' 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्र केन कं पश्येत् केन कं विजानीयात्' 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' 'इतोऽन्यदार्तम्' 'रामं ब्रह्मलोकं न विदन्त्यनृतेन हि प्रत्यूढा' इत्यादिका ॥ १ ॥

एवमेवाहैकादशे श्रीभगवान्—'गुणाः सृजन्ति कर्माणि गुणो नु सृजते गुणान् । जीवस्तु गुणसंयुक्तो

---

तज्ज्ञानेन तु विनङ्क्ष्यति, तस्मादेकमेवेति । सजातीयविजातीयस्वगतभेदशून्यं तदित्यर्थः । नेहेति । इह ब्रह्मणि । ज्ञातृनाना ज्ञेयादिकल्पना नास्तीत्यर्थः । यत्र हीति । व्यवहारकाले । यत्र त्विति । मोक्षकाले । अस्य जीवस्यात्मा ब्रह्मैव सर्वमभूत् । अयं ब्रह्मैवाभूदित्यर्थः । वाचेति । घटादिकं विकार इति नामधेयं वाचारम्भणं वाङ्मात्रेणारब्धमतो मृषाभूतं तत् मृत्तिकेत्येव सत्यम् । तथा च जगद् वाचारब्धत्वान्मृषाभूतं ब्रह्मैव सत्यमित्यर्थः । इत इति । ब्रह्मतोऽन्यज्जगदार्तं मृषेत्यर्थः । एतमिति । अनृतेनाऽविद्यया प्रत्यूढास्ताः प्रजा एनं ब्रह्मभूतं लोकं न विदन्तीत्यविद्ययैव तत्र जगद्भानमित्यर्थः ॥ १ ॥

एवं श्रुतितो निश्चित्य स्मृतितश्च निश्चिनोति—एवमेवाहेत्यादिना । गुणा इति । गुणा इन्द्रियाणि कर्माणि सृजन्ति कुर्वन्ति न त्वात्मा । 'गुणो मौर्व्यामप्रधाने रूपादौ सूद इन्द्रिये । त्यागे शौर्यादिसन्ध्यादिसत्त्वाद्यावृत्तरज्जुष्वि'ति मेदिनीकारः । नन्वात्मैवेन्द्रियैः कर्माणि कुर्यादिति चेत्तत्राह—गुणोऽविद्यैवात्मच्छायया

भुङ्क्ते कर्मफलान्यसौ ॥ यावत् स्याद् गुणवैषम्यं तावन्नानात्वमात्मनः। नानात्वमात्मनो यावत् पारतन्त्र्यं तदैव हि॥ यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भय'मिति ॥ २ ॥

इदमत्र रहस्यम्——कर्तृत्वभोक्तृत्वादिधर्मशून्याश्चिन्मात्रोऽद्वितीयो ह्यात्मा। स चात्मन्यविद्यया गुणमयीं मायां तद्वैषम्यजां कार्यसंहतिं च कल्पयन्नस्मदर्थमेकं युष्मदर्थांश्च बहून् कल्पयति। तत्रास्मदर्थः स्वस्वरूपः

---

चेतनेव गुणानिन्द्रियाणि सृजते प्रवर्तयतीति नात्मनः कर्तृत्वम्। अथ भोक्तृत्वमप्यात्मन आविद्यकमेव, न तु वास्तवमित्याह जीवस्त्विति। गुणसंयुक्त आविद्यकेन्द्रियवर्गोपेतो जीवः कर्मफलानि सुखदुःखानि भुङ्क्ते न तु शुद्ध इति गुणानामेव भोक्तृत्वम्। यच्चात्मनो नानात्वं तदप्याविद्यकमित्याह यावदिति। यावदविद्याकल्पितताया मायाया गुणानां सत्त्वादीनां वैषम्यमहङ्कारेन्द्रियान्तःकरणरूपं स्यात्तावदेव घटैराकाशस्येवाहङ्कारादिभिरवच्छिन्नस्यात्मनो नानात्वम्। आत्मयाथात्म्यज्ञानेन निवृत्तेऽप्यवच्छेदकेष्वेकत्वं सिद्धमेवेति भावः। नन्वात्मन एकत्वे कथं पारतन्त्र्यं कथं वा लोकपालानां तत्तो भयमुक्तं, तत्राह नानात्वमिति। प्रकटार्थः ॥ २ ॥

गुणाः सृजन्तीत्यादिवाक्यार्थं साभिप्रायं विवृणोति इदमत्रेति। अविद्ययात्माज्ञानेन। जीवेशाविति। अविद्या कर्त्री आभासेन जीवेशौ करोति रचयति। अन्तःकरणे ब्रह्मणः प्रतिबिम्बे-

पुरुषः । युष्मदर्थास्त्रिविधाः—पुरुषान्तराणि जडानि सर्वेश्वराख्यः पुरुषविशेषश्चेति । 'जीवेशावाभासेन करोति माया चाऽविद्या च स्वयमेव भवती'ति श्रुतिश्च कर्तृत्वं भोक्तृत्वं च गुणसम्बन्धादात्मन्यस्मदर्थेऽभ्यस्यते । अथ तस्यामविद्यायां प्रणष्टायां तत्कार्यरूपा माया विनश्यति । तन्नाशात् नानात्वञ्च । तदभावादीश्वरतत्पारतन्त्र्यतद्भयादीनि सुदूरोत्सारितानीति चिन्मात्राद्वितीयमात्मवस्त्वेवाति ॥ ३ ॥

तथोत्तरत्र च—'किं भद्रं किमभद्रं वा द्वैतस्याऽवस्तुनः कियत् । वाचोदितं तदनृतं मनसा ध्यातमेव

---

न जीवं करोति मायायां प्रतिबिम्बेन त्वीशम् । ननु-'विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् । बन्धमोक्षकरा आद्ये मायया मे विनिर्मिते' ॥ इति भगवता मायावृत्तिरविद्या पठिता । कथमविद्या मायां कल्पयतीत्युच्यते । तत्राह माया च स्वयमेव भवतीति । तथा च भेदकल्पनं तत्र भाक्तमिति भावः । अथेति । आत्मयाथात्म्यावबोधनेन तस्यामविद्यायां प्रणष्टायां निवृत्तायामित्यर्थः । तन्नाशादिति । नानात्वं वात्मनो नश्यतीत्यर्थः । तदभावादात्मनो नानात्वविनाशात् । अत्र दशमो नाहमस्मीतिवदात्मन्यविद्योत्पद्यते । दशमोऽहमस्मीतिवत् तस्मिन् विद्येति बोध्यम् ॥ ३ ॥

तथेति । उत्तरत्राऽष्टाविंशेऽध्याये । किमिति । द्वैतस्य प्रपञ्च-

च ॥ छायाप्रत्याह्वयाभासा ह्यसन्तोप्यर्थकारिणः । एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम् ॥ आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः । त्रायते त्राति विश्वात्मा ह्रियते हरतीश्वरः ॥ तस्मान्न ह्यात्मनोऽन्यः स्यादन्यो

---

स्य मध्ये किं कियद् भद्रं कियदभद्रं खपुष्पवृन्दस्येवेत्यर्थः । यतोऽवस्तुनो रज्जुसर्पवन्मृषाभूतस्य । अवस्तुतामाह वाचेति । बाह्येन्द्रियाणामुपलक्षणम् । यद्वागादिभिर्गृहीतं यच्च मनसा ध्यातं तदनृतं मृषैव, परत्र तथैवास्थितेः । ननु देहादीनामनृतत्वात् कथं भयहेतुत्वमिति चेत्तत्र सदृष्टान्तमाह—छायेति । छाया प्रतिबिम्बः । प्रत्याह्वयः प्रतिध्वनिः । आभासः शुक्तिरजतादिः । यथैतेऽसन्तोऽप्यर्थकारिण एव देहादयो भावा आमृत्युतो भयं यच्छन्ति । मृत्युर्लयः । यावत्तत्त्वज्ञानेनैते न लीयन्ते तावद् भयं संसारं जनयन्त्येवेत्यर्थः । ननु 'यतो वा इमानि भूतानि जायन्त' इत्यादिश्रुतिसिद्धत्वात् कथं द्वैतमनृतं तत्राह—आत्मैवेति द्वाभ्याम् । आत्मैव विश्वमित्यन्वयः । श्रुतिरेव यथा रजतम् । सृष्टित्राणसंहाराणां कर्मभूतः कर्तृभूतश्चात्मैव स्वाज्ञानोपहितः सन्नित्यर्थः । ननु कर्तुरेव कर्मत्वं विरुद्धं तत्राह—तस्मादिति । आत्मनोऽन्यो भावोऽर्थो यस्मान्न हि तत्त्वविद्भिर्निरूपितः किं त्वात्मैव विश्वकर्ता कर्मभूतं विश्वमिति निरूप्यते । 'तदात्मानं स्वयमकुरुते'ति श्रुतेरित्यर्थः । तर्हि विकारापत्तिर्नेत्याह—अन्यस्मादिति । विकारास्पृष्टादित्यर्थः । तर्हि कर्मत्वं कथमुच्यते तत्राह—निरूपितेति । त्रिविधा सात्त्विकादिरूपा भातिः प्रतीतिर्निर्मूला ।

भावो निरूपितः । निरूपितेयं त्रिविधा निर्मूला भाति-रात्मनि ॥ इदं गुणमयं विद्धि त्रिविधं मायया कृतम्'॥४॥

'एतद्विद्वान् मदुदितं ज्ञानविज्ञाननैपुणः । न निन्दति न च स्तौति लोके चरति सूर्यवत् ॥ प्रत्यक्षेणाऽनुमानेन निगमेनाऽऽत्मसंविदा । आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिहे'ति ॥ ५ ॥

तथा श्रीविष्णुपुराणे सनन्दनादयः—'परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते । तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥ यदेतद् दृश्यते मूर्तमेतज्ज्ञानात्मन-

---

न हि रजतभ्रमे शुक्त्यज्ञानादन्यन्मूलमस्ति । एतदेवाहेदमिति । अविद्यारचितया मायया कृतमिति । न चाज्ञानमूलत्वान्निर्मूलेति विरुद्धं, ज्ञाने सति तस्य विनाशात् ॥ ४ ॥

एतस्याऽनर्थजालस्य निवृत्तावुपायमाहैतदिति । मदुदितं मदुक्तप्रकारं नैपुणं निष्ठं साधनान्तरमाह—न निन्दतीति । सूर्यवत् समोऽभवत् । ज्ञानविज्ञाननैपुणं लाभोपायमाह—प्रत्यक्षेणेति । घटपटादिकमाद्यन्तवत् प्रत्यक्षेण ज्ञात्वा, अनुमानेनाद्यन्तवद्, दृश्यं पृथिव्यादि निगमेन वेदेनाद्यन्तवद् । दृश्यं खादि । आत्मसंविदा स्वानुभवेन । चिद्भिन्नं सर्वं दृश्यमाद्यन्तवदतोऽसन्मृषेति ज्ञात्वा निःसङ्गो विरक्तः सन् विचरेत्॥ ५ ॥

तथेति । यथैकादशेऽभिहितं भगवता, तथा सनन्दनादिभिश्च श्रीवैष्णवेऽपि प्रथमेंऽशे इति प्रतिपादितोऽर्थः स्थिर इत्य-

स्तव। भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः॥ ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः। अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे॥ ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत्। ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वरे'ति॥ ६॥

तथा श्रीगीतासु भगवान्—'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत। न तदस्ति विना यत् स्यान्मायाभूतं चराचर'मिति ॥ ७ ॥

मिथ्यात्वं त्वधिष्ठानभूतब्रह्मज्ञानबाध्यत्वमेव। शुक्त्याद्यधिष्ठाने दोषवशादेव परिकल्पितं रजतादि विज्ञाते हि तस्मिन् बाध्यते। दोषश्च स्वरूपावृत्तिविविध-

---

र्थः। त्वमेव परमार्थः सत्यस्त्वदन्यत् सर्वं मृषेत्यर्थः। त्वत्स्वरूपाज्ञानेनेदं जगत्त्वयि कल्पितमित्याह भ्रान्तीति। अयोगिनः। अद्वितीयब्रह्मणस्तव ज्ञानयोगेन रहिताः। स्फुटार्थमन्यत् ॥ ६ ॥

क्षेत्रज्ञमिति। अन्तःकरणेनावच्छिन्नस्तस्मिन् प्रतिबिम्बितो वाऽहमेव जीवः। मत्स्वरूपविज्ञानेनान्तःकरणे जागरे + +स्वप्ने विलीने सति स मत्तो नान्य इत्यर्थः। न तदिति। यच्चराचरं जगत् मया विनाभूतं तन्नास्ति। मदज्ञानेन मयि तदज्ञैः कल्पितं, शुक्त्यज्ञानेन यथा शुक्तौ रजतमिति ॥ ७ ॥

द्वैतमनृतमित्युक्तं पुरा। अथ तस्यानृतत्वस्य लक्षणमुच्यते मिथ्यात्वमितीति। ध्वंसप्रतियोगित्वं तत्त्वं बोधगम्। दोषवशा-

विक्षेपकरी सदसद्विलक्षणत्वादनिर्वचनीयाऽनादिरविद्यैव । तमोऽज्ञानमायादिशब्दैरपि सैवाऽभिधीयते—'न सदासीन्नासदासीत्तदानीं' 'तम आसीत्तमसा गूढमग्रे प्रकेतम्' 'इन्द्रो मायाभिः पुरुरूप ईयते' 'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वर'मित्यादौ ॥ ८ ॥

इयं पुनर्ब्रह्मात्मैक्यविज्ञानान्निवर्तते 'न पुनर्मृत्यवे तदेकं पश्यति' 'न पश्यो मृत्युं पश्यति' 'तमेव विदित्वा ऽतिमृत्युमेति' 'तत्र को मोहः कः शोक एकत्वमनुपश्यत' इत्यादिश्रवणात् । अत्र मृत्युशब्दो ह्यविद्याभिधायी ।'प्रमादं व मृत्युमहं ब्रवीमि' 'सदाऽप्र-

---

दिति । चाकचिक्यादिसहकृतात्तदज्ञानादेव हेतोरित्यर्थः । तस्मिन् शुक्त्याद्यधिष्ठाने । प्रकृते को दोषस्तत्राह दोषश्चेति । आवरणविक्षेपशक्तियुक्ताऽविद्यैव दोष इत्यर्थः । सैवाऽविद्यैव । तस्याः सदसद्विलक्षणत्वं प्रमाणयति न सदिति । तदानीं प्रलये । प्रकेतं सर्वनिवासभूतं ब्रह्म तमसा गूढं समाश्रितमासीत् । इन्द्र इति बृहदारण्यके । इन्द्रः परमात्मा मायाभिरविद्यावृत्तिभिरन्तःकरणगुणैः पुरुरूपोऽसङ्ख्येयजीवरूपः । ईयते भासते । मायामिति श्वेताश्वतरश्रुतिः ॥ ८ ॥

इयमित्यविद्योच्यते । न पुनरिति । यस्तदेकं ब्रह्म पश्यति स पुनर्मृत्यवेऽविद्यायै न भवति । पुनस्तां न विन्दतीत्यर्थः । पश्य एकत्वदर्शी विद्वान् । अतिमृत्युमविद्यातिक्रमं मुक्तिमित्यर्थः ।

मादादमृतत्वं ब्रवीमी'ति स्मृतौ तस्यां तस्य प्रयोगात् ॥ ९॥

निर्विशेषं चिन्मात्रं खलु ब्रह्मणः स्वरूपम्, 'सत्यं ज्ञानमनन्तम्,' 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्'। 'नेह नानास्ति किञ्चन'। 'अथात आदेशो नेति नेति' 'न ह्येतस्मादिति नेत्यन्यत् परमस्ती'त्यादिभिः श्रुतिभिः। 'प्रत्यस्तमितभेदं यत् सत्तामात्रमगोचरम्। वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ शश्वत् प्र-

---

प्रमादमिति भारते सनत्सुजातवाक्यम्। प्रमादमविद्याम्। अप्रमादादेकत्वविज्ञानात्। तस्यां तस्येति। अविद्यायां मृत्युशब्दस्येत्यर्थः ॥ ९ ॥

ब्रह्मस्वरूपं कीदृशमित्यपेक्षायामाह–निर्विशेषेति। सत्यमिति सत्यादिस्वरूपमित्यर्थः। नेहेति। इह ब्रह्मणि। नानाविधं ज्ञातृज्ञेयज्ञानरूपं किञ्चन नास्तीत्यर्थः। अथेति बृहदारण्यके। अथ मूर्तामूर्तादिरूपनिरूपणानन्तरम्। यस्मात्तज्ज्ञानात् परं श्रेयो न भवत्यतो नेति नेत्यादेशः। नेति नेत्युपदिश्यमानं ब्रह्मैव ज्ञेयमित्यर्थः। जडचेतनयोर्ब्रह्मान्ययोर्निषेधाय वीप्सा। श्रुतिरेवादेशार्थं ब्रवीति। एतस्माद् ब्रह्मणोऽन्यन्न ह्यस्तीति नेत्युच्यते। तदन्यौ जडचेतनौ न स्त इति प्रथमेन नेतिनोक्तम्। द्वितीयेन दृढीक्रियते। ननु प्रपञ्चब्रह्मापि न भवेदिति चेन्नेत्याह–अन्यदिति। दृश्यात् प्रपञ्चाद् भिन्नं परं सर्वभ्रमावधिभूतं सन्मात्रं ब्रह्मास्तीति। प्रत्यस्तेति वैष्णववाक्यं प्रकटार्थम्। शश्वदिति

शान्तमभयं प्रतिबोधमात्रं शुद्धं समं सदसतः परमात्मतत्त्व'मित्यादिभिः स्मृतिभिश्च समस्तविशेषप्रतिषेधात् । १०॥

तदस्य प्रतिपत्तुरुपासकस्यात्मैवेति मन्तव्यम्, 'आत्मेत्येवोपासीते'त्यादिश्रवणात्, 'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे'ति शास्त्रकृताऽपि स्वीकृतत्वाच्च ॥ ११ ॥

न च सत्यादिभिः पदैर्निर्विशेषस्यैवावगतौ तेषां पर्यायतापत्तिः। पर्यायभूतानां युगपद्वचने पौनरुक्त्यञ्च ।

---

श्रीभागवते । शश्वत् नित्यम् । प्रतिबोधमात्रं निर्विशेषविज्ञानवपुरित्यर्थः ॥ १० ॥

तदिति । तन्निर्विशेषचिद्रूपं ब्रह्म । आत्मेति बृहदारण्यके । सोऽहमिति भावेनेत्यर्थः । आत्मेति त्विति ब्रह्मसूत्रम् । तद् ब्रह्म ममात्मेति तत्त्वज्ञा उपगच्छन्ति विदन्ति तथा ग्राहयन्ति च शिष्यानित्यर्थः ॥ ११ ॥

सत्यमित्यादि श्रुतिं विशिष्टब्रह्मपरां द्वैतिनो व्याचक्षते तान्निराकरोति न चेति । तेषां सत्यादिपदानाम् । एकार्थाभिधायकत्वं पर्यायत्वम् । पौनरुक्त्यञ्चेति । घटकलशकुम्भानानयेतिवत् पुनरुक्तिः स्यादित्यर्थः । इति न च वाच्यमित्यन्वयः । कुत इत्याह–निर्गुणश्रुतीति । सत्यत्वादिगुणविशिष्टस्वीकारे साक्षी चेताः केवलो निर्गुणश्चेति वाक्यं विरुद्धं स्यादित्यर्थः । एतदुक्तं भवति–यथा भरतादिभिराचार्य्यैर्वाचकलाक्षणिकव्यञ्जकास्त्रिविधाः शब्दास्तेषामभिधालक्षणाव्यञ्जनास्तिस्रो वृत्तय-

तस्मात् सत्यत्वादिगुणविशिष्टाभिधायीनि तानीति वाच्यं, निर्गुणश्रुतिविरोधापत्तेः ॥ १२ ॥

ततश्चासत्याज्जडात्परिच्छिन्नाच्च व्यावृत्तिं क्रमादिमा निगमयन्ति। व्यावृत्तिस्तु न भावरूपो नाप्यभावरूपो धर्मः, किन्तु सर्वेतरव्यावृत्तब्रह्मात्मिकैव। यथा शौक्ल्यादेर्नैल्यादिव्यावृत्तिः शौक्ल्यादिरूपैव न धर्मान्तरम्। एवञ्च सति तेषामेकार्थ्यपर्यायता चेति न कापि क्षतिरस्ति ॥ १३ ॥

यस्तु 'द्वा सुपर्णा सयुजा सखाये'त्यादिषु भेदवादोऽवगम्यते स खलु न शास्त्रतात्पर्यगोचरः प्रसिद्धेः

---

स्ताभिर्बोध्या वाच्यलक्ष्यव्यङ्ग्यास्त्रयोऽर्थाः, व्यञ्जनाया व्यङ्ग्यानाश्चाऽसङ्ख्याता भेदाः प्रतीतिवशात् स्वीकृताः प्रतीताश्च सर्वैस्तथाऽस्माभिरपि कल्प्यते। जात्यादीनि प्रवृत्तिनिमित्तानि विना, विना च लक्षणया सत्यादयः शब्दा निर्विशेषां चितं बोधयन्तीति निर्गुणश्रुतिजातया प्रतीत्या स्वीकार्यमिति ॥१२॥

पूर्वोक्ते पक्षे पुनरुक्तिं वीक्ष्य निर्विशेषाश्रितं स्थापयितुं तद्वादी नास्तिकाभ्युपगतेनाऽपोहवादेन प्रवर्तते। ततश्चेति। तं पूर्वोक्तं पक्षं विहायेत्यर्थः। ल्यब्लोपे कर्मणि पञ्चमी। गोत्वमगोभिन्नत्वमितिवत् सत्यत्वमसत्यभिन्नत्वमित्यादिव्यावृत्तेः स्वरूपम्। एवमिति। तेषां सत्यादिपदानाम् ॥ १३ ॥

ननु जीवेशभेदोऽपि शास्त्रेणोच्यते तस्य का गतिरिति चे-

फलाभावाच्च, किन्तु व्यवहारगोचर एव मृषाभूतः। जडजीवात्मकः प्रपञ्चः खलु शुक्तौ रूप्यमिव ब्रह्मण्यध्यस्तो मिथ्याभूतस्तेन तद्भेदोऽपि तथा ॥ १४ ॥

एवं हि श्रीविष्णुपुराणे पराशरो निश्चिनोति—'ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरिदिशो दिशश्च। सरित् समुद्राश्च स एव सर्वं यदस्ति चैवं प्रवर्य्य ॥ ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः। ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥ यदा तु शुद्धं निजरूपि सर्वं

---

यत्राह—यस्तु द्वेति। प्रसिद्धेरिति। हालिकैरपि स्वेतरेभ्यः स्वभेदो ज्ञायते एव न तत्र शास्त्रापेक्षाऽस्ति। फलाभावाच्चेति। भेदिनामीशोपासनया वैकुण्ठं गतानामपि तत्रेशमुपासीनानां न पारतन्त्र्यनिवृत्तिर्नृपसेविनामिव सम्पन्नानामपीति न तत्र फलित्वमस्तीति भावः। नन्वयमपुमर्थो भेदः कुतो जातस्तत्राह—जीवजडेति। यथा शुक्तेरज्ञानादेव तत्र रजतं भासते तथा ब्रह्मणोऽज्ञानादेव तस्मिन् प्रपञ्च इति रजतवत् प्रपञ्चो मृषैव। ततश्च प्रपञ्चभेदोऽपि मृषैव ॥ १४ ॥

पराशरोऽपि महर्षिरेतमर्थमवादीदित्याहैवमिति। ज्योतींषि विष्णुरित्यादौ स्थाणुः पुरुष इत्यादिवद्बाधायां सामानाधिकरण्यं बोध्यम्। ज्ञानेति। यतो भवान् ज्ञानस्वरूपोऽतस्तस्याशेषमूर्तित्वं शैलाब्धिधरादिरूपत्वं देवमानवाद्याकारत्वञ्च मृषेत्यर्थः।

कर्मक्षये ज्ञानमपास्तदोषम् । तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥ वस्त्वस्ति किं कुत्र चिदादिमध्यपर्यन्तहीनं सततैकरूपम् । यच्चाऽन्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम् ॥ मही घटत्वं घटतः कपालिका कपालिकाचूर्णरजस्ततो-

---

ततो ज्ञानस्वरूपस्य भगवतोऽशेषमूर्तिताया मृषात्वादेव हेतोः । शैलादिभेदान् ज्ञानस्वरूपे तस्मिन् शुक्त्यादौ रजतादीनिव तदज्ञानेन विरुद्धेन भ्रमरूपेण ज्ञानेन विजृम्भितान् कल्पितान् जानीहि । क्लीबत्वमार्षम् । नन्वस्य भ्रमस्य निवृत्तिः कदा तत्राह—यदा त्विति । यदा ज्ञानं निजरूपि सत् शुद्धं भवति । तथा त्वं कदेति चेत्तत्राह—यदा सद्गुरूपदेशोपलब्धतत्त्व इत्यनेन सर्वकर्मक्षये सति तदपास्तदोषं विनिवृत्तभेदमलं भवति । तदा सङ्कल्पतरुफलानि वस्तुषु वस्तुभेदा न भवन्ति । शुक्त्यादिज्ञानेन रजतादय इव शैलादिभेदा विनङ्क्ष्यन्तीत्यर्थः । असत्त्वादेव शैलादयो वस्तुभेदा न भवन्तीत्याह वस्त्वस्तीति । आदिमध्यान्तहीनं सततैकरूपं वस्तु किं कुत्रचिदस्ति? नास्त्येवेत्यर्थः । हे द्विज मैत्रेय । यच्च शैलादिकमन्यथात्वं परिणामं भूयः पुनः पुनर्याति तत्तथोक्तलक्षणं न भवति । 'भूयस्तु स्यात् पुनः पुन'रिति श्रीधरः । तत्र तत्त्वं वस्तुत्वं कुतः, नास्त्येवेत्यर्थः । अन्यथात्वमभिनयेनाह—महीति । मही मृत्तिका कुलालेन व्यापारिता घटत्वं याति । स्फुटिताद् घटतः कपालिका भवति । सा चूर्णीभावं गता रजो भवति । रजसस्त्वणुः । पुनः पुनरेवमिति शैला-

ऽणुः। जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु' ॥ १५ ॥

'तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचिद्द्विज वस्तुजातम्। विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥ ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम्। एवं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति' ॥ १६ ॥

---

दीनां परिणामित्वम्। जनैरिति। स्वकर्मस्तब्धात्मज्ञानैर्जनैरत्र जगति मुहुः परिणामिशैलधरादिमये किं वस्तु ब्रह्मतत्त्वमालक्ष्यते त्वं ब्रूहीति नैवाऽलक्ष्यत इत्यर्थः ॥ १५ ॥

विज्ञानात्मकं ब्रह्मैव वस्तु तदज्ञानात्तत्र कल्पितमन्यत् सर्वमवस्त्वेवेत्युक्तमपि दृढतार्थं पुनरप्याह—तस्मादित्यादि द्वाभ्याम्। विज्ञानमात्मतत्त्वं विनाऽन्यद् वस्तुजातं शैलादि नास्ति। ननु प्रतीयमानं कथमपलपनीयं तत्राह—विज्ञानमिति। एकमद्वितीयमित्यर्थः। यथा रज्जुरेव तत्स्वरूपानभिज्ञैर्भुजङ्गाद्यभावनाऽभ्युपेयते तथात्मवस्त्वेव तत्स्वरूपानभिज्ञैः शैलादिभावेनेति भुजङ्गादिवत्तन्मृषैवेत्यर्थः। आत्मवस्तु परिशोधयति ज्ञानमिति। विशुद्धं निर्विशेषम्। विमलमिति देहयोगेन, विशोकमित्यन्तर्बहिःकरणयोगेन च वर्जितम्। अतोऽशेषेति। एवं मदुक्तविधया ज्ञानमात्मतत्त्वं सदैकमेकरसम्। विद्योपहितः स एव वासुदेवः परमः श्रीमान्। यत आत्मतत्त्वादन्यन्नास्ति। तदन्यत् सर्वं मृषेति ॥ १६ ॥

'सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्। एतत्तु यत् संव्यवहारभूतं तत्राऽपि चोक्तं भुवनाश्रितं ते ॥ यज्ञः पशुर्वन्हिरशेष ऋत्विक् सोमः सुराः स्वर्गमयश्च कामः। इत्यादिकर्माश्रितमार्गदृष्टं भूरादिभोगाश्च फलानि तेषाम् ॥ यच्चैतद् भुवनगतं मया तवोक्तं सर्वत्र व्रजति हि कर्मवश्य एकः। ज्ञात्वैतद् ध्रुवमचलं सदैकरूपं तत् कुर्याद्विशति हि येन वासुदेव'मिति ॥ १७ ॥

अत एव भेदग्राहिणं श्रुतिर्निन्दति, भयञ्च तस्याभिधत्ते 'अथ योऽन्यां देवतामुपास्ते' 'अन्योसावन्योह-

---

सदिति। एवं मदुक्तप्रकारकः सद्भावः समीचीनः श्रुतेरभिप्रायो भवतस्तत्र मयोक्तः। स कीदृगित्याह—ज्ञानमात्मतत्त्वम्। अन्यच्छैलाब्धिधरादि। एतदिति। तत्रापि सत्यासत्यार्थोपाख्याने भुवनाश्रितं यन्मया तवोक्तं तदेतत्तु संव्यवहारभूतं स्वामिकार्थोच्चयवन्न तु पारमार्थिकमित्यर्थः। दर्शिति यज्ञ इति। तेषां कर्मणाम्। कर्मफलान्यनित्यानीत्याह—यच्चेति। एतद् भोग्यभोगस्थानजातम्। कर्मवश्यत्वादेक एव तत्र सर्वत्र पर्यायेण व्रजति। एतत् कर्मफलजातमनित्यं ज्ञात्वा जनस्तत्साधनं कुर्यात्। येन वासुदेवं विशति तत्र लीयते। ध्रुवं नित्यम्। अचलं पूर्णम् ॥ १७ ॥

अत एवेति। भेदस्य मृषात्वादेवेत्यर्थः। अथेति बृहदा-

मस्मीति वसन्वेद यथा पशुरेवं स देवानामिति', 'यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' ॥, 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवती'त्यादिका । तस्मात् परापरात्मनोरभेद एव पारमार्थिकः, भेदस्तु व्यावहारिक इति सिद्धम् ॥ १८ ॥

'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते', 'तद्योहं सोऽसौ योऽसौ सोहमि'ति 'तत्त्वमसी'ति चैवमादिष्वपि भागलक्षणया विरुद्धान् गुणांशान् विहाय संविदनुभूतिपर्यायं चैतन्यमात्रमेकं तयोः

---

रण्यके । परमात्मदेवता स्वस्मादन्यतयोपासीनः पशुवदज्ञ इत्यर्थः । यदेवेति काठके । इह जीवस्वरूपे । अमुत्रेश्वरस्वरूपे च । चैतन्यमात्रमेकं वेद्यं तत्र नानात्वदर्शी जन्ममरणप्रवाहं विन्दतीत्यर्थः । यदा ह्येवेति तैत्तिरीयके । एतस्मिन्नानन्दमये ब्रह्मणि । उदरमल्पमन्तरं विशेषं यदैष कुरुते भावयति तदाऽस्य संसारभयमुत्पद्यते इत्यर्थः । 'अवकाशे बहिर्योगे विशेषेऽवसरेऽन्तर'मिति हलायुधः । भेदस्तु व्यावहारिक इति । एतत्तु यत्संव्यवहारभूतमिति स्मृतेः ॥ १८ ॥

स्वतः प्रतीतिपक्षेऽपोहपक्षे च स्थूलधियां यद्यसन्तोषस्तदा लक्षणयैवाऽद्वैतं साधयामीति भावेनाह .त्वं वा इति जाबालाः । तद्योऽहमित्यैतरेयिणः । भागलक्षणया जहदजहत्स्वार्थया । विरु-

स्वरूपमवगमनीयं निर्गुणवाक्यानुरोधादेव । बलवच्च निर्गुणवाक्यं स्वरूपपरत्वात् ॥ १९ ॥

यत्त्वस्य क्वचिद्रूपं वर्णयन्ति तत् किल कल्पितमेव 'चिन्मयस्याऽद्वितीयस्य निष्कलस्याऽशरीरिणः । उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पने'त्यादिश्रवणात् । कार्यञ्च तेषामरुन्धतीदर्शनन्यायेन क्रमेण प्रत्यक्प्रवणचित्ततैव ॥ २० ॥

एवञ्चाऽसत्यैरेव शास्त्रादिभिः सत्यभूता ब्रह्मतावाप्तिरसत्यैरेव स्वाप्निकस्त्रीसङ्गशिरश्छेदादिभिः सत्यभूत-

---

द्धान् विभुत्वाणुत्वनियन्तृत्वनियम्यत्वादीन् गुणांशान् विहाय त्यक्त्वा । बलवच्चेति । सगुणवाक्यं तु गुणपरत्वाद् दुर्बलमित्यर्थः ॥ १९ ॥

ननु सत्पुण्डरीकनयनं मेघाभवैद्युताम्बरमित्यादौ ब्रह्मणो रूपित्वश्रवणान्निर्गुणत्वं कथं ब्रवीषीति चेत्तत्राह यत्त्वस्येति । क्वचित् श्रुतिप्रदेशे स्मृतिषु चेत्यर्थः ! चिन्मयस्येति श्रीरामोपनिषदि दृष्टम् । चिन्मयस्य विज्ञानमात्रस्य । अद्वितीयस्य द्वितीयभेदासहस्य । निष्कलस्य निरंशस्य । अशरीरिणो देहेन्द्रियप्राणसम्बन्धशून्यस्येत्यर्थः । प्रत्यगिति । विज्ञानमात्रब्रह्मनिरतमनस्तेत्यर्थः ॥ २० ॥

नन्वद्वितीयचिद्वादे, तदन्येषां सर्वेषामर्थानां कल्पितत्वेन मृषात्वात् कथं मृषाभूतानां शास्त्राचार्यतदुपदिष्टसाधनानां ब्रह्म-

सुखदुःखादेरुपलम्भात् । अत उक्तम्—'छायाप्रत्याह्वयाभासा ह्यसन्तोऽप्यर्थकारिण' इति । तस्मान्निर्विशेषचिन्मात्राद्वैतं ब्रह्मैव सत्यं, तदन्यत् सर्वं तत्र परिकल्पितं मिथ्याभूतमिति ॥ २१ ॥

अत्राऽऽचक्ष्महे—न ह्यभेदे फलमस्ति । अज्ञाननिवृत्तिरानन्दावाप्तिश्च फलम् । तत्र नाद्यः, प्राक् प्रत्याख्यानात् । नान्त्यः निर्विशेषत्वक्षतेः । न चावाप्तिः स्वरूपमेव न धर्म इति वाच्यं, तथा सति साधनवैयर्थ्याद्यापत्तेः । नाऽपि ब्रह्मतापत्तौ सा श्रुतिः प्रमाणाभावमावहति एवशब्दस्य तत्र सादृश्यार्थकत्वात् । 'व वा यथा तथैवैवं साम्ये' इति ह्यनुशासनम् ।

---

तापत्तिलक्षणमोक्षहेतुत्वं स्यात्तत्राहैवश्चाऽसत्यैरेवेति । शुक्तिरजतादिवन्मृषाभूतैरेव शास्त्रादिभिः सत्या मुक्तिर्भवतीत्यत्रास्ति दृष्टान्तः । मृषाभुता अपि स्वाप्निका योषिदाश्लेषादयः सुखादीनि सत्यानि जनयन्तः प्रतीयन्ते तद्वत् । एवमुक्तं भगवतापीत्याह छायेति । व्याख्यातं प्राक् । पूर्वपक्षं सङ्कलयति तस्मादिति ॥ २१ ॥

अत्रेति । महति पूर्वपक्षे परिहारसमाधाने ब्रूमहे इत्यर्थः । इह पूर्वोक्तान् पूर्वपक्षान् हृदि निधाय ते द्वे भावनीये । न हीति । अभेदे चिन्मात्राद्वैते । प्राक् पूर्वपादे वामनाख्ये । निर्विशेषत्वेति ।

ततश्च ब्रह्मैव ब्रह्मसम इत्येवार्थः। अत एव ब्रह्मभावा-नन्तरं ब्रह्माऽप्ययः सङ्गच्छते नान्यथा। श्रुतिश्च—'निरञ्जनः परमं साम्यमुपैती'ति, 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतमे'ति च। स्मृतिश्च—'इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च'॥ इति, 'भोगमात्रसाम्यलिङ्गाच्चे'ति न्यायश्च॥ २२॥

---

आनन्दित्वप्रतीतेरिति भावः। न चेति। अवाप्तिरानन्दलाभः। सा श्रुति'र्ब्रह्मविद् ब्रह्मैव भवती'त्यादिका। व वेत्यमरवाक्यम्। अत एवेति। एवशब्दस्य साम्यार्थकत्वेन ब्रह्मतापत्तेरपनीतत्वाद् ब्रह्मभावेन ब्रह्मसाम्यभवनस्य व्याख्यातत्वाच्चेत्यर्थः। अन्यथा ब्रह्मतापत्तिस्वीकारे। निरञ्जन इति मुण्डके। निर्मायः सन्नित्यर्थः। यथोदकमिति काठके। तादृक् तत्समम्। मुनेर्ब्रह्मध्यायिनो विजानतो ब्रह्मानुभविनो जनस्यात्मा। एवमासिक्तोदकवद्ब्रह्मसमो भवतीत्यर्थः। साम्यमत्र नैरञ्जन्यांशेन ज्ञेयम्। इदमिति श्रीगीतासु। सर्गप्रलययोर्जन्मव्यथाविरहान्मुक्तम्। भोगेति ब्रह्मसूत्रम्। नेति पूर्वतो वर्तते। परमं साम्यमुपैतीति स्वरूपसामर्थ्याभ्यां जीवेशयोः साम्यं वाक्यार्थो न। कुतः, 'सोऽश्नुते सर्वान् कामानि'त्यत्र भोगमात्रे मुक्तस्य ब्रह्मसाम्यवचनाल्लिङ्गादेवेत्यर्थः॥ २२॥

न च लोकेऽज्ञातो जीवब्रह्माभेदः शास्त्रेणैव ज्ञाप्यतेऽनस्तत्र तस्य तात्पर्यमिति वाच्यं, शास्त्रतात्पर्यनिर्णेतृभिः षड्भिर्लिङ्गैस्तद्भेदस्यैव निर्णेष्यमाणत्वात् । तदद्वैतं ब्रह्मातिरिक्तं ब्रह्मात्मकं वेत्यादिभिस्तदभेदस्य पुरा निरासाच्च । तस्मान्नरशृङ्गादिवदसत्त्वादेव तथात्वं तस्य ॥ २३ ॥

एवञ्च 'सदेव सौम्येद'मित्यादाविदंशब्दितस्य जगतः शक्तिमद् ब्रह्मैवोपादानं निमित्तञ्चेति विवक्षितम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्, पदेभ्यस्तथावगमाच्च । न चैतदभेदमात्रे मानं, एकपदेनैव तत्सिद्धौ पदान्तरवैयर्थ्यापत्तेः । न च सजातीयविजातीयस्वगतभेदनिरासात् पदत्रयमर्थवदेवेति वाच्यम्, अभेदस्य नि-

---

यत्तु मध्ये शास्त्रैकगम्यो ब्रह्माभेद इत्यनेन लोकाज्ञातः शास्त्रमात्रज्ञातस्तदभेद इत्युक्तं तन्निरस्यति न चेति । नन्वद्वैतिभिरद्वैतं षड्भिर्लिङ्गैर्निर्णीतमस्तीति चेत्तत्राह तदद्वैतमिति । पुरा पञ्चमे पादे । तथात्वमिति । तस्याऽभेदस्याऽज्ञातत्वमित्यर्थः ॥ २३ ॥

एवञ्चेत्यादि । एकेति । येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमित्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञानादुपादानत्वम् । पदेभ्यस्तथेति । 'तदैक्षत बहु स्यां प्रजायेये'ति 'तत्तेजोऽसृजत' इत्यादिषु

रस्तत्वात् । तस्मादेवाद्वितीयपदे तदितरसर्वाभावस्तस्य च निरुपाख्यत्वमधिकरणरूपत्वञ्चेत्यादिकल्पनं दूरोत्सारितम् । किञ्च तेन कल्पनेनाऽपि नाऽभिमतं सिद्ध्यति । अभावेनैव साद्वितीयत्वापत्तेः । द्वितीयस्य निरुपाख्यत्वेऽपि ब्रह्मणि तदाधारत्वापत्तेः । अभावस्याऽधिकरणरूपत्वे तु घटाभावो भुवीत्यत्र भुवि भूरित्याद्यनुभवाप-

---

सृजतीत्यादिपदेभ्यो निमित्तत्वञ्चेत्यर्थः । न चेति । एतत् सदेव सौम्येति वाक्यम् । तत्सिद्धावभेदनिष्पत्तौ । पदान्तरयोरेवाऽद्वितीयपदयोर्निष्फलतापत्तेः । न च सजातीयेति । क्षेत्रज्ञेभ्यः सजातीयः । प्रकृत्यादिभ्यो विजातीयः । स्वगुणेभ्यः स्वगतश्च भेदः प्रतीयते । तन्निवारकतया त्रीणि पदानि सार्थकानीति न वाच्यमित्यर्थः । निरस्तत्वाद्रामनपादे । तस्मादिति । अभेदस्य पूर्वत्र निरस्तत्वादेव हेतोः । तस्य चेति । ब्रह्मेतरसर्वाभावस्य खपुष्पादिवदवस्तुत्वमित्यर्थः । अधिकरणरूपत्वं ब्रह्मात्मकत्वमित्यर्थः । तथा च सर्वैरुपायैरद्वैतमेव साध्यते । तस्य च पूर्वं निरस्तत्वादुपायानां निरर्थकत्वमिति भावः । किञ्चेति । तेनाद्वितीयपदे ब्रह्मणितदन्यसर्वाभावाश्रयत्वकल्पनेन सर्वाभावस्य निरूपाख्यत्वकल्पनेन चेत्यर्थः । तवाभिमतं निर्विशेषचिदद्वैतं न सिद्ध्यति । द्वितीयस्य तदितरसर्वाभावस्य । ब्रह्मणि अभावाधिकरणत्वं हि भावरूपं प्रतीतेरिति स्वमतेन दूषणमर्पितम् । अथ तार्किकमतेन तदर्पयति—अभावस्येति । भुवि घटाभाव इत्यत्र भुवि भूरित्यापत्तेरित्यर्थः । ब्रह्मणः सर्वाभाव-

त्तेर्ब्रह्मणो निरुपाख्यतापत्तेश्चेत्यन्ये। तस्मात्तुच्छमेतत् ॥ २४ ॥

नेह नानेत्यत्र ब्रह्मव्यूहेषु प्रतीतस्य भेदस्य निषेधः। तेषु नानात्वेन प्रतीतिरभेदे सत्येवेति श्रुतिराह—'एकोऽपि सन् बहुधा योऽवभाती'ति, 'एकं सन्तं बहुधा दृश्यमान'मिति च। धर्मभेदस्य वायं प्रतिषेधः। श्रुतिश्च 'यथोदकं दुर्गे वृष्ट'मित्याद्या। न चात्र नानाविधज्ञातृज्ञेयत्वादिप्रतिषेधः, तस्य श्रुतिप्रतिपादितत्वात्॥ २५॥

'यत्र हि द्वैतमिवे'त्यादौ च न भेदस्य प्रतिषेधः पारमार्थिकत्वात्। 'पृथगात्मानं प्रेरितारञ्च मत्वा जुष्ट-

---

रूपत्वे शून्यतापत्तेश्चेत्यन्ये तार्किकास्तस्मिन् दूषणमर्पयन्ति। स्वमते त्वभावस्याऽधिकरणरूपत्वेपि विशेषबलादभावत्वमप्यस्तीति बोध्यम्। तस्मादिति। एतदद्वितीयपदेऽर्थद्वयकल्पनम् ॥२४॥

नेह नानेति श्रुतिं व्याचष्टे नेहेत्यादिना। ब्रह्मव्यूहेषु वासुदेवादिषु चतुर्षु। धर्मभेदस्य वेति। ब्रह्मधर्मा ब्रह्मणो भिन्ना न भवन्तीति वा तदर्थः। पराभिमतं वाक्यार्थं दूषयति न चात्रेति। तस्य ज्ञातृज्ञेयादिभावस्य। 'तमात्मस्थं येऽनुपश्यन्ति धीराः। एतज्ज्ञेयं नित्यमेवात्मसंस्थ'मित्यादिश्रुतिप्रतिपादितस्य श्रुत्यैव प्रतिषेधे तस्या उन्मत्ततापत्तिरिति भावः ॥ २५ ॥

यत्र हीत्यादिभिरनृतेन हि प्रत्यूढा इत्येतैर्भेदः कल्पितत्वात्प्रतिषिद्ध इति यदुक्तं तत्तावन्निरस्यति यत्र हि द्वैतमित्यादिना।

स्ततस्तेनाऽमृतत्वमेति' जुष्टं यदाप सति अन्यमीशमस्य महिमानमिति वीतशोक इति तज्ज्ञानस्य मोक्षहेतुत्वश्रवणात् ॥ २६ ॥

अयमेवार्थः—ब्रह्मायत्तवृत्तिकत्वाद् ब्रह्मात्मकमिदं जगद् व्यपदिश्यते। प्राणायत्तवृत्तिकत्वाद्यथा प्राणात्मकं बहिर्व्यपदिष्टम् । छान्दोग्ये—'न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते । प्राण इत्येवाचक्षते ।

---

पारमार्थिकत्वादिति । नित्यत्वादित्यर्थः । तत्त्वे हेतुमाह—पृथगिति श्वेताश्वतरोपनिषदि । आत्मानं स्वप्रेरितारञ्च परेशं पृथङ्मत्वा प्रेर्यत्वप्रेरकत्वाभ्यामणुत्वविभुत्वाभ्यां भृत्यत्वस्वामित्वाभ्याञ्च भेदं तयोर्विज्ञाय । ततस्तदनन्तरं जुष्टस्तमुपासीनस्तेन पार्थक्यवत्त्वाजोषणेनाऽमृतत्वमेति । जुष्टमिति प्रकटार्थम् । तज्ज्ञानस्य भेदावगमस्य । अत्र जीवेशयोर्भेदोऽणुत्वविभुत्वादिनित्यधर्मकृतत्वात् सत्यस्तस्य ज्ञानञ्च मोचकम् । असत्यत्वेन तज्ज्ञानं मोचकं न श्रूयते । न हि शुक्तिकारजतज्ञानं मोचकं श्रुतं तर्हि शुक्तिकाज्ञानं सत्यत्वान्मोचकमस्तु, मैवमश्रुतत्वात् । भेदज्ञानस्य मोक्षहेतुत्वमुक्तं याज्ञवल्क्येन भारते—'यदा तु पश्यतेऽन्योऽहमन्य एष इति द्विज !। तदा स केवलीभूतः षड्विंशमनुपश्यती'ति ॥ २६ ॥

चोद्यं निरस्य स्वमते वाक्यार्थं सप्रमाणमाह—किन्त्विति । न वै इति । वागादीनि न वागादिशब्दव्यपदेश्यानि किन्तु प्रा-

प्राणो ह्येवैतानि सर्वाणि भवती'ति ॥ २७ ॥

तथा ब्रह्मनिष्ठत्वाद् ब्रह्मव्याप्यत्वाद्वा ब्रह्मात्मकं तत् स्मर्यते । 'अन्यश्च परमो राजन् तथान्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्ति ह्येक एवेति साधव' इति, 'सर्वं समाप्नोषि ततोऽसि सर्व' इति च ॥ २८ ॥

तथा च संसारदशायां तत्त्वाज्ञानात् स्वतन्त्रमिव तदज्ञस्य भवति । ततेतर इतरं पश्यति स्वतन्त्रं जानातीत्यर्थः । यदा तु शास्त्राचार्यप्रसादाद्विध्वस्ताऽज्ञानः सन्ततानुचिन्तनेन सञ्जातब्रह्मसाक्षात्कारस्तत्स्वरूपश-

---

धीनवृत्तिकत्वात् प्राणशब्दव्यपदेश्यानि प्राणरूपाणि च तानि यथा तत्प्रकृतेऽपीति ॥ २७ ॥

गत्यन्तरे प्राह—अन्यश्चेति । मोक्षधर्मे जनकयाज्ञवल्क्यसंवादे विश्वावसुं गन्धर्वराजं प्रति याज्ञवल्क्यवाक्यम् । परमो हरिः । पञ्चविंशको जीवः । तत्स्थत्वात् परमाधारकत्वात् । एकः परमाभिन्नः । सर्वमिति श्रीगीतास्वर्जुनवाक्यम् । समाप्नोषि व्याप्नोषि । ततः सर्वोऽसि सर्वं त्वदात्मकमुच्यते इत्यर्थः ॥ २८ ॥

सङ्गतित्रयं प्रदर्श्य यत्र हीति वाक्यार्थं योजयति । तथा चेत्यादितत्त्वाज्ञानात्तदायत्तवृत्तिकत्वाप्रबोधादित्यर्थः । यदा त्विति । ज्ञानदशायां मोक्षदशायाञ्चेत्यर्थः । विध्वस्ताज्ञानो विनष्टस्वातन्त्र्याभिमानः स्फुरिततदायत्तत्वादिधर्मत्रयश्चेत्यर्थः । सन्ततानुचिन्तनेन सर्वदा निदिध्यासनेनेत्यर्थः । स्वरूपशक्त्य-

क्त्यनुग्रहेणोपलब्धपार्षदभावस्तदा केन कं पश्येदपि तु तेनैव तं पश्येदित्यर्थः ॥ २९ ॥

श्रुतिरप्येवमाह—'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वा'मिति । स्मृतिश्च-'प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम् । आरब्धकर्मनिर्वाणो न्यपतत् पाञ्चभौतिक' इति, 'आदत्ते हरिहस्तेन हरि-

———

नुग्रहेण भक्तभावानुविधायिभगवत्सङ्कल्पप्रवृत्तपरासारह्लादसंवित्प्रसादेन लब्धपार्षदभावासिद्धभगवत्सेवोपयोगिविग्रह इत्यर्थः । तदा प्राकृतदेहेन्द्रियाणामभावात् केन प्राकृतेन चक्षुषा कं बान्धवादिकं जनं पश्येन्न केनचित् कञ्चिदित्यर्थः । अपि तु तेन भगवन्तं पश्येदित्यर्थः ॥ २९ ॥

भगवत्तनुं साक्षात्करोति तत्सङ्कल्पसिद्धां तनुञ्च विन्दतीत्यत्र कठश्रुतिमुदाहरति यमेवेति । यं मुमुक्षुं साधनसम्पन्नं जीवम् । एष परमात्मा । वृणुते स्वीकरोति । तेनैव स लभ्यः । कथं लभ्यस्तत्राह-स्वां तनुं तस्य विवृणुते दर्शयति । स्वसङ्कल्पसिद्धां तनुं ददाति चेत्यर्थः । ददातीत्यत्र स्मृतियुगलमुदाहरति प्रयुज्यमाने इति । प्रथमे नारदवाक्यम् । तां भागवतीं तनुं प्रति । मयि प्रयुज्यमाने नीयमाने सति । आदत्त इति । हरिहस्तेनेत्यादि । हरिसङ्कल्पप्रवृत्तपरासाररूपत्वादिति भावः । तृतीये ब्रह्मवाक्यञ्च । 'त्वं भक्तियोगपरिभावितहृत्सरोज आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम् । यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाये'ति । इतरथेति । मोक्षे नि-

दृष्ट्वैव पश्यति । गच्छेच्च हरिपादेन मुक्तस्यैषा स्थितिर्भवे'दिति च । इतरथा सर्वपदसङ्कोचापत्तिः ॥३०॥

वाचारम्भणमित्यादौ कारणाद् ब्रह्मणः कार्यजगदभिन्नमित्येवार्थः । आह चैवं भगवान् सूत्रकारः—'तदनन्यत्वमारम्भणशब्दादिभ्य' इति । तत्र च ब्रह्मवत् सत्यं जगदिति प्रतिपन्नम् । इतरथा सत्याऽसत्ययोरभेदानुपपत्तिः ॥ ३१ ॥

इतोऽन्यदार्तमित्यत्राऽन्यज्जगदार्तं दुःखीत्येवार्थः, 'आर्तो जिज्ञासुरर्थार्थी'त्यत्र तथाऽवगमात् । दुःखि चेदमखिलम्, 'तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधि-

---

विशेषब्रह्माभिन्नो भवतीति स्वीकारे । यत्र त्वस्य सर्वमात्मैवाऽभूदिति सर्वशब्दस्य सङ्कोचः स्यात्, यत्रायमात्मैवाऽभूदित्येतावतैव विवक्षितसिद्धेरिति भावः ॥ ३० ॥

तदनन्येति । तस्मात् प्रधानक्षेत्रज्ञशक्तियुक्तत्वाद्ब्रह्मणोऽनन्यदभिन्नमेव जगत् । कुतः ? 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मित्यादिवाक्येभ्य इत्यर्थः । तत्र चेति । तदनन्यत्वसूत्रे । इतरथा शुक्तिरजतवज्जगतो मिथ्यात्वस्वीकारे । सत्यासत्ययोर्ब्रह्मजगतोः ॥ ३१ ॥

तस्मादिति श्रीदशमे ब्रह्मवाक्यम् । असत्स्वरूपं परिणामिवपुः परतन्त्रं वा । 'सत्त्वं स्वातन्त्र्यमुद्दिष्ट'मित्यादिस्मृतेः । एतमि-

षणं पुरुदुःखदुःख'मित्युक्तेः। एतमित्यादौ प्रत्यक्परत्व-विरोधिककर्कशकपटरूपमप्रियमसत्यं वाक्यमनृतमुच्यते। तेन यस्मात् प्रजाः प्रत्यूढाः, तस्मादेनं ब्रह्मलोकं न विन्दन्तीत्येवमर्थः। ऋतं खलु सूनृतं वाक्यम् 'ऋतञ्च सूनृती वाणी'ति भगवद्व्याख्यानात्। तद्भिन्नमनृतम् ॥३२॥

एवञ्च 'गुणाः सृजन्ती'त्यादावरविन्दनेत्रो भगवान् ज्ञानमात्राद्वैतवादमुपदिशतीति न शक्यं भणितुं, स्वस्यापि परेशाभिमानिनो मिथ्याभूतत्वोपपादनेनोपदेष्टृत्वासम्भवात्, पूर्वापरनिजोक्तेर्विरोधाच्च। परमार्थरूपपरमेश्वरवैमुख्यादस्य जीवस्य संसृतिस्तत्सांमुख्यात्तु तदुपरतिरिति शास्त्रेऽस्मिन्नभ्यस्यते ॥ ३३ ॥

तस्मादयमेवार्थः—नश्वरतया विश्वं विपश्यन् हृदयशुद्धिलोकसङ्ग्रहेच्छया निवृत्तं कर्माऽनुतिष्ठन् यथा-

---

ति। प्रत्यूढा ग्रस्ताः। ऋतं खलु सूनृतमिति। 'सूनृतं प्रिये सत्ये' इत्यमरश्च। ऋतञ्चेत्येकादशे ॥ ३२ ॥

श्रुतिशैल्यां परकृतं पूर्वपक्षं निरस्य स्वमतं तत्र प्रदर्शितम्। अथ स्मृतिशैल्यां स्वमतं दर्शयिष्यता परकृतः पूर्वपक्षस्तावद् दूष्यते—एवमित्यादिना। अस्मिन्नेकादशस्कन्धे शास्त्रे ॥३३॥

सिद्धान्ते वाक्यार्थं योजयति तस्मादित्यादिना। यथायथं यथार्हं यमान्नियमांश्च। भजन्निति न तेष्वतीवाभिनिवेशः किन्तु

यथं यमनियमान् भजन् मदभिज्ञगुरूपसत्तिविदिततत्त्वत्रयो विविच्य प्रणिहितमद्रूपस्तदुपसत्तिलब्धयाऽऽत्मविद्यया संसृतिं विधुनोतीति मयोदितेष्वित्यादिभिः स्वमतं प्रागुपदर्शितम्। अथ तस्य परिशुद्धये प्रतिपक्षभूतानि मतान्तराणि निराक्रियन्ते त्रिंशत्या ॥ ३४ ॥

तेष्वथैषामित्यादिभिः सप्तदशभिः कर्मजडानां मतं स्वयमुपन्यस्य दूषितम्। जीवस्य स्वतः कर्तृभोक्तृत्वरूपमिति तदंशस्तु 'गुणाः सृजन्ती'त्येकेन साङ्ख्यमतमाश्रित्य। नानाभूताः स्वतन्त्राश्च पुरुषा इति साङ्ख्यमतं च 'यावत् स्यादि'त्यादिना सार्धेन ज्ञानमात्राद्वैतमतमाश्रित्येति। अथ तदिदं मतत्रयं कुमतमिति

---

भक्तावेव स इति भावः। तत्त्वत्रय इति! ईश्वरो जीवः प्रकृतिरिति तत्त्वत्रयम्। कालकर्मणोरुपलक्षणमेतत्। विविच्य प्रकृत्यादितः स्वतश्च पृथक् कृत्वा। प्रणिहितं ध्यातं मद्रूपं येन सः। तदुपसत्तिर्गुरूपासना। अथेति। तस्य स्वोपदिष्टस्य सिद्धान्तस्य। परिशुद्धये परिष्काराय परिपक्वज्ञानायेति यावत् ॥ ३४ ॥

तेष्विति। तेषु विंशतिश्लोकेषु मध्ये। अथेत्यादिभिः सप्तदशभिः कर्मजडानां मतं स्वयं भगवतैवोत्थाप्य स्वयुक्त्यैव निराकृतमित्यर्थः। जीवस्येति। तदंशः कर्मजडैरूरीकृतो मतांशः। साङ्ख्यमतमाश्रित्य भगवता दूषित इत्यन्वयः। 'गुणाः सृजन्ती'

स्वयं प्रत्याचष्टे 'य एतत्समुपासीरंस्ते मुह्यन्ति शुचार्पिता' इत्यनन्तरोत्तरवाक्येनार्द्धेनेति ॥ ३५ ॥

इत्थ'ञ्चेदमत्रे'त्यादिनैकजीववादरूपं रहस्यकल्पनमपि निरस्तम् । 'नित्यो नित्यानां चेतनश्चेतनानामेको

---

त्यस्य साङ्ख्यमतेनैवमर्थः । गुणाः सत्त्वादयः । 'गुणो मौर्व्या'-मित्यादि मेदिनीकारकोशात् । मिथुनवृत्तयस्ते । कर्माणि सृजन्ति न त्वात्मा । नन्विन्द्रियाणि कर्मकर्तृण्यनुभूयन्ते तत्राह-गुणोऽहङ्कारो गुणानिन्द्रियाणि सृजते इति स्वकार्याहङ्कारसृष्टानामिन्द्रियाणां यत् कर्मकर्तृत्वं तद् गुणानामेव सत्त्वादीनामित्यर्थः । नन्वात्मनो भोक्तृत्वात्कर्तृत्वं च तस्यैव स्यादुभयोरैकनिष्ठ्यादिति चेत्तत्राह-जीवस्त्विति । गुणैरिन्द्रियैः संयुक्तो जीवो न तु शुद्धः कर्मफलानि भुङ्क्तेऽनुभवतीति भोक्तृत्वमपि गुणहेतुकत्वाद् गुणानामेवेति साङ्ख्यानामेष सिद्धान्तः । यावत् स्यादित्यादि सार्द्धकन्तु प्राग् व्याख्यातमेवाऽनुसन्धेयम् । तेन निर्विशेषचिद्द्वैतिनां सिद्धान्तेन नानाभूताः स्वतन्त्राश्च पुरुषा इति साङ्ख्यमतञ्च दूषितं निरस्तं भगवतेति सम्बन्धः । अथ स्वयं तन्मतत्रयं दूषयति । य इति । कर्मजडानां साङ्ख्यानां केवलाद्वैतिनां च यन्मतं ये तत्तन्मतावलम्बिनः समुपासीरन् स्वीकुर्वीरन् ते शुचार्पितास्तत्तन्मतानां भ्रान्तिविजृम्भितत्वात् शोकमेता मुह्यन्ति संसारसरसि निमज्जन्तीत्यर्थः ॥ ३५ ॥

इत्थञ्चेति । एतस्य मतत्रयस्य भ्रान्तिविजृम्भितस्य भगवता प्रत्याख्याते सतीत्यर्थः । तस्य गुणाः सृजन्तीत्यादिकस्य ।

बहूनां यो विदधाति कामा'निति श्रुतेश्च । एवं सति जीवेशाविति श्रुतिस्तु तर्कसमयकल्पितावेव तावादाय सङ्कच्छते न तु श्रुतिसिद्धाविति । तस्यां तु नित्यज्ञानादिगुणकमणुचैतन्यं जीव इति नित्यज्ञानादिगुणकविग्रहस्वरूपस्त्वीश्वर इति प्रतिपादनात् ॥ ३६ ॥

तथा किं भद्रमित्यादावप्यसौ स्वशक्तिमयस्य द्वैतप्रपञ्चस्य मिथ्यात्वमाहेति शङ्कितुमप्यनुचितं, 'य एको वर्णो बहुधा शक्तियोगाद्वर्णाननेकान्निहितार्थो द-

---

सार्द्धद्वयस्यैकजीववादपरत्वरूपरहस्यकल्पनञ्च निरस्तमित्यर्थः । नित्य इत्यादि कठश्रुतेश्चैकजीववादो निरस्तः । य ईश्वरो नित्यश्चेतन एको नित्यानां चेतनानां बहूनां जीवानां कामान् वाञ्छितानि विदधाति सम्पादयतीति तदर्थः । एवं सतीति । तौ जीवेशौ । तर्कशास्त्रे खलु जीव ईशश्चाकाशवद्विभुर्जडो ज्ञानाधिकरणमिति स्वाक्रियते । तदिदं श्रुतिविरुद्धं भगवन्मायामोहितैस्तार्किकैः कल्पितम् । अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । दन्द्रम्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धा इति श्रुतेः । श्रुतिसम्मतौ तौ दर्शयति तस्यामिति ॥ ३६ ॥

तथेति । असावरविन्दनेत्रो भगवान् । ईश्वरः स्वशक्त्या जगद्रचयतीति श्वेताश्वतराणां श्रुतिराह य इति । जगतो मिथ्यात्वे श्रुतिरेषा व्याहतार्था स्यात् । षड्विंशतीति । स्वयं भगवतै-

धाती'त्यादिश्रुतिव्याकोपात् षड्विंशतिपक्षस्य स्वयमेवा-ऽङ्गीकारात् । एतस्मादुपदेशात् प्रागूर्ध्वञ्च तस्य स्वात्मकत्वोपपादनाच्च । उपदेष्टृत्वासम्भवाच्च ॥ ३७ ॥

प्राग् यथा—'विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण चे'ति । ऊर्ध्वं यथा—'ज्ञानं विवेको निगमस्तपश्च प्रत्यक्षमैतिह्यमथाऽनुमानम् । आद्यन्तयोरस्य यदेव फलं का-

---

व । तत्पक्षे जीवेशभेदोऽस्तीति द्वैतं सत्यम् । एतस्मादिति । किं भद्रमित्यादिकात् । तस्येति द्वैतप्रपञ्चस्य । उपेति । तद्वादेऽभिमते भगवतो मिथ्यात्वेनोपदेष्टृत्वानुपपत्तेरिति मुख्यो दोषः ॥३७॥

प्राग्यथेति । प्रकृत्या पुरुषेण च सिद्धं विश्वमेकात्मकं शक्तिमदीश्वराभिमतं पश्यन् य एक इत्यादि श्रुतितो विजानन् परेषां स्वभावान् शान्तघोरमूढान् कर्माणि तादृशानि न प्रशंसेन्न गर्हयेदिति पूर्वेणाऽन्वयः । द्विमिश्रं जगदैश्वरं विज्ञाय तस्य स्तुतिनिन्दे त्यजेदित्यर्थः । ऊर्ध्वं यथेति । विवेको ज्ञानमित्यन्वयः । तस्य साधनान्याह—निगमो वेदः । तपो वेदोक्तकायक्लेशः । प्रत्यक्षं निजानुभवः । ऐतिह्यं पारम्परिक उपदेशः । अनुमानं तर्कः । फलमाह—अस्य जगत आद्यन्तयोर्यदस्ति तदेव मध्येपीति । किन्तत् ? कलयति प्रकाशयति इति कालः परेशः । हेतुः कारणम् । उपादानं प्रधानजीवलक्षणम् । परिणामनिमित्ते कालकर्मणी इति । इदं विश्वं शक्तिमदीश्वराभिन्नमिति यो विवेको निगमादिसाधनैरुत्पद्यते तज्ज्ञानं फलमित्यर्थः । अत्र दृष्टान्तमाह यथेति । सुष्ठु कङ्कणादिरूपेण

लश्च हेतुश्च तदेव मध्ये ॥ यथा हिरण्यां सुकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य । तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्व'दिति ॥३८॥

किञ्च भ्रान्तं ब्रह्मैव जगदिति तण्डुलपाकवत् संयुक्तमेव द्वैतमतो नित्यमबाधितमिति शुक्तिरजतवदारोपितत्वादसत्यं तदिति च वादस्तत्त्वोपदेशान्ते स्वयमेव निराकरिष्यते । 'एतावानात्मसंमोहो यद्विकल्पस्तु केवले ।

---

कृतं रचितं हिरण्मयस्य कङ्कणादेरुत्पत्तेः पुरस्ताद्विनाशाच्च पश्चाद्यदस्ति तदेव मध्ये नानापदेशैः कङ्कणादिनामभिर्व्यवहार्यमाणं भवति । अस्य जगत आदावन्ते मध्ये चाऽहमेव शक्तिमान् तद्वद्व्यपदेश्य इत्यर्थः । अत्रोभयत्रोपदेशे शक्तिमदीश्वराभिन्नं जगदित्युक्तम् ॥ ३८ ॥

अथ किं भद्रमित्यादौ यः केवलात्मैक्यवादस्त्वयाभिप्रेयते न स भगवदभिमतः, तद्वादस्य तेनान्ते निराकृतत्वादित्याह—किञ्चेत्यादिना । भ्रान्तमिति । यथा भ्रान्तो राजपुत्रः कैवर्तस्तथा भ्रान्तं ब्रह्मैव जीव इति । स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वमित्यादिश्रुत्यर्थाभासमाश्रित्य वर्णयन्ति, तदिदं दूषयत्येतावानित्यर्धकेन । केवले चिदेकरसे निर्गुणे ब्रह्मणि प्रपञ्चोऽहमस्मीति विकल्पो भ्रम एतावानुच्यते । अज्ञानमेतद् वक्तुरित्यर्थः । न हि तादृशो भ्रमः शक्यो वक्तुं यथा तण्डुलपाके तण्डुलाविविक्ता मिथः सम्पृक्तास्तथाऽनेके जीवाः प्रकृत्या

आत्मन्यृते स्वमात्मानमवलम्बो न यस्य हि ॥ यन्नामा-
कृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम् । व्यर्थेनाऽप्यर्थवादोऽयं
द्वयं पण्डितमानिना'मिति । विकल्पो भ्रमः ॥३९॥

तस्मादत्रायमर्थः । पूर्वत्र स्वप्राप्तिहेतुभूता स्वभ-
क्तिरुपदिष्टा । तत्प्रतिकूलयोः परनिन्दाप्रशंसयोर्विहा-

---

संश्लिष्टाः सन्तः कर्तृत्वभोक्तृत्वे भजन्तीत्यजामेकामित्यादिश्रु-
त्यर्थाभासमाश्रित्य साङ्ख्या वर्णयन्ति, तदिदं दूषयति—आत्म-
नीत्यर्धकेन । स्वमसाधारणं सत्यसङ्कल्पादिशक्तिकं परेशं
विनाऽऽत्मनि जीवे विषये यस्य प्रपञ्चात्मकस्य परिणामस्या-
ऽवलम्बो न सम्भवति । जीवेच्छायाः सचेतनप्रकृतिकृतत्वात्
तस्या जीवावलम्बनं, न हि जीवेच्छाया+ +रूप्यात् । न च
शक्तिसार्वज्ञ्ये, अश्रुतत्वादिति तदसम्भवः । शुक्तिस्वरूपान-
भिज्ञैर्यथा शुक्तौ रजतमारोप्यते तथा ब्रह्मस्वरूपानभिज्ञैस्तत्र
जगदारोप्यते ततो रजतवज्जगन्मिथ्यैवेति रज्ज्वामहेर्भोगभ-
वाभवौ यथेत्यादिस्मृत्यर्थाभासमाश्रित्याऽद्वैत्येकदेशिनः क-
ल्पयन्ति, तदिदं दूषयति यत्तामित्येकेन । नामभिराकृतिभिश्च
रूपैर्ग्राह्यं पञ्चवर्णं भूम्यादिपञ्चकमयं द्वैतं सत्येश्वरशक्तिमयं तद्वि-
ति प्रमाणप्रमितत्वादबाधितम् । तत्र जगन्मिथ्या शुक्तिरजतवदा-
रोपितत्वादिति व्यर्थेन सत्प्रतिपक्षेनानुमानेनार्थवादो मिथ्येत्य-
र्थकथनं पण्डितमानिनामेव न तु पण्डितानामित्यर्थः ॥ ३९ ॥

एवं चोद्यं निरस्य वाक्यार्थं स्वमतेन योजयति तस्मादय-
मत्रेति । तत्प्रतिकूलयोर्भक्तिबाधकयोः । तस्येति प्रपञ्चस्य । अ-

नाय तस्य विकारित्वं पारतन्त्र्यं चोपदर्शयति किमिति । अवस्तुनः परिणामिनः । 'यत्तु कालान्तरेणाऽपि नान्य-संज्ञामुपैति वै । परिणामादिसम्भूता तद्वस्तु नृप तच्च किम् ॥ अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते । तत्तु नाशि न सन्देहो नाशि द्रव्योपपादित'मिति स्मृतेः । त-च्च द्वैतमनृतं न ऋतं सत्यं प्रियं वाक्यं यस्मि-स्तत् । प्रत्यक्परताप्रतिकूलकर्कशकपटवाक्यवदित्यर्थः । तादृशं च वाचा मनसा च गोचरीकृतं सदवगम्य-त इत्याह-वाचेति । स्फुटार्थस्तु न सम्भवेत् । 'यत् किञ्चि-न्मनसा ग्राह्यं यद्ग्राह्यं चक्षुरादिभिः । बुद्ध्या च यत् परिच्छि-न्नं तद्रूपमखिलं तव'ेति स्मृतेः । तस्मादलं तत्प्रशंस-येति । अस्वतन्त्रं च द्वैतम् । न तस्मात् किञ्चित् परमा-र्थरूपं फलं किन्त्वनुषङ्गादपुमर्थं जनयत्येवेत्याह—छाये-

---

वस्तुपदस्य परिणाम्यर्थकत्वं श्रीविष्णुपुराणवाक्येन व्याचष्टे—यत्त्विति । अनाशी परिणामरूपनाशशून्यः । तत्त्विति । कर्म तज्जन्यं जगच्च नाशि परिणामीत्यर्थः । तादृशमनृतं सत्यप्रिय-वाक्यरहितमित्यर्थः । स्फुटार्थस्त्विति । द्वैतं मिथ्येत्यर्थस्तु न सम्भवेदित्यर्थः । अत्र बाधिकां वैष्णवोक्तिमुदाहरति—यत्कि-ञ्चिदिति । श्रीवराहदेवं प्रति पृथ्वीवाक्यम् । तस्मात् परिणामि-त्वात्तस्य प्रपञ्चस्य प्रशंसयाऽलं व्यर्थम् । एवं द्वैतस्य विकारि-

ति । असन्तोऽस्वतन्त्राः । 'सत्त्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णेन चापरैः । अस्वातन्त्र्यात्तदन्येषामसत्त्वं विद्धि भारते'ति स्मरणात् । तस्मादलं तन्निन्दयेति ॥ ४० ॥

अस्वातन्त्र्यञ्च तस्येश्वरशक्तिमयत्वादिति योजयत्यात्मेति सार्धेन । प्रभुस्तत्तच्छक्तियोगात् समर्थः, तर्हि विकारापत्तिः स्यान्नेत्याह—अन्यस्मादिति । स्रष्टृसृज्यादिभावमापन्नेऽपि तस्मिन्नविचिन्त्यस्वरूपमहिम्ना कथञ्चिदपि विकारो नेत्यन्यत्वं तस्येत्यर्थः । इदं खलु मदीयं मतम् । या त्वियं सात्त्विकादिरूपाऽध्यात्मादिरूपा वा त्रिविधा भातिरात्मनि जीवे स्वकर्ममात्रहेतुकैर्वाज्ञै-

---

त्वमापाद्य परतन्त्रत्वमाह—अस्वतन्त्रं चेति । छायेत्यादिवाक्ये छायाहीनामस्वातन्त्र्यं प्रत्यक्षसिद्धम् । तद्वाक्येऽसच्छब्दस्याऽस्वातन्त्र्यार्थकत्वं भारतवाक्येन व्याचष्टे सत्त्वमिति । तदन्येषां कृष्णभिन्नानां चिज्जडानां वस्तुमात्राणामित्यर्थः ॥ ४० ॥

अस्वातन्त्र्यञ्चेति । तस्य प्रपञ्चस्य । प्रभुरिति । तत्तच्छक्तियोगादित्यत्र य एको वर्णो बहुधा शक्तियोगादित्यादिश्रुतिरनुसन्धेया । अविचिन्त्येति । सार्वज्ञ्यसत्यसङ्कल्पशक्तिकस्य स्वरूपस्य प्रभावेणेत्यर्थः । सङ्कल्पमात्रेण स्रष्टृत्वादिति यावत् । या त्विति । अज्ञैः कर्मजडैर्निरीश्वरैः । ते हि स्वकर्मद्वारा जीवः स्वभोगायतनं चतुर्दशभुवनात्मकं जगद्रचयतीति मन्यन्ते । नात्रेति ।

निरूपिता सा तु निर्मूलैव, नाऽत्र किञ्चित् प्रमाणमस्तीत्यर्थः । ईश्वरशक्तिमयत्वं तस्य स्फुटयति—इदं गुणमयमिति । एतद्विद्वानिति । परस्तुतिनिन्दाभ्यां भक्तिप्रावण्यविक्षतिर्विस्फुटैव । तदभावाद्भक्तितेजःपरिवृद्धेश्च सूर्यवदिति । प्रत्यक्षेणेति । मदधीनोत्पत्तिभङ्गमिदं जगदसदस्वतन्त्रमिति प्रत्यक्षादिभिरवगत्य तत्रासक्तश्चरेदिति नैतादृशस्य क्वचिदपि तद्विक्षतिरित्यर्थः । एवञ्चाऽमूलमेतदित्यत्राऽप्राशस्त्ये नञ् । अकेशा वनितेतिवत् । ईशवैमुख्यं खलु मनःप्रभृतेर्मूलं तच्चाऽप्रशस्तमेव । इत्थमेव परोऽपि सन्दर्भो जीवेश्वरस्वरूपनिरूपणपरतया परेशप्रपत्तिहेतुकमोक्षपरतया च व्याख्येयः ॥ ४१ ॥

ननु मायामयमायाकृतासच्छब्दप्रयोगात् कुहकराचि-

---

प्रपञ्चस्य जीवकर्ममात्रहेतुकत्वे प्रमाणं नास्तीत्यर्थः । शक्तिमदीश्वरहेतुकं जगदिति श्रुत्यादीन्याहुः । एतदेवाहेदमिति । एवञ्चाऽमूलमित्यत्र अशब्दवाच्यो विष्णुस्तन्मूलमस्येति वनमालिवर्णिनः । इत्थमिति । एतद्व्याख्यानं तु मनोरमायां द्रष्टव्यं ग्रन्थविस्तरभयान्नाऽत्र लिखितम् ॥ ४१ ॥

अत्राशङ्कते नन्विति । कुहकमिन्द्रजालम् । कविरितीशावास्योपनिषदि । याथातथ्यतः सत्यतया । ऋतं सत्यं समीचीनं सम्यक् तथ्यं यथातथमिति हलायुधः । ब्रह्म सत्यमिति भारते । ब्रह्म

तत्वदत्वस्त्वेतज्जगदिति चेद् भ्रान्तमिदम्, तथात्वे—'कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः' इत्यादिश्रुतेः।'ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः। सत्याद् भूतानि जातानि सत्यं व्रतमयं जगत्॥ तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्। आविर्भावतिरोभावजन्मनाशविकल्पवत्'दिति स्मृतेश्चव्याकोपापत्तेः। कुहकरचितमपि न मृषा कुहकेन देशान्तरादानीय सत्यस्यैव दर्शितत्वात्। क्वचित्तदानीं तस्याद्यापि स्थितेश्च ४२॥

---

परेशः। तपस्तस्यालोचनम्। सोऽकामयत बहु स्यां प्रजायेय स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजदिति श्रुतेः। तदेतदिति श्रीवैष्णवे। पूर्वत्र—द्वे रूपे ब्रह्मणस्तस्य क्षरं चाऽक्षरमेव च। क्षराक्षरस्वरूपे ते सर्वभूतेष्ववस्थिते॥ अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत्। एकदेशस्थितस्याग्नेरित्यादिना ब्रह्मशक्तिरूपे जगति ब्रह्मविष्ण्वीशरूपाणि पठित्वाह तदेतदिति। ईश्वरजीवप्रकृत्यात्मकं जगन्नित्यमक्षयश्च। तत्रेश्वराभागरूपं नित्यमेकरसम्। जीवप्रकृतिभागरूपं त्वक्षयं निरन्वयविनाशशून्यम्। एतदेवाहाऽऽविर्भावेति। ईश्वरभाग आविर्भावतिरोभाववान्। जीवादिभागस्तु जन्मनाशविकल्पवानित्यर्थः। अवस्थोदयभङ्गावत्र जन्मनाशौ भवतः। कुहकेनेति। सत्यस्यैव फलादेर्वस्तुनः। ननु मौहूर्तिकत्वात्तस्यासत्यत्वं मन्तव्यमिति चेत्तत्राह क्वचिदिति। मरुदेशे दाडिमवाटिकायास्तेन दर्शिताया इदानीमपि विद्यमानत्वादित्यर्थः॥४२॥

सत्येश्वरशक्तिमयत्वाज्जगत् सत्यम् । ईश्वरस्य जीवप्रकृत्योश्च सत्यत्वमजामन्त्रात् परस्माद्वैष्णववाक्योच्चयाच्च व्यक्तम् । जीवप्रकृत्योरीश्वरशक्तित्वन्तु—'भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जग'दिति स्मृतेः । जगतस्तत्कार्यत्वे तु—'य एको वर्णो बहुधा शक्तियोगा'दित्यादिश्रुतेः । 'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् । सम्भवः सर्वभूतानां ततो भवति भारत ॥' 'एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जग'दिति

---

जगतः सत्यत्वमक्षयत्वमुक्तं, तच्च सत्यपरेशशक्तिमयत्वादिति प्रतिपादयति सत्येति । अजामन्त्रादजामेकां लोहितशुक्लकृष्णामित्यादिकात् । अजत्वादत्र सत्यत्वं तस्य तन्मयत्वे प्रमाणान्युदाहरति भूमिरिति । इयं श्रीगीतासु । चतुर्विंशतिधा प्रकृतिर्भूम्याद्यात्मनाऽष्टधा मे मदीया ज्ञेया । भूम्यादिषु पञ्चसु तद्धेतूनां गन्धादीनां पञ्चानां तन्मात्राणामन्तर्भावः । अहङ्कारे तत्कार्याणामिन्द्रियाणामेकादशानाम् । बुद्धिशब्देन महत्तत्वं मनःशब्देन मनोगम्यं प्रधानमिति चतुर्विंशतिधा सिद्ध्यति । इयं प्रकृतिरपरा जडत्वाद् भोग्यत्वाच्च निकृष्टेत्यर्थः । इतोऽन्यां जीवभूतां प्रकृ-

स्मृतेश्च ॥ एतेन जन्मभङ्गान्यथानुपपत्त्या जगन्मिथ्या ब्रह्मत्वसत्यत्वे तदनुपपत्तेरिति प्रत्युक्तम् । जन्मादिकं ह्यनित्यत्वव्याप्यम् । सत्यत्वं नित्यानित्यसाधारणम् । अतः सत्यमनित्यं जगत् । 'अनित्यमसुखं लोक'मिति

---

तिं परां चेतनत्वाद् भोक्तृत्वाच्चोत्कृष्टां विद्धि । मे मदीयाम् । यया प्रकृत्या स्वकर्मद्वारेदं जगत् सर्पादिवद् धार्यते भोगाय गृह्यते । ममेति च तास्वेव । ममाण्डकोटिस्रष्टुरीश्वरस्य महद् ब्रह्मयोनि-र्गर्भधारणस्थानं तस्मिन् महति ब्रह्मणि योनिभूते प्रधाने गर्भं चित्परमाणुगणमहं दधाम्यर्पयामि । स्फुटमन्यत् । क्षरमक्षरश्चेति । द्विरूपं ब्रह्म प्रतिज्ञाय अक्षरं परं ब्रह्म, क्षरन्तु ब्रह्मादिस्थाव-रान्तं जगादित्युक्त्वा तच्च ब्रह्मशक्तिमयमित्याहैकदेशेति श्रीवैष्णवे । प्रादेशिकस्याग्नेर्दीपादेर्दाहकस्यापि यथा तद्विलक्षणा ज्योत्स्ना प्रभा तत्प्रकाशशक्तिविस्तारस्तथा ब्रह्मणो वैकुण्ठनिलयस्य शक्तिवि-स्तार इदमखिलं जगत् । यत्तेनाक्षरस्य विलक्षणं क्षरं कथं रूपं स्यादिति शङ्का निरस्ता । ज्योत्स्नादृष्टान्तेन ब्रह्मादिजीवानां तारतम्यमभिमतं स्फुटयति । तत्राप्यासन्नदूरत्वाद् बहुत्वस्वल्पता यथा । ज्योत्स्नाभेदोऽस्ति तच्छक्तेस्तद्वत् मैत्रेय ? विद्यते ॥इत्यादिभिः। यथाऽन्यासन्नायाः प्रभाया बहुत्वं ततोऽतिदूराया स्वल्पत्वमेवं स्थावरान्ताया ब्रह्मशक्तेराविद्यावृत्तितारतम्याद् बाहुल्याल्पत्वमि-त्यर्थः । वक्ष्यति चैवम् -तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्तत इति । तच्छक्तिकार्येषु ब्रह्मा-दिषु विष्णुः पठितः, स तु चौरेषु मिलितो राजेव विशिष्टो बो-

मनसात्कण्ठोक्तेश्च । त्रिकालबाध्यन्तु मिथ्या, यथा ख-पुष्पादि ॥ ४३ ॥

परमार्थस्त्वमेवैको नान्योऽस्तीत्यत्र न कदाचिद-नीदृशं जगदित्येवमभिधायिभिर्नित्यस्वतन्त्रतया निश्चि-तस्य प्रपञ्चस्य निषेधः, न तु ब्रह्मात्मकस्यापि तस्य तद्ग्रहणेनैव गृहीतत्वात् । इतरथा जगत्पतित्वोक्ति-व्याकोपः । ब्रह्माधीनस्तु सत्य इति दर्शयन्ति तवेति । इतरथा महिम्नो बाधितत्वात्स्तवनविरोधापत्तिः । यदेतदिति । ज्ञानात्मकस्य तवैतज्जगत् त्वत्सम्ब-न्धि त्वच्छक्तिमयत्वादित्यर्थः । ये त्वयोगिन एवं ज्ञानयोगशून्याः । ते देवमनुष्यादिरूपं नित्यं स्वत-

---

ध्यः । एतेनेत्यादिकमगूढार्थम् ॥ ४३ ॥

अथ वैष्णववाक्यानि सङ्गमयति परमार्थ इत्यादिना । न कदाचिदिति । जगत् कदाचिदनीदृशमस्वतन्त्रमनित्यञ्च कि-न्त्वीदृशं दृष्टरूपं स्वतन्त्रं नित्यमभिधायिभिः कर्मजडैरित्यर्थः । तस्येति । ब्रह्मात्मकस्य प्रपञ्चस्य ब्रह्मग्रहणेनैवागतत्वादित्यर्थः । इतरथेति । दृष्टस्य प्रपञ्चस्य ब्रह्माधीनत्वे सति । ब्रह्मेति । ब्रह्मा-धीनो ब्रह्मशक्तिरचितः प्रपञ्चः सत्यस्तथैव श्रवणात् । इतरथा चराचरस्य जगतोऽनीश्वरत्वेन तद्व्याप्तेरभावे सतीत्यर्थः । यदेतदित्यत्र जगद्रूपं दृष्टाकारं स्वतन्त्रं नित्यमित्यर्थः । ज्ञानेत्यादौ

न्त्वमिदं तत्त्वत्सम्बन्धीति भ्रान्त्यैव पश्यन्ति । न च तेषां संसारनिवृत्तिरित्याहुर्ज्ञानस्वरूपमिति । ज्ञानं ब्रह्मैव स्वरूपं वृत्तिप्रदं यस्य तथाभूतमिदं जगत् परतन्त्रमित्यर्थः । तत्त्वार्थस्वरूपं फलरूपं स्वतन्त्रं नित्यमिति यावत् । अबुद्धयः केचित् कर्मजडा वेदवादरता इत्यर्थः । येस्त्विति । ज्ञानं शास्त्रं तद्विदः । ज्ञानं ब्रह्मैवात्मा प्रकृतिकृद्यस्य तत् । एतदेवाह त्वद्रूपमिति । वृत्तिपदं खलु स्वरूपं व्यपदिष्टं प्राणसंवादादिषु ॥ ४४ ॥

ये त्वन्यथा व्याचक्षते तेषां पूर्वापरग्रन्थविरोधश्च ।

---

स्वरूपमिति । स्वस्मिन् सृष्टिपालनाभ्यां रूपापत्ति(?)र्दर्शयतीति निरुक्तेर्वृत्तिप्रदमित्येवार्थः । अतस्त्वद्रूपमित्यग्रे । त्वत्तो रूपं यस्य तत् । अर्थस्वरूपमिति । स्त्रीपुत्रादेरन्नरसादेर्हस्त्यश्वादेश्चाऽनुभवादिह सुखानि सन्ति । उपरि सुराङ्गनासुधापानाद्यनुभवात्तानि महान्तीति फलरूपत्वं तत्तत्कारणत्वात् स्वयमकारणत्वाच्च स्वतन्त्रं नित्यं जगत् । अर्थः प्रकारे वित्तकारणवस्तुषु । अभिधेयेऽपि शब्दानां निवृत्तौ च प्रयोजने ॥ इति विश्वः । न हीदृशस्य जगतः कोऽपि कर्ता सम्भावयितुं शक्यते इति नित्यं तत् । ये त्विति । ज्ञानविदः शास्त्रज्ञाः । ज्ञानात्मकं ब्रह्महेतुकप्रवृत्तिकं प्रपश्यन्ति । एतदेव स्फुटयति त्वद्रूपमिति । अन्यथा त्वामिव नित्यं स्वतन्त्रं प्रपश्यन्तीति ब्रूयुः ॥ ४४ ॥

ये त्विति । केवलाद्वैतिनः । अन्यथा प्रतीतार्थपरतया ।

तथा हि—पूर्वत्र हि मैत्रेयपराशरयोरेवं प्रश्नोत्तरे दृष्टे । 'निर्गुणस्याऽप्रमेयस्य शुद्धस्याप्यमलात्मनः । कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यत' इति प्रश्नः । सत्त्वादिगुणयोगिषु कर्माधीनेष्वपूर्णेषूत्पादनादिकार्यं दृष्टम् । ब्रह्मणि तु तद्विलक्षणे कथं तदङ्गीकार्यमिति तस्यार्थः । तत्रोत्तरञ्च—'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः । यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥ भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णते'ति ॥ अत्रायमर्थः—सर्वेषां भावानामेवाऽचिन्त्यबुद्धिबोध्या मिथोविलक्षणाः कार्यकल्प्याः शक्तयो यस्मात् प्रतीयन्ते, अतः सर्वबृहत्तमस्य सर्वानुग्राहकस्य ब्रह्मणस्तु तास्तथाभूताः सर्गाद्या भावशक्तयो भवन्तीति न तस्य तत्कर्तृत्वविरोधः । ताश्च स्वाभाविक्य एवेत्याह-पावकस्य यथेति । 'परा शक्ति'-

---

निर्गुणस्येति । सत्त्वादिगुणशून्यस्य । अप्रमेयस्याऽपरिछेद्यस्वरूपगुणविभूतिकस्य । शुद्धस्य कर्मवश्यतागन्धरहितस्य । तद्विलक्षणे सत्त्वादिगुणयोगेन कर्मवश्यतयाऽपूर्त्या च रहिते । सर्वेषामिति । तास्तथाभूता अचिन्त्यबुद्धिबोध्या इत्यर्थः । भावशक्तय इति । स्वभावभूताः शक्तय इत्यर्थः । भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मस्वित्यादिमेदिनीकारकोशात् । तासां स्वाभाविकत्वं दृष्टान्तेन ग्राहयति पावकस्य यथेति । कैमुत्यमिति । मण्यौषधादीनां

रित्याद्या श्रुतिश्च । तुशब्दः कैमुत्यं द्योतयति । इह विचित्रशक्तिमद्-ब्रह्मेति सुव्यक्तम् ॥४५॥

एवमेव परत्रापि दृश्यते यथा—'शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते । मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥ सम्भर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः । नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ॥ ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चापि षण्णां भग इतीङ्गना ॥ वसन्ति यत्र भूतानि भूतात्मन्यखिलात्मनि । स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥ ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशे-

---

चेदचिन्त्याः शक्तयः स्वाभाविकयश्च भवन्ति, तर्हि किमुत ब्रह्मण इति ॥ ४५ ॥

परमात्मनो भगवच्छब्देन वाच्यत्वं प्रतिजानीते शुद्धे इति । षष्ठांशस्य पञ्चमेऽध्याये, तेन लक्ष्यत्वं निरस्तम् । विभूत्या विशिष्टस्य शुद्धत्वोक्तेस्तस्याश्च स्वरूपवद्विचिन्त्यत्वं तस्य च व्यस्तसमस्तभूतस्य स वाच्य इति वर्णयति सम्भर्तेति । सर्वधारणं सर्वपालनं च भकारस्यार्थः । नेता स्वध्यातॄणां स्वरूपशुद्धिप्रापकः । गमयिता विशुद्धानां तेषां स्वधामप्रापकः । स्रष्टा स्वधाम्नि तेषां विचित्रानन्दप्रकाशक इति गकारस्यार्थः । अथ समस्तयोर्भकारगकारयोरर्थमाह-ऐश्वर्यस्येति । समग्रस्येति षण्णां विशेषणम् ।

षतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥ एवमेष महाशब्दो भगवानिति सत्तम। ब्रह्मभूतस्य .... वासुदेवस्य नान्यगः॥ तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः। शब्दोऽयं नोपचारेण अन्यत्र ह्युपचारत' इति॥ ४६॥

'स सर्वभूतप्रकृतिर्विकारगुणांश्च दोषांश्च मुनेऽव्य-

---

इङ्गना संज्ञा। अथ वकारस्याह वसन्तीति। भूतात्मनि पूर्वसिद्धस्वरूपे। निखिलात्मनि शक्तिमद्रूपेण सर्वोपादाने। तथा च सर्वहेतुः सर्वान्तर्यामी सर्वेभ्यः पूर्वो हरिरिति वकारस्यार्थः। अथ वर्णत्रयस्य समस्तस्याह—ज्ञानेति। ज्ञानं सार्वज्ञ्यम्। शक्तिः सत्यसङ्कल्पेनैव विचित्रजगत्कर्तृतावलं तादृग्जगद्विधारणसामर्थ्यम्। ऐश्वर्यमखिलतन्नियामकत्वम्। वीर्यमविकारित्वं भजज्जनोद्धारसामर्थ्यं वा। तेजो मायातिरस्कारी प्रभावः। अशेषतः पूर्णानीत्यर्थः। एतानि षट् भगवच्छब्दवाच्यानि। स्वरूपाभिन्नधर्मत्वादिति भावः। विनेति। हेयैः प्रकृतिगुणैस्तत्कार्यैः कर्मभिः फलैश्च विना। एवमिति प्रकृतार्थम्। तत्रेति। पूज्यस्य पदार्थस्य विष्णोर्वाच्यतारूपा योक्तिस्तद्रूपया परिभाषया समन्वितोऽयं भगवच्छब्दस्तत्र सम्भर्तेत्याद्युक्तलक्षणे परमात्मन्युपचारेण न वर्तते। अन्यत्र महर्षिषु नृपेषु चोपचारेण प्रयुज्यते, तेषु तद्गुणलेशानां सत्त्वात्। आनियमेति। यमकारिणी हि परिभाषा॥ ४६॥

स वासुदेवः सर्वेषां भूतानां प्रकृतिश्चिदचिच्छक्तिद्वारोपा-

तीतः । अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद् भुवनान्तराले ॥ समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद् भृतभूतसर्गः । इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥ तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥ स ईश्वरो व्यष्टि-

---

दानम् । विकारगुणान् सत्त्वादीन् दोषांश्च ख्यातान् क्रौर्यादीन् व्यतीतोऽतिक्रान्तस्तैः शून्य इत्यर्थः । अतीतसर्वावरणो मायावरणरहितः । अखिलात्मा सर्वप्रवर्तकः । भुवनान्तराले यत्किञ्चिदस्ति तत्सर्वं तेनास्तृतं व्याप्तम् । तस्य विकारातिक्रमित्वादयो गुणास्तु तदभिन्ना इत्याह समस्तेति। स्वरूपानुबन्धिगुणगुण इत्यर्थः । भृतो धृतः । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति तद्वाक्यात् । निष्कामानां भक्तानां तन्मात्रविषयेच्छया गृहीतो वशीकृतस्तैः स्वरूपाभेदेनाभिमत ऊरुरुत्कृष्टो देहो विग्रहो यस्य सः । अहं भक्तपराधीनो, वशे कुर्वन्ति मां भक्त्येत्यादितद्वाक्यात् । समस्तेत्युक्तं स्फुटयति तेजोबलेति । पराणां नित्यमुक्तानामपि परः यत्र क्लेशादयः समस्ता अंशतोऽपि न सन्ति । पतञ्जलिनाप्येवमुक्तम्—'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' इति। शक्तिद्वारा व्यष्ट्यादिरूपस्तद्वृत्तिप्रदत्वादिना वा तद्रूपः। स्वविमुखानामव्यक्तरूपः, स्वसंमुखानां प्रकटस्वरूपः। सर्वेश्वर इत्यर्थकं स्फुटार्थम् । येनोक्तलक्षणं भगवत्स्वरूपं संज्ञायते मनसाऽनुभूयते । सन्दृश्यते भक्तिभावितेन चक्षु-

समष्टिरूपो व्यक्तस्वरूपः प्रकटस्वरूपः । सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ॥
संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।
सन्दृश्यते वाप्यथ गम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्त'मिति च ॥ ४७ ॥

अत्र हि प्राणिनामभ्युदयनिःश्रेयसप्रदो निरस्तसमस्तदोष ऐश्वर्यवीर्यादिविशुद्धगुणराशिश्चिदचित्पदार्थानां स्वेतरेषां वृत्तिहेतुत्वादिना तद्रूपस्तेषामुत्पत्त्यादिकारी शास्त्रीयज्ञानगोचरो भगवानिति निरूपणान्निर्विशेषचिन्मात्रं ब्रह्मेति विबुध्यते । एवमन्यच्च द्रष्टव्यम् ॥४८॥

क्षेत्रज्ञं चापि मां विद्धीति चकारः क्षेत्रं समुच्चिनोति । अपिरवधारणे । क्षेत्रं क्षेत्रज्ञं च मामेव विद्धि मद-

---

वाऽनुभूयते । अथ गम्यते निजस्वामित्वेन प्राप्यते । तच्छास्त्रेण निरूप्यमाणं ज्ञानं ततोऽन्यत्तद्विपरीततदैक्यानुसन्धिकरमज्ञानमित्यर्थः ॥ ४७ ॥

स सर्वभूतेत्यादिवाक्यानां वर्तुलितार्थमाह—अत्र हीत्यादिना । अभ्युदयेति । स्वर्गादिभोगमोक्षदातेत्यर्थः । एवमिति । अन्यच्च विष्णुपुराणदृष्टमद्वैतमत्यापकं वाक्यजातमनेन प्रकारेण व्याख्यातव्यम् । ग्रन्थगौरवभयान्नात्र लिखितमित्यर्थः ॥ ४८ ॥

अथ श्रीगीतावाक्यं स्वमतेन व्याख्याति क्षेत्रज्ञमित्यादि-

धीनवृत्तिकत्वादिना मदात्मकं जानीहीत्यर्थः । एवमेवानूक्तं 'क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं ममे' ति। तयोर्मदधीनवृत्तित्वादिविषयतया यज्ज्ञानं मम मतमित्यर्थः । एतेनैव न तदस्ति विना यत् स्यादित्यपि व्याख्यातम् ॥४९॥

ननु कैवल्योपनिषदि श्रूयते—'स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् । स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत्परितुष्टिमेति ॥ स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितविश्वलोके । सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥ पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः । पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सक-

---

ना । एवमिति । अनूक्तमनूदितम् । एतेनेति । मायाविनाभूतं चराचरं तन्नास्तीति रज्जुशक्त्या सर्पादीवमभूसत्तया चराचरमिति नार्थः । मदधीनवृत्तिकतया मद्व्याप्यतया च मदात्मकं तदित्येवार्थः । क्षेत्रज्ञं चापीत्यादिवाक्यानां व्याख्यान्तरं श्रीगीताभूषणे द्रष्टव्यम् ॥ ४९ ॥

अत्र निर्विशेषचिदद्वैती विप्रतिपद्यते नन्वित्यादिना । स परमात्मैव राजपुत्रकैवर्तन्यायेन मायया स्वाविद्यया परिमोहितात्मा सन् सत्त्वप्रधानं शरीरमास्थायेश्वरो हिरण्यगर्भो भूत्वा सर्वं जगत् करोति । स्त्रियन्नेति । स परमात्मैव स्वाविद्यया व्य-

लं विचित्रम् ॥ आधारमानन्दमखण्डबोधं यस्मिंल्लयं याति पुरत्रयं च। एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी॥ यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत्। सूक्ष्मात् सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत्॥ जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते। तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते' इति ॥ ५० ॥

---

ष्टिजीवः सन् जाग्रदवस्थः स्त्र्यादिभोगैः तुष्टिः जीवमेति। स एव स्वप्ने सुखादिभोक्ता भवति। सुषुप्तौ तु सकले इन्द्रियेऽहङ्कारे च विलीने स एव तमसाभिभूतः सन् सुखीभवति। सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति श्रुतेः। स एव जीवः प्रबुद्धः सन् जन्मान्तरकर्मयोगात् पुनः स्वपिति तत्कर्मफलानि शिबिकारोहणादीनि पुनर्लभते इत्यर्थः। यः परमात्मा एवं जीवः सन् पुरत्रये लोकत्रयेऽवस्थात्रये च क्रीडति। ततो हिरण्यगर्भादीश्वरात् सकलं चराचरलक्षणं विचित्रमिदं जातम्। यदा स्वाविद्ययायमीश्वरजीवभावमापन्नस्तदाद्यानन्दादिरूपं ब्रह्मैव सः। यस्मिन्नेव पुरत्रयं प्रलये स्वसाक्षात्कारे च लयं याति। एतस्मादिति। हिरण्यगर्भादीश्वरात्परमात्मनः। श्रुतिर्जिज्ञासुमुपदिशति यदिति। सर्वात्माऽऽत्मा सर्वेषां सैत्वज्ञानां स्वरूपं विश्वस्यायतनमिति। रज्जुसत्तया सर्पादिवद्यत्सत्तया सर्वं भासत इत्यर्थः। जाग्रदिति। यद्यतः प्रकाशते यत्सत्तया भासत इत्यर्थः॥ ५० ॥

तस्मादित्थमत्र व्याख्येयम्—परेशस्यैव सतोऽविद्ययैव क्षेत्रज्ञभावः, रज्जोरिव भुजङ्गत्वं तन्निवृत्त्यर्थमाप्तमस्य भगवतोऽयमुपदेशः—क्षेत्रज्ञं चापि मां विद्धीति। रज्जुरियं न भुजङ्ग इत्याप्तोपदेशाद् भुजङ्गभ्रान्तिरस्माद् वाक्यान्निवर्तते इति चेन्मन्दमेतत्। उपदेशासम्भवात्। तथा हि-अयमुपदेष्टा भगवांस्तत्त्वज्ञो न वा। आद्ये द्वितीयमात्मानमजानतस्तस्य नार्जुनादिभेददृष्टिरिति न तान् प्रत्युपदेशः सम्भवेत्। अन्त्येऽप्यज्ञत्वादेव नात्मज्ञानोपदेशित्वम्। नापि सर्वेश्वरस्याऽविद्यास्तीति य एव मायेति श्रुतिमाश्रित्य शक्यं गदितुं—'य सर्वज्ञः सर्ववित्पराऽस्य शक्ति'रित्यादिश्रुतेः, 'वेदाहं समतीतानी'त्यादिस्मृतेश्च ॥ ५१ ॥



तस्मादिति। अत्र क्षेत्रज्ञवाक्ये। अविद्याभ्रमात्मकेनाज्ञानेन क्षेत्रज्ञभावो जीवत्वम्। स्फुटार्थमन्यत्। तथा हीति। आद्ये तत्त्वज्ञ इति पक्षे। अन्त्ये तत्त्वज्ञो नेति पक्षे। नापीति। अविद्या विमोहिका माया, वेदाहमित्यादावादिशब्दात्। 'विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया। विमोहिता विकत्थन्ते ममाहमिति दुर्धिय' इति ब्रह्मवाक्यं ग्राह्यम्। एवञ्च बहुशास्त्रविरोधात् य एव मायापरिमोहितात्मेत्यादि चोद्यं दूरोत्सारितम्। माया खलु स्वाश्रयं न विमोहयति ॥५१॥

अथाधिगताद्वैतस्यापि भगवतो बाधितानुवृत्तिरूपेयं भेददृष्टिरतो नोपदेशानुपपत्तिरिति चेन्न, दृष्टान्तविरोधात् । मरीचिकावारिबुद्धिबाधितानुवृत्तापि न वार्य्याहरणादौ प्रवर्तयत्येवमद्वैतज्ञानबाधिता भेददृष्टिरनुवृत्तापि मिथ्या-र्थविषयत्वावधारणान्नोपदेशादौ प्रवर्तयिष्यतीति ॥ ५२ ॥

किञ्च बाधितानुवृत्तिरपि न शक्या वक्तुं बाधकेन तादृशात्मज्ञानेनात्मेतरद्वैतज्ञानहेतोरज्ञानादेर्विनष्टत्वात् । द्विचन्द्रज्ञानादौ तु चन्द्रैकत्वज्ञानेन सत्यतिमिरादिदोष-स्य द्विचन्द्रज्ञानहेतोराविनाशात् सा युक्ता । इह त्व-द्वितीयात्मज्ञानेन द्वैतस्य तज्ज्ञानस्य च विनाशात् । कथञ्चिदपि सा न सम्भवेदिति तुच्छमेतत् । तस्मात्तदा-यत्तवृत्तिकत्वादिभिरीश्वराभेदो जीवस्येहोपचर्यते । अ-

---

मरुमरीचिकादृष्टान्तेन साधितामुपदेशोपपत्तिं दूषयत्यथा-धीति । दृष्टान्तेति । विषमदृष्टान्तत्वादित्यर्थः । मृगतृष्णा मरीचि-केत्यमरः ॥ ५२ ॥

हेत्वभावाद् बाधितानुवृत्तिस्त्वन्मते न सम्भवतीत्याह—कि-ञ्चेत्यादिना । तादृशेति । केवलाद्वैतविषयकेणेत्यर्थः । एवं चेत्त-र्हि स एव मायेत्यादिवाक्यार्थः कथम्? तत्राह—तस्मादिति । जीव-स्येश्वरायत्तवृत्तिकत्वादिस्तदभेद इह गीतावाक्ये कैवल्योपनि-षद्वाक्ये चोपचर्यत इत्येवार्थः । अत एवेति । औपचारिकाद्

त एव जगज्जन्मादिकर्तृपरेशगाढसख्यावेशादस्य जीवस्य विमुक्तिरिति तत्रैवोच्यते 'यत् परं ब्रह्मे'त्यादिना ॥५३॥

यत्तु शुद्धे चैतन्येऽविद्यया कल्पितं विश्वं विद्यया बाध्यमिति तच्चैतेन निरस्तं कल्पकानिरूपणाच्च। न चास्य ब्रह्म कल्पकं, वैशिष्ट्यापत्तेः, । नापि जीवः, प्राक् तस्यैवाऽसिद्धेः। न चाविद्या, जाड्यात् ॥ ५४ ॥

किञ्च नेयं सत्या वक्तुं शक्या, अनिवृत्तिप्रसङ्गात् भेदापत्तेश्च। नाप्यसत्या, प्रतीतिविरोधात्। न च

---

भेदात् मुख्याभेदाभावादित्यर्थः। अस्य जीवस्येश्वरमायाविमोहितस्य सख्यलक्षणात्तद्भजनाद्विमुक्तिस्तत्रैवोच्यते यदित्यादिना। गाढसख्ये सति त्वमहं त्वमिति भावः स्पष्टः ॥ ५३ ॥

केवलाद्वैतिनोभिमतं स एवेत्यादिवाक्यस्यार्थं निराकर्तुमाह—यत्त्विति। आद्वितीये चैतन्ये तत्त्वाज्ञानाद्राजपुत्रधीवरन्यायेन तत्र जीवत्वादि कल्प्यते। ज्ञाते तु तत्त्वे तद् बाध्यते इत्येतच्चैतेन परमात्मनो मायामोहकृतजीवत्वनिराकरणेन निरस्तम्। न चास्येति। वैशिष्ट्यापत्तेः सधर्मकत्वप्रसङ्गात्। कल्पनात् प्रागिति। विश्वकल्पने सति खलु विश्वावयवो जीवो वाच्यः। न च तत्कल्पनात् पूर्वं सोऽस्तीत्यात्माश्रयतापत्तिः। न चाविद्येति। समनाश्चेतनः कल्पको दृष्टः शुक्तिरजतादौ। न चाऽविद्याऽचेतना ॥ ५४ ॥

अथ पराभिमताविद्यां निराकर्तुमाह-किञ्चेत्यादि। क-

सदसद्विलक्षणत्वादिष्टासिद्धिः, तादृशि प्रमाणाभावात्। न च 'न सदासी'दित्यादिश्रुतिरत्र प्रमाणं सदसच्छब्दवाच्ये चिदचिद्व्यष्टी तयोः प्रलये पृथगवस्थितिर्न स्यादचित्समष्टौ तमःशब्दवाच्यायां तदानीं विलीनत्वादित्यर्थाभिधानात्। तमःशब्दिता स्वाचित्समष्टिरिति सुबालोपनिषदि दृष्टम्। 'भूतादिर्महति विलीयते महानव्यक्ते विलीयतेऽव्यक्तमक्षरे विलीयतेऽक्षरं तमसि विलीयते तम एकाकी भवति परस्मिन् परस्मान्न सन्नासन्न सदस'दिति स्मृतिश्च। 'नाहो न रात्रिर्नः नभो न भूमिर्नासीत्तमो ज्योतिरभूच्च नान्यत्। श्रोत्रादिबुध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासी'दिति।

---

ल्पिकाऽविद्या चेत् सत्या तर्हि तस्यानिवृत्तिर्न स्याद् भेदागमश्च। असत्या चेदब्रह्माहमिति प्रतीतिर्न स्यात्। नन्वस्याः सत्यत्वासत्यत्वे विचार्ये न किन्तु कल्पकत्वमुच्यते। तच्चं चाऽनिर्वाच्यत्वात् सेत्स्यतीति चेत्तत्राह—न च सदसदिति। तादृशीति। सदसद्विलक्षणायामविद्यायामित्यर्थः। न च न सदिति। घटादिः सन् खकुसुमादिरसन् घटादिरेव देशकालव्यवस्थया। सदसच्चेति। त्रिविधा बुद्धिर्विदुषामभ्युदेति। नाऽतोऽन्या विधाऽस्ति यत्रैषा श्रुतिः प्रामाण्यमास्थीदेदिति पुराण्येनदर्शितं न विस्मर्तव्यम्। स्वमते श्रुतेरर्थमाह सदसदिति। उक्तेऽर्थे हेतुत्वेन श्रुत्यादिवाक्यमाह—भूतादिरिति। भूतादिस्तामसाहङ्कारः। ना-

अत्र प्रकृतिब्रह्मजीवाः प्रलये तिष्ठन्ति विस्फुटम् ॥५५॥

नन्वेतस्यास्तमःशब्दिताचित्समष्टेः सूक्ष्माया 'मायां तु प्रकृतिं विद्या'दिति मायाशब्देनोक्तेरनिर्वाच्यत्वम् । मैवम्, तस्य सदसद्विलक्षणार्थकत्वादर्शनात् । न च तादृशः काप्यर्थोऽस्ति यद्वाचिना तेन भाव्यम् । नापि सर्वत्र तस्य दम्भवाचकता नानार्थत्वात् । तथा हि पठन्ति 'माया दम्भे कृपायां चे'ति । 'माया स्याच्छाम्बराबुद्ध्यो'रिति ।'मायावयुनं ज्ञान'मिति च । तद्वाच्यस्य मिथ्यात्वे वेदाप्रमाण्यान्नास्तिकतापत्तिरिति वक्ष्यामः । तस्मा-

---

ऽह इति श्रीवैष्णवे । तदा प्रलयेऽहोरात्रिश्च नासीत् सूर्यादेरभावात् । तमश्च नासीद्रात्रेरभावात् । ज्योतिश्च नासीदह्नोऽभावात् । अन्यच्च नभोभूम्यादिकं नासीत् । तर्हि किमासीत्तत्राह—श्रोत्रादिबुद्ध्या शब्दादिजन्यज्ञानेनाऽनुपलभ्यं प्राधानिकं प्रधानम् । स्वार्थे ठक् । ब्रह्म परेशः पुमान् जीवश्चेति त्रयमासीदित्यर्थः ॥ ५५ ॥

ननु मायाशब्दादनिर्वाच्यत्वमविद्याया विवक्षितं सेत्स्यतीति चेन्नैवं दुराशा कार्येति भावेनाह—नन्वित्यादिना । मायाशब्देनोक्तेरिति किं स्वप्न एतदुत मायेति । अजेश्वरीकर्तृके विश्वरूपदर्शने मायाशब्देन तद्दृष्टस्याऽनिर्वाच्यत्वप्रत्ययादिति भावः । तस्येति मायाशब्दस्य । न चेति । तादृशो युष्मद्विवक्षितः सदसद्विलक्षणोऽर्थः क्वापि लोकेऽस्ति । यद्वाचिनाऽनेन मायाश-

न्मायाशब्देनाऽत्र विचित्रसर्गकरी पारमेश्वरी शक्तिरुच्यते । सा तु सत्यैव । तस्यास्तथाभूतत्वं श्रुतिर्दर्शयति-'अस्मान्मायी सृजते विश्वमेत'दिति ॥ ५६ ॥

यत्तूक्तमियं पुनर्ब्रह्मात्मैक्यविज्ञानान्निवर्तत इति, तन्मन्दम् । कीदृशं खलु ज्ञानं निवर्तकम् ? न केवलं

---

ब्देन भाव्यम् । ननु मायाशब्दस्य छद्मवाचित्वात्तदर्थस्यानिर्वाच्यत्वं सेत्स्यतीति चेत्तत्राह–नोपीति । सर्वत्र शास्त्रे । तस्य मायाशब्दस्य । नानार्थत्वात् दम्भकृपाबुद्धिज्ञानरूपार्थचतुष्टयवाचित्वादित्यर्थः । मायेति विश्वः । माया स्यादिति त्रिकाण्डशेषः । मायेति निघण्टुः । तथा च क्वचिदनृतार्थस्थले तु नाम तस्य छद्मवाचित्वं न तु मायां त्वित्यादौ तात्त्विकार्थस्थले इति भावः । ननु ब्रह्मवाचितायाश्च सत्त्वान्मायां त्वित्यादावपि तेन छद्मवाचिना भवितव्यमिति चेत्तत्राह–तद्वाच्यस्येति । वैदिकमायाशब्दवाच्यस्यार्थस्येत्यर्थः । स्वमते तदर्थमाह–तस्मादित्यादिना । विचित्रसर्गकरी आश्चर्यबुद्धिहेतुकसृष्टिकरी तद्धेतुत्वाद्रुक्मिण्यां मायामयत्वमुक्तं श्रीदशमे । तावदेव मायामिव वीरमोहिनीमिति । हरिवंशे च रत्यां तदुक्तम् । नाम्ना मायावती नाम मायेव सुरदर्शनेति । सा तु सत्यैवेति । अत्रामन्त्रादिभिस्तत्सत्यता बोध्या । तथात्वं विचित्रसर्गकारित्वम् । अस्मादिति प्रधानाद्धेतोः ॥ ५६ ॥

ब्रह्मात्मैक्यविज्ञानादविद्या विनिवर्तते न तु ब्रह्मप्रपञ्चेति यदुक्तं तन्निराकर्तुमाह यत्त्विति । ज्ञानं पृच्छति कीदृशमिति ।

चैतन्यं तस्य नित्यत्वेनाऽविद्याया नित्यनिवृत्तिप्रसङ्गात्। ततश्च तन्मूलकसंसारोपलम्भानुपपत्तेः सर्वशास्त्रानारम्भप्रसङ्गोऽनुभवविरोधश्च। नापि वृत्तिरूपं तस्य सत्यत्वे द्वैतापत्तेः। मिथ्यात्वे कथमज्ञाननिवर्तकता, सत्यस्य हि रज्ज्वादिज्ञानस्य भुजङ्गादिभ्रमोपादानाज्ञाननिवर्तकत्वमुपलब्धम्। न च निरिन्धनवन्हिवत्तस्य स्वपरबाधकारणत्वं कतकरजोवच्चेति वाच्यं, कारणतानिर्वाहिकालस-

---

केवलं निर्विशेषम्। तन्मूलकोऽविद्याहेतुकः। अनुभवेति। जीवोऽहं दैवाधीनोऽहमिति सर्वेषामनुभवः स न स्यादित्यर्थः। नापीति। वृत्तिरूपं ब्रह्माकारान्तःकरणवृत्तिजन्यमित्यर्थः। निवर्तकस्य ज्ञानस्य मिथ्यात्वं नेत्याह सत्यस्येति। रज्जुज्ञानस्य मिथ्यात्वे भुजङ्गभ्रमस्तस्यां सदैव स्यादित्यर्थः। वृत्तिज्ञानस्य मिथ्यात्वाय पूर्वपक्षे दृष्टान्तद्वयम्। न च निरिन्धनेति। वह्निर्यथा काष्ठं दग्ध्वा स्वयं विनश्यति तथा वृत्तिज्ञानं प्रपञ्चभ्रमं निवर्त्य स्वयमेव विनश्यतीत्यर्थः। एतन्निरस्यति कारणतेति। वृत्तिज्ञानं तद्भ्रमनिवृत्तेः कारणम्। तल्लक्षणं च नियतपूर्ववृत्तित्वम्। ततश्च कारणतानिर्वाहिकालस्थित्या द्वैतसिद्धिः। कालमपि प्रपञ्चान्तःपातित्वान्निवर्तयतीति चेत्कारणत्वं तस्य न निर्वहेत्। कालान्तरस्वीकारे त्वनवस्था। किञ्च निरिन्धनस्य वह्नेर्महातेजसि सत्त्वादिन्धनभस्मनश्च दृश्यमानत्वात् कतकरजसः कर्दमस्य वाधःस्थितत्वाद्विषमं दृष्टान्तयुगत्वं तत्त्वं स्यात्। ब्रह्मप्रपञ्च्या तु माया-

त्वेनाऽद्वैतहानात् ॥ ५७ ॥

एवं च स्वाप्निकस्त्रीसङ्गादेरसत्यस्य सत्यसुखादिजनकत्वदर्शनादसत्येनैव शास्त्रादिना सत्यमोक्षसिद्धिरित्यपि निरस्तं, तत्र सत्यस्यैव तत्तज्ज्ञानस्य तत्तज्जनकत्वात्। इतरथा मरीचिकाजलादिभिर्हरिणतृष्णादिनाशापत्तिः। ननु रेखारोपितवर्णोऽर्थस्य शङ्काविषं मरणस्य साधनं दृष्टमिति चेन्न, पदस्याऽर्थे इव रेखाया वर्णे सङ्केतित्वेन रेखास्मारितवर्णस्य सत्यस्यैवाऽर्थबोधकत्वात्। शङ्काविषेऽपि शङ्कानिमित्तभीजन्यधातुव्याकुलत्वस्य सत्यस्य मरणहेतुत्वात् ॥ ५८ ॥

यत्तु सत्यमित्यादिषु वाक्येषु प्रवृत्तिनिमित्तानि लक्षणां च विना शुद्धचिद्ब्रह्म प्रतीयते शब्दशक्तेरविचि-

---

निवृत्तिरुक्ता। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इति श्रीभगवता ॥ ५७ ॥

एवं चेति। मृषाभूतस्याऽर्थस्य सत्यकार्यजनकत्वे निरस्ते सतीत्यर्थः। तत्तज्ज्ञानस्य स्त्रीसङ्गशिरश्छेदाद्यनुभवस्येत्यर्थः। इतरथेति। मिथ्याभूतस्याऽर्थस्य सत्यार्थजनकत्वे सति। नन्वित्यादिकमगूढार्थम् ॥ ५८ ॥

जात्यादिस्वीकारे ब्रह्मणः सगुणता। लक्षणास्वीकारे शब्दान्तरवाच्यता स्याचतो निर्गुणत्वावाच्यत्ववाक्ययोर्व्याकोपा-

न्यत्वादतद्व्यावृत्तेर्नेति मतं तदतीव मन्दं भाष्यकारादिभिरेवमस्वीकारात् ॥ ५९ ॥

प्रमाणापत्तेश्च निर्विशेषं तन्न श्रद्धेयम् । तथा हि-न तावत्प्रत्यक्षं तत्र प्रमाणं रूपाद्यभावात् । नाप्यनुमानं तद्व्याप्यलिङ्गाभावात् । न चोपमानं तत्सादृश्याभावात् । नाऽपि शब्दः प्रवृत्तिनिमित्ताभावात् । न च

---

पत्तिरतः शब्दशक्तेरचिन्त्यतां गौरगोभिन्न इत्येवमतद्व्यावृत्तिं वा शब्दार्थमाश्रित्य निर्गुणं सत्यादिस्वरूपं ब्रह्म प्रत्येतव्यमिति केवलचिदद्वैतिनः प्राहुस्तान्निरस्यति यत्त्वित्यादिना । भाष्येति । भाष्यकारो नागराजः । स हि जातिगुणक्रियासंज्ञारूपाणि चत्वारि शब्दानां प्रवृत्तिनिमित्तानि मन्यते । एवं भरतोऽप्याचार्यः स्वीकरोति । जातौ शक्तिं मीमांसका, विशिष्टे तु नैयायिका मन्यन्ते इति सर्वोपजीव्यानामेषां पद्धतिरित्येवं स्थिते केयं नवीना व्युत्पत्तिरचिन्त्या शब्दशक्तिरिति । अतद्व्यावृत्तिं च नास्तिका ऊरीचक्रुस्तामाश्रयन्तो नास्तिकान्तःपातिनो विदिताः ॥५९॥

प्रमाणाधीना खलु प्रमेयसिद्धिः प्रमाणाभावान्निर्गुणं ब्रह्म न प्रमातुं शक्यमित्याह प्रमाणाप्रवृत्तेरिति । अर्थसन्निकृष्टं चक्षुरादीन्द्रियं प्रत्यक्षं रूपादिमद्वस्तुग्राहि । तच्च निर्विशेषे ब्रह्मणि न प्रमाणं रूपादिविरहात् । अनुमितिकरणमनुमानं पर्वतो वह्निमान् धूमादित्यादौ वह्न्यादिज्ञानमनुमितिः तत्करणं धूमादिज्ञानम् । अत्र यथा वह्निव्याप्यो धूमो वह्नेर्लिङ्गं न तथा ब्रह्मव्याप्यं लिङ्गमस्ति

तत्र लक्षणा सर्वशब्दावाच्यत्वादित्युक्तं प्राक् । न त्वर्थापत्तिः तद्विनाऽनुपपद्यमानाभावात् । न चाऽनुपलब्धिर्भावरूपत्वेन तदगोचरत्वादिति ॥ ६० ॥

अथात आदेशो नेति नेतीत्यादौ रूपगतेयत्ता प्र-

---

तस्य निर्विशेषत्वात् । यत्र धूमस्तत्राऽग्निरिति हेतुसाध्ययोः साहचर्यनियमो व्याप्तिः । अतो नाऽनुमानं तत्र प्रमाणम् । उपमितिकरणमुपमानम् । गोसदृशो गवय इति वाक्ये गवयशब्दगवयपिण्डयोः संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः । अतिदेशवाक्यस्मृतिसहकृतगोसादृश्यविशिष्टपिण्डज्ञानमुपमानं तत्करणत्वात् । अत्र यथा गवये गोसादृश्यज्ञानं तस्य ग्राहकं तथाऽन्यसादृश्यज्ञानं ब्रह्मणि ग्राहकं न शक्यं त्वया वक्तुम् । अन्यस्याऽभावादिति नोपमानं तत्र प्रमाणम् । नापि शब्द इत्यादि व्याख्यातार्थमन्यथाऽनुपपत्त्या ह्यर्थापत्तिः प्रसूयते । पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र दिवाऽभुञ्जाने रात्रिभोजनं विना पीनत्वस्याऽनुपपत्तिस्तस्य रात्रिभोजने प्रमाणं स्यादेवं ब्रह्म विना कस्याऽर्थस्यानुपपत्तिर्ब्रह्मणि प्रमाणं स्यादिति ब्रह्मान्यस्याभावान्नार्थापत्तिस्तत्र प्रमाणम् । जगदस्तीति चेदिष्टं नः समागतम् । नास्तीह घट इति घटोपलब्धेरभावे घटाभावे प्रमाणम् । ब्रह्मणो भावरूपत्वान्न तत्राऽभावः प्रमाणमिति ॥ ६० ॥

ब्रह्मणो निर्विशेषत्वे यत्त्वथात इत्यादि वाक्यमुदाहृतं तत्प्रमादादेवेति दर्शयत्यथात इत्यादिना । तत्र हेतुमाह प्रकृतेति । अस्यार्थः—हरिरिव चेतनो जीव इति स्थितम् । ननु चिदाभास

तिषिद्धा न तु रूपमात्रम्। प्रकृतैतावत्त्वं हि प्रतिषेधति 'ततो ब्रवीति च भूय' इति न्यायात्॥ ६१॥

न चाऽऽत्मशब्दात् प्रतिपत्तृस्वरूपं ब्रह्मेति वाच्यं,

---

एव जीवः स्यान्न तु हरिवच्चेतनः। बृहदारण्यके द्वे वावेत्यादिना पृथिव्यादीनि माहारजतादीनि च ब्रह्मणो रूपाणि प्रतिपाद्य पुनरथेत्यादिना तस्मादन्यस्य सर्वस्य प्रतिषेधात्। जीवस्य तद्वच्चेतनत्वे तदन्यमात्रस्य निषेधो न घटेत। तस्मात्तदन्यनिखिलविशेषणशून्यं ब्रह्मेति प्राप्ते प्रकृतेति। न खल्वेषा श्रुतिर्निर्विशेषचिदद्वितीयं ब्रह्म ब्रुवन्ती तदन्यान्निखिलं प्रतिषेधति, किन्तु तत्तद्रूपविशिष्टं तद्ब्रुवन्ती तस्य प्रकृतैस्तै रूपैरेतावत्त्वं प्रमिततां प्रतिषेधति न तु प्रकृतानि तानि रूपाणीत्यर्थः। ततः प्रतिषेधानन्तरं तस्य भूयः प्रचुरं सत्यनामादिरूपं ब्रवीति च। हि यस्मादित्यर्थः। अथेत्यस्यार्थः-अथ मूर्तामूर्तादिरूपानिरूपणानन्तरं यतोऽपरिमितरूपं ब्रह्म अतो नेति नेत्यादेः सः। इतिशब्दस्य समाप्त्यर्थत्वादिति न पूर्वोक्तं मूर्तादिलक्षणं परिमितं तस्य रूपं न, किं तु नेति सत्यनामादिकमपरिमितं रूपमन्यदस्तीत्युपदेश इत्यर्थः। विशेषस्तु भाष्ये दृश्यः॥ ६१॥

न चेति। आत्मेत्येवोपासीतेति वाक्ये प्रतिपत्तुरुपासकस्य स्वरूपमेव ब्रह्म न तु ततोऽन्यदिति नार्थः। तस्येत्यात्मशब्दस्य। अतति व्याप्नोति, अतति प्रकाशते, अत्यते गम्यते मुक्तैरिति व्युत्पत्त्या विभुचित्सुखवस्तुपरत्वम्। य एष सम्प्र-

तस्य पुरुषाकारविभुचित्सुखवस्तुपरत्वात् भेदश्रुतिभ्यश्च ॥ ६२ ॥

न च निष्फलो लोकज्ञातो वाऽयं भेदः 'पृथगात्मानं प्रेरितारं च मत्वे'त्यादौ भेद एव फलश्रवणात् । विरुद्धधर्मावच्छिन्नप्रतियोगिकस्य तस्य शास्त्रमात्रगोचरत्वात् ॥ ६३ ॥

किञ्च—'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये' ॥ इत्यत्र यानि

---

साद इत्यादौ स उत्तमः पुरुष इति श्रुतेः । पुरुषाकारत्वम् आनन्दमयस्यात्मनः पुरुषविधत्ववचनाच्च तत्त्वमित्येके ॥ ६२ ॥

द्वा सुपर्णेत्यादिभेदश्रुतिभ्यः प्रतिपत्तुः स्वरूपं ब्रह्म नेत्युक्तं, तस्य भेदस्य नैष्फल्याल्लोकज्ञातत्वाच्च न तत्र शास्त्रतात्पर्यमित्युक्तं पुरा । अथ स्वोक्तस्य तस्य भेदस्य नैष्फल्यलोकज्ञातत्वे निरस्य तत्र शास्त्रतात्पर्यं दर्शयति न चेति । फलश्रवणादिति । अमृतलक्षणस्य फलस्य श्रुत्योक्तत्वादित्यर्थः । विरुद्धैरणुत्वविभुत्वादिभिर्धर्मैरवच्छिन्नौ विशिष्टौ जीवेशरूपौ प्रतियोगिनौ यस्य भेदस्येत्यर्थः । न ह्येतादृशो भेदो लोकैर्ज्ञातः किं तु देहादिकृत एव स तैर्ज्ञायते ॥ ६३ ॥

अथ षड्भिर्लिङ्गैर्भेदे तत्तात्पर्यं दर्शयति किञ्चेति । उपक्रमेति वाक्यं बृहत्संहितायाम् । उपक्रमोपसंहारयोरैकरूप्यमित्येकं

शास्त्रतात्पर्यनिर्णेतॄणि षड्विधानि लिङ्गानि स्मर्यन्ते तानि च तत्रैव वीक्ष्यन्ते ॥ ६४ ॥

तथा हि श्वेताश्वतरोपनिषदि—'अजो ह्येको जुषमाणोऽनुशेते' इत्याद्युपक्रमः। 'जुष्टं यदा पश्यति अन्यमीशमस्य महिमानमेति वीतशोक' इत्युपसंहारः। 'द्वा सुपर्णा तयोरन्योऽनश्नन्नन्यः' इत्यभ्यासः। तादृशस्य भेदस्य वेदान्ताद्विना लोकादप्रतीतेरपूर्वता। 'वीतशोक' इति फलम्। 'अस्य महिमानमेती'त्यर्थवादः। 'अत्यनश्नन्नि'त्युपपत्तिरिति। एवमन्यानि च पृथगात्मानमित्यादीनि तस्यामेव द्रष्टव्यानि ॥ ६५ ॥

मुण्डकोपनिषदि च-'द्वा सुपर्णे'त्युपक्रमः। 'परमं साम्यमुपैती'त्युपसंहारः।'तयोरन्योऽनश्नन्योऽन्यमीश'मित्यभ्यासः। कालत्रयाबाध्यस्य भेदस्याऽन्यतोऽप्रतिपत्तेरपूर्वता।'पुण्यपापे विधूये'त्यादि फलम्।'अस्य महिमानमे-

---

लिङ्गम्। आरम्भे समाप्तौ च भेदोक्तिरित्यर्थः। अविशेषपुनः श्रुतिरभ्यासः। वेदान्तैकगम्यत्वमपूर्वता। फलं पुमर्थः। अर्थवादः प्रशंसा। युक्तिप्रदर्शनमुपपत्तिः ॥ ६४ ॥

तादृशस्येति। अणुत्वविभुत्वादिनित्यधर्महेतुकस्येत्यर्थः॥६५॥

अन्यासु चोपनिषत्स्वेतानि लिङ्गानि सन्तीत्याह मुण्डकेति।

ती'त्यर्थवादः।'अत्यनश्नन्नि'त्युपपत्तिश्च। एवमन्यासु चोपनिषत्सु तानि दृश्यन्ते ॥ ६६ ॥

यस्तु प्रपञ्चस्याऽध्यस्तत्वान्मिथ्यात्वं साधयति तस्य वेदाप्रामाण्यापत्तिः। 'यतो वा इमानी'त्यादेरग्निहोत्रपरस्य च वाक्यजातस्य तद्विषयतया प्रामाण्यात्। विषयाभावे 'एष वन्ध्यासुतो भाती'त्यादिवाक्यसाम्यात्। ततश्च नास्तिकतापत्तिः ॥ ६७ ॥

ननु वयं न खपुष्पवत्तस्य मिथ्यात्वं ब्रूमः, व्यावहारिकसत्त्वाङ्गीकारात्। तेन न वेदाप्रमाण्यं नापि नास्तिकतापत्तिरिति चेन्न, अनवधानात्। तथा हि द्विविधं खलु सत्त्वं पारमार्थिकमपारमार्थिकञ्च। तत्राऽन्त्यं द्विवि-

---

प्रकटार्थम्। अन्यतो लोकतः ॥ ६६ ॥

अथाऽध्यासवादिनां नास्तिकतापत्तिं समर्थयितुमारभते यस्त्वित्यादिना। तद्विषयतया प्रपञ्चपरतया। विषयस्य प्रपञ्चस्याऽभावे मिथ्यात्वे सति 'कूर्मलोमपटच्छन्नः शशशृङ्गधनुर्धरः। एष वन्ध्यासुतो भाति खपुष्पकृतशेखर' इति वाक्यस्य यथा व्यर्थत्वादप्रामाण्यं तथा यतो वा इत्यादेर्वेदवाक्यस्येति ॥ ६७ ॥

युक्त्याभासेन मायी पुनः प्रत्यवतिष्ठते नन्विति। तस्येति प्रपञ्चस्य। व्यावहारिकेति। अर्थात्, प्रपञ्चस्येति बोध्यम्। तेनेति। व्यावहारिकसत्त्वाङ्गीकारेण प्रपञ्चस्य सद्रूपत्वे तद्बोध-

धं व्यावहारिकं प्रातीतिकं च । तदेतत्सत्त्वत्रयं क्रमाद्ब्रह्मप्रपञ्चशुक्तिरूप्येषु वर्तते । तत्र व्यावहारिकसत्त्वस्य प्रपञ्चेऽङ्गीकारान्न तद्बोधिवेदाप्रामाण्यम् । पारमार्थिकसत्त्वाभावात्तु तस्य मिथ्यात्वमिति हि मतम् । तदेतदयुक्तं बाध्यार्थबोधकतया वेदाप्रामाण्यानुद्धारात् । बाध्यो हि प्रपञ्चः । यदुक्तम्—'तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रतः । अविद्या सह कार्येण नासादस्ति भविष्यती'ति ॥ ६८ ॥

नापि सत्त्वद्वैविध्यस्वीकृत्या बाह्येभ्यो वैलक्षण्यं तैरपि तस्याङ्गीकारात् । यदुक्तम्—'सत्त्वं तु द्विविधं प्रोक्तं सांवृतं पारमार्थिकम् । सांवृतं व्यवहार्यं स्यान्नि-

---

कस्य वेदस्यैष वन्ध्येत्यादिवाक्यवदप्रामाण्यं न, ततो नास्तिकतापत्तिर्नेत्यर्थः । द्विविधं खलु सत्त्वमिति मायिनस्तव मते इति बोध्यम् । बाध्यो हीति । भानकालेऽपि वस्तुतोऽसत्त्वादिति भावः । तत्र मुक्तावलीकारिकां प्रमाणयति तत्त्वमसीति । तद्वाक्यान्निर्विशेषचैतन्यमेकं वास्तवमित्यनुभवोदये सतीत्यर्थः । कार्येण प्रपञ्चेन सह कालत्रयेऽप्यविद्या सत्ताभून्नेत्यर्थः ॥ ६८ ॥

यच्च बौद्धान्तःपातिलाञ्छनाङ्गीतेन मायिना तल्लाञ्छननिवृत्तये सत्त्वद्वयं स्वीकृतं, तेनापि न तल्लाञ्छनान्निस्तार इत्याह नापीति । तैरपि बौद्धैः । तस्य सत्त्वद्वयस्य । सत्त्वं त्विति । प-

वृत्तौ पारमार्थिकम् ॥ इदं सत्त्वं समुपाश्रित्य बौद्धानां धर्मचोदना । लोके सांवृतसत्यत्वं सत्यं च परमार्थतः ॥ विचार्यमाणे नाऽसत्त्वं सत्त्वं चापि प्रतीयते । यस्य यत्सांवृतं सत्त्वं व्यवहारपदं च त'दिति । तस्मान्न तेभ्यस्तत्—'मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते' इत्यादिस्मरणाच्च ॥ ६९ ॥

अपि च—सत्त्वशब्दो न नानार्थः सत्त्वभेदे प्रमाणाभावात् । यदि सत्त्वशब्दस्य मिथ्यापरमार्थवाच्यतयाऽर्थभेदः स्यात्तदा सदाकारानुगतप्रत्ययानुपपत्तिः, नानार्थसैन्धवादिपदे तददर्शनात् । मृषार्थको व्यावहारिकशब्दो

---

कटार्थम् । तेभ्यस्तदिति । बाह्येभ्यो मायिनां वैलक्षण्यं नेत्यर्थः । मायावादमिति पाद्मे रुद्रवाक्यम् । 'मयैव कथितं देवि कलौ ब्राह्मणरूपिणे'ति वाक्यशेषः । नारसिंहे चैवं यमवाक्यम्—'विषधरकणभक्षशङ्करोक्तीर्दशबलपञ्चशिखाऽक्षपादवादान् । महदपि सुविचार्य लोकतन्त्रं भगवदुपास्तिमृते न सिद्धिरस्ती'त्येतत् ॥ ६९ ॥

अथ सत्त्वशब्दस्य नानार्थतां निराकरोति—अपि चेत्यादिना । सत्त्वभेदे इति । सर्वेषु सत्स्वेकमेव सत्त्वं सामान्यनामकम् । नित्यत्वे सत्यनेकसमवेतत्वं तत्त्वम् । नानार्थेति । सैन्धवो मणिमन्थेऽश्वे सिन्धुदेशोद्भवे त्रिष्विति श्रीधरः । सजाती-

लालावक्तासवादिशब्दवत् प्रतारणाय प्रयुक्त इति सत्त्वद्वयप्रामाण्येन व्यवस्था नोपपन्ना ॥ ७० ॥

स्यादेतत्। ब्रह्मसत्तैव प्रपञ्चसत्ता, तेन न वेदाप्रामाण्यं तदन्यसत्ताभावाच्च मृषात्वोक्तिर्न तु निःस्वरूपत्वात् । 'नेह नानाऽस्ति किञ्चने'ति श्रुतिरपि तदन्यसत्तानिषेधपरा । न चाऽतिप्रसङ्गः कनकमुकुटयोरिवोपादानोपादेयभावस्य नियामकत्वात् । इतरथा 'सर्वं खल्विदं ब्रह्मे'त्यत्र सामानाधिकरण्योपपत्तये तज्जलानिति तज्जत्वाद्युपपत्तिरिति । इदमप्यपेशलं क्षोदाक्षमत्वात् ॥ ७१ ॥

---

येष्वेव सनामसु सामान्यं गृह्यते न तु विजातीयेष्वपि सनामस्विति भावः । स्फुटार्थं शिष्टम् ॥ ७० ॥

निरस्तोऽपि मायी निस्त्रपः पुनः प्रत्यवतिष्ठते स्यादिति । नन्विति । निःस्वरूपत्वान्निरुपाख्यत्वादित्यर्थः । न चाऽतिप्रसङ्ग इति । ब्रह्मसत्तया चेत्प्रपञ्चः सत्तावांस्तर्हि घटसत्तया पटोऽपि सत्तावान् स्यादित्येवमतिप्रसङ्गोऽत्र न भवेदित्यर्थः । कुत इत्याह कनकेति । ययोरुपादानोपादेयभावस्तयोरेवैका सत्तेति नाऽतिप्रसङ्गः, ब्रह्मप्रपञ्चयोस्तद्भावसत्त्वात् । इतरथा तद्भावाभावे सर्वमिदं ब्रह्मेति वाक्ये ब्रह्मसर्वयोः सामानाधिकरण्यमुपपादयितुं सर्वस्य ब्रह्मजत्वादिकमुक्तमनुपपन्नं स्यादित्यर्थः । निराकरोति--इदमपीति । क्षोदश्चूर्णनं विचार इति यावत् । विचारासहत्वादित्यर्थः ॥ ७१ ॥

तथा हि ब्रह्मसत्तेति किं ते विवक्षितम् ? किं ब्रह्मनिष्ठा सत्ता, किं ब्रह्मस्वरूपा सा, उत ब्रह्माभेदः, आहोस्विद्ब्रह्मव्यतिरेकेणाऽभावः ? ॥ ७२ ॥

आद्ये सा पारमार्थिकी बाध्या वा । प्रथमेऽपसिद्धान्तापत्तिः, अधिष्ठानज्ञानाबाध्यस्य धर्मस्य ब्रह्मण्यस्वीकारात् । पारमार्थिकसत्तोपेतस्य प्रपञ्चस्य ब्रह्मवत्सत्यत्वञ्च। न च तत्सत्त्वेऽपि स्वरूपसत्ताभावादसत्यत्वं, पारमार्थिकसत्तोपेतस्य कुत्रापि तददर्शनात् । सत्तोपेतश्चेन्न मृषा । मृषा चेन्न सत्तोपेतः । सत्तासामान्यशून्याऽपि सत्ता सती दृष्टा । सत्तोपेतोऽप्यसन्नदृष्टचरः । किञ्च—समानानां भावः सामान्यं यत्सत्ताशब्देनोच्यते न च तन्मृषासत्ययोः सम्भवेत् । यदुक्तम्—'सत्यत्वं न च सामान्यं मृषार्थपरमार्थयोः । विरोधान्न च वृक्षत्वं सामान्यं सिं-

---

प्रतिवादिनं सिद्धान्ती पृच्छति ब्रह्मसत्तेति । किं ते विवक्षितमिति । चतुर्भिः पक्षैर्ब्रह्मसत्तायाः क्षोदं करोति किं ब्रह्मनिष्ठेत्यादिभिः ॥ ७२ ॥

एवं पक्षान् विरच्य क्रमात्तान् दूषयति—आद्य इति । प्रथम इति । ब्रह्मणि स्थिता सत्ता पारमार्थिकीति पक्षे इत्यर्थः । न च तादिति । प्रपञ्चे ब्रह्मसत्तायां स्थिरतायामपि स्वरूपसत्ताविरहात्तस्यासत्यत्वमित्यर्थः । तददर्शनादसत्यत्वाप्रत्ययादित्यर्थः । न

हवृक्षयो'रिति । न चेतरः, वेदाप्रामाण्यानुद्धारात् । न हि बाध्यसत्ताबोधकं प्रमाणम् । किञ्चाऽस्मिन् पक्षे ब्रह्मणोऽप्यसत्यतापत्तिः, बाध्यसत्तायोगात् । वेदान्ताप्रामाण्यं च निर्विषयत्वात् । न च सत्तामात्रेऽपि सद्रूपत्वान्न ब्रह्मणोऽसत्यतापत्तिः, तद्वत्प्रपञ्चस्यापि तदनापत्तेः । 'सदेव सौम्येद'मित्यादिना तस्यापि सद्रूपत्वश्रवणात् । यत्तु दीर्घभ्रमजनकत्वाद्वेदस्य प्रामाण्यं तन्मन्दम्, नभोनीलिमचन्द्राल्पत्वज्ञानजनकस्यापि तथात्वात् ॥ ७३ ॥

नापि ब्रह्मस्वरूपेति द्वितीयः, अबाधितसत्तायोगेन प्रपञ्चस्य मिथ्यात्वासिद्धेः । न तु तृतीयः, विरुद्धयोस्तयोरैक्यानुपपत्तेः । न च चतुर्थः, सर्वं खल्विदमित्यैका-

---

चेति । तत् सामान्यं मृषासत्ययोः प्रपञ्चब्रह्मणोः । न चेतर इति । प्रपञ्चे स्थिता ब्रह्मसत्ता बाध्येति प्रथमकल्पस्य द्वितीयः पक्षोऽपि नेत्यर्थः । निर्विषयत्वादिति । वेदान्तवेद्यस्य ब्रह्मणोऽसत्यतापत्तिरित्यर्थः । तदनापत्तेरिति । असत्यतापत्तेरभावादित्यर्थः । यत्तु दीर्घेति । अनादिकालिकजगद्भ्रमकरत्वादित्यर्थः । तथात्वाद्दीर्घभ्रमजनकत्वात् ॥ ७३ ॥

द्वितीयपक्षं दूषयति नापीति । स्फुटम् । न तु तृतीय इति । ब्रह्मसत्तैव प्रपञ्चसत्तेत्यस्य तृतीयः पक्षो ब्रह्माभिन्नः प्रपञ्च इत्यर्थको न सम्भवतीत्यर्थः । कुत इत्याह विरुद्धयोरिति ।

र्थ्यानुपपत्तेः । न हि तदभावे तदैकार्थ्यसम्भवः । न च यश्चौरः सः स्थाणुरितिवद्बाधायां तदिति वाच्यं वेदाप्रामाण्यानिस्तारादिति ॥ ७४ ॥

अपि च—मायिना दृष्टिसृष्टिः स्वीकृता । दृष्टिसमसमया सृष्टिर्न तु सृष्टिसमसमया दृष्टिरिति । सा चैषा क्षणिकविज्ञानपक्षं नातिवर्तते । तत्राऽर्थानामर्थात् क्षणिकत्वात् । न चात्राऽक्षणिकं विज्ञानमात्रमस्तीति स्वीकारात्ततो भेदः, तत्र प्रमाणाभावात् । दर्शितं चैतत्प्राक् ॥ ७५ ॥

---

चित्त्वचिज्जडत्वाभ्यां विरुद्धयोर्ब्रह्मप्रपञ्चयोरैक्यासम्भवादित्यर्थः । न च चतुर्थ इति । ब्रह्मातिरिक्तः प्रपञ्चो नास्तीति पक्षोऽपि न युक्त इत्यर्थः । ऐकार्थ्यं सामानाधिकरण्यम् । तदित्यैकार्थ्यम् ॥ ७४ ॥

प्रपञ्चमिथ्यात्ववादिनो नास्तिकत्वं प्रोक्तम् । अथ बौद्धसाङ्कर्यात्तस्य तथात्वं प्रस्फुटयति अपि चेत्यादिना । मायिना शङ्करेण । वाक्सुधाख्येन प्रकरणेन दृष्टिसृष्टिः समर्थिता । तस्याः स्वरूपमाह । दृष्टीति । यदैव दृष्टिस्तदैव सृष्टिर्दृष्ट्यभावे सृष्ट्यभाव इत्यर्थः । तत्रेति । क्षणिकविज्ञानवादे योगाचाराख्येन बुद्धशिष्येण प्रतिपादिते । न चात्रेति । अत्र चिन्मात्राद्वैतवादे शङ्कराभिमते । अक्षणिकं नित्यम् । तत्रेति । निर्गुणचिन्मात्रे । प्रागिति । प्रमाणाप्रवृत्तेश्चेत्यादिपूर्वोक्तग्रन्थे । तस्माद्योगाचारमतावलम्बी निर्गुणचिदद्वैतीति ॥ ७५ ॥

किञ्च—मायिमतं शून्यवादान्नातिरिच्यते। अविद्या-वच्छिन्नं ज्ञानं संवृत्यवच्छिन्नं च। सर्वं ज्ञानमिति शून्यमिति च भावनाप्रकर्षादविद्यायाः संवृतेश्च विनाशे सति ज्ञानमात्रं शून्यमात्रं चाऽवशिष्यते। कार्यनाशस्य कारणरूपत्वात्सैव मुक्तिः। तस्य तस्य च परसामान्यादिरूपं सत्त्वं भावप्रतियोगिकरूपमसत्त्वं अनुकूलवेद्यत्वरूपं सुखत्वं प्रतिकूलवेद्यत्वरूपं दुःखत्वं च किञ्चि-

---

अथ माध्यमिक बुद्धशिष्यमतावलम्बित्वं निर्गुणचिदद्वैतिनो दर्शयति किञ्चेत्यादिना। अविद्येति। अविद्यावच्छिन्नं ज्ञानं जगत्। सर्वं ज्ञानमिति भावनाप्रकर्षेणाविद्याया विनाशे ज्ञान-मात्रमवशिष्यते इति। निर्गुणचिदद्वैतिनो मतम्। संवृत्यवच्छिन्नं शून्यं जगत् सर्वं शून्यमिति भावनाप्रकर्षेण संवृतेर्विनाशे शून्य-मात्रमवशिष्यते इति माध्यमिकस्य मतमित्यर्थः। कार्येति। का-रणरूपत्वाद्विज्ञानमात्ररूपत्वाच्छून्यमात्ररूपत्वाच्चेत्यर्थः। क्रमो-ऽत्र बोध्यः। सैवेति। कारणरूपः कार्यनाशो मोक्ष इत्यर्थः। तस्य तस्य चेति। विज्ञानमात्रस्य शून्यमात्रस्य चेत्यर्थः। परसा-मान्येति। अनुवृत्तधीहेतुर्नित्यमेकमनेकानुगतं च सामान्यम्। तत् खलु परमपरं चेति द्विविधम्। परं सत्ता द्रव्यादिवृत्तित्वात्। अपरं द्रव्यत्वादि द्रव्यादिमात्रवृत्तित्वादिति। तथा च द्रव्यत्वा-देरिव भावरूपत्वं नास्तीत्यर्थः। भावेति। घटो यस्य प्रतियोगी स घटाभावप्रतियोगिकस्तत्त्वं नास्तीत्यभावरूपत्वं नास्तीत्य-

द्वास्तवं नास्ति । उभयं च निर्लेपमजरममरमसम्बाधं सर्वमानावेद्यं स्वयम्प्रभातम् ॥ ७६ ॥

नन्ववेद्यत्वे सत्यपरोक्षव्यवहारार्हत्वमनन्याधीनापरोक्षत्वं ब्रह्मणः स्वप्रकाशत्वं, तच्च न शून्यस्यास्तीति कथमुभयोः साम्यमिति चेत्तुच्छमेतत् । अपरोक्षं हि स्वेनैव स्वविषयकमन्यविषयकं वा । नाद्यः स्वाविषयताया मायिनाऽनङ्गीकारे वा चिद्विषयत्वरूपदृश्यत्वापरया ब्रह्मणो मिथ्यात्वापत्तिर्विषयत्वविषयित्वाभ्यां वैशिष्ट्यापत्तिश्च । नेतरः मोक्षेऽन्याभावेनान्यविषयापरोक्षसम्भवात् । तस्माच्छून्यसंवृत्योः पर्यायतयैव ज्ञानाविद्ययोः स्थितिरिति मा-

---

भावरूपत्वं च । नेति । सर्वमानावेद्यत्वमुभयस्य तुल्यम् । अन्यत् प्रकटार्थम् ॥ ७६ ॥

अथ माध्यमिकात् स्वस्य वैलक्षण्यमाख्यातुं मायी प्रवर्तते नन्वित्यादिना । न खलु नासाकर्णवत्त्वमात्रेण विप्रस्याप्यन्त्यजत्वं त्वयापि शक्यं वक्तुमिति भावः । परिहरति तुच्छमेतदिति । अपरोक्षं हि स्वेनैवेति । ब्रह्मैव स्वं साक्षात्करोति तदन्यो वा जीव इत्यर्थः । शिष्टं स्पष्टम् । ततश्च मायिमाध्यमिकयोः सर्वथा धर्मसाङ्कर्यं सिद्धमित्याह तस्माच्छून्येति । साधर्म्यान्तरमाह वेदान्तानामिति । संसर्गेति । संसर्गो गुणसम्बन्धः । स यस्यागोचरो विषयो न भवति तादृशी निर्विशेषापरिच्छिन्नैकब्रह्मविषया प्रमा तज्जनकाः सर्वे

थो माध्यमिक एव । वेदान्तानामखण्डार्थबोधकत्वं संसर्गागोचरप्रमाजनकत्वं स्वीकुर्वता मायिना सत्यं ज्ञानमनन्तमित्यत्रासज्जाड्यपरिच्छिन्नव्यावृत्तं ब्रह्मस्वरूपमेव तथेति व्याख्यातं—यथा गौरगोव्यावृत्त इत्यादिकमपोहवादिना बौद्धेन ॥ ७७ ॥

अपि च जैनसख्यं च मायिनो विलोकितम् । जैनः खलु जीवादीन् षट् पदार्थान् सत्त्वासत्त्वादिविरुद्धधर्मयोगिनो वर्णयति कथंचित्तु सदसदित्येवमादिना सप्तभङ्गिन्यायेन । मायी च विश्वं सदसद्भिन्नम्, औपनिषदमपि ब्रह्म सर्वशब्दावाच्यमित्यादि । तस्माच्छब्दान्तरेण स्वच्छद्म समावृण्वन्नयं नास्तिकविशेष एवेत्यस्य वेदाप्रामाण्यकारिणः स्पर्शाद्बिभेतव्यं वैदिकैरिति ॥ ७८ ॥

---

वेदान्ता इत्यर्थः । यथेति । गोभिन्नभिन्नत्वं गोत्वमिति बौद्धानां लक्षणम् । अतद्व्यावृत्तिरपोहः ॥ ७७ ॥

एवं मायिनो बौद्धत्वमापाद्य जैनत्वमापादयति—अपि च जैनेति । सख्यं साधर्म्यम् । स्फुटार्थो ग्रन्थः । सप्तभङ्गीन्यायोऽयं सूत्रभाष्याद् बोध्यः, विस्तरभयान्नात्र लिखितः । नास्तिकविशेष इति । केनचिद्धर्मेण + + ष्येष नास्तिक एवेति भावः । अस्य स्पर्शाद्भेतव्यमिति । यदुक्तं—हस्तिना पीड्यमानोऽपि न गच्छेज्जैनमन्दिरमिति ॥ ७८ ॥

यत्पुन'र्ज्योतींषि विष्णु'रित्यादौ ज्ञानमात्रे ब्रह्मणि व्यवहारस्याध्यस्तत्वात्तस्य तद्भेदस्य च बाध्यत्वमित्युक्तं तदसत्, अस्तिनास्तिशब्दवाच्यं चिज्जडात्मकं कृत्स्नं जगत् परस्य विष्णोः कायभूतं तदायत्तवृत्तिकत्वादिभिस्तदात्मकं व्यपदिश्यते । स तु सर्वात्मापि सर्वविलक्षणः क्षेत्रज्ञस्य जीवस्य ज्ञानरूपस्यापि देवमनुष्यादिभावप्राप्तौ तद्भोग्यजन्मपरिणतौ च स्वरूपावरककर्मैव हेतुर्विष्णूपसत्त्यैव तस्य कर्मणो विमुक्तिरित्येतस्यैवार्थस्य निरूपणात् ॥ ७९ ॥

तथा हि ज्योतींषीति । इह विष्ण्वायत्तवृत्तिकत्वादिभिश्चिदचितोस्ताद्रूप्यमभिहितं ताभ्यां विष्णोर्वैलक्षण्यमाह ज्ञानस्वरूप इति । यस्मादसौ भगवान् ज्ञानस्वरूपः

---

अथ प्रकृतान् पूर्वपक्षान्निराकर्तुमाह यत्त्वित्यादिना । स त्विति । शक्तिद्वारा वा वृत्तिदातृत्वेन वा व्यापकतया वा सर्वरूपोपि सर्वास्पृष्ट इत्यर्थः । स्वरूपावरककर्मैवेति । कर्माऽत्राऽविद्यारूपं बोध्यम् ॥ ७९ ॥

तथा हीति । स्वमतमर्थं दर्शयतीत्यर्थः । ताद्रूप्यं विष्णुरूपत्वम् । ताभ्यां चिदचिद्भ्याम् । जीवार्थं विजृम्भितानिति । जीवभोगाय विरचितानित्यर्थः । अत्र प्रमाणं बुद्धीन्द्रियेति । श्रीदशमे । जीवस्येति । अनादिकालिकी विषयस्पृहाऽस्य

श्रूयतेऽतोऽशेषमूर्तिः परिणामिप्रपञ्चाकारो न तु भवति किं तु वस्तुभूतोऽपरिणामिचिद्रूप इत्यर्थः। प्रपञ्चस्तु तस्मादेव निमित्तादुद्भूत इत्याह ततो हीति। क्लीवत्वमार्षम्। विज्ञानार्थं जीवार्थं विजृम्भितानित्यर्थः। 'बुद्धीन्द्रियमनःप्राणान् जनानामसृजत् प्रभुः। मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय चे'ति स्मरणात्। जीवस्य ज्ञानस्वरूपस्याप्यनादिभगवद्वैमुख्यकृतैः कर्मभिः संसारस्तत्सांमुख्ये तु सति विलीयते स्वरूपं च स्फुरतीत्याह यदा तु शुद्धमिति। यदैव विज्ञानस्वरूपमेवात्मवस्तु स्वस्मिन् देवादिवैविध्यानुसन्धिहेतोः सर्वस्य कर्मणः सत्तीर्थानुग्रहलब्धया ज्ञानपूर्वकोपासनया क्षये सति शुद्धं परिशोधितं सन्निजरूपि भवति, तदा देवादिदेहाभिमानिनोऽस्यात्मनः सङ्कल्पपूर्वककर्मफलभूता देवादिदेहभोग्याः शैलाब्धिधरादयो वस्तुभेदा न भवन्ति तद्धेतोः कर्मणः प्रणाशादित्यर्थः। इत्थं चाऽचिदंशस्य प्रतिक्षणपरिणामितया विनष्टप्रायत्वान्नास्तिशब्दवाच्यत्वं दर्शितम्। प्रतिक्षण-

---

भगवद्वैमुख्यं, तेन प्रकृतावासज्जति कर्माणि च करोतीति। तैरूर्ध्वमधश्च भ्रमतीत्यर्थः। सत्तीर्थेति सद्गुर्विंत्यर्थः। निजरूपीति। ज्ञानगुणकमणुचैतन्यं सत् स्फुरतीत्यर्थः। न भवन्ति तद्धो-

भवस्थाभङ्गस्तत्र निमित्तमित्याह वस्त्वस्तिकिमिति । चिदंशः खल्वादिमध्यावसानहीनः सदैकरूपस्तस्य न कदाचिन्नास्तिबुद्धियोगः । अचिदंशस्तु कदापि तथाभूतो न दृष्टः । ततः किं तत्राह यच्चेति । यदन्यथात्वं परिणामं मुहुः प्राप्नोति तत् पुनस्तथा पूर्ववन्न भवति । तत् पूर्वावस्थाशून्येऽपरावस्थाभाजि वस्तुनि तदेवेति प्रतीत्यभावात्तस्यमास्तिशब्दवाच्यत्वं कुतः स्यान्नेत्यर्थः । तथैव प्रतीयते इत्याह महीति । पिण्डादिद्वारा घटत्वं मही प्राप्नोति । घटाद्भग्नात् कपालिका । मर्दितायाश्च तस्याश्चूर्णं रजः । ततोणुरतिसूक्ष्मश्चेत्येवं जनैरवस्त्वेव स्वभोग्यभूतं स तत्परिणामि जडमेवालक्ष्यते । अत्र परिणामपरम्परायां सततैकरूपमस्तिशब्दवाच्यं वस्तु जीवेशान्यतरत् किमालक्ष्यते त्वं ब्रूहीति नैवालक्ष्यते इत्यर्थः । तत्र हेतुः स्वकर्मेति ॥ ८० ॥

यस्मादेवं तस्मादचिदंशोऽस्तिशब्दवाच्यो न भवती-

———

गाय नोदयन्ते । अचिदंशस्य प्राकृतभागस्य शैलाब्धिधरादेः । अचिदंशेनाऽस्तिशब्दस्य प्रवृत्तौ निमित्तमाह प्रतीति । तत्पुनस्तथेति । पूर्ववच्चिदंशवत् सदैकरूपो न भवतीत्यर्थः । तथैवेति । नानावस्थतया । तस्या इति । कपालिकायाः ॥८०॥

यस्मादित्यादिकं प्रकटार्थम् । विशुद्धमित्यादिकं जीवस्य

त्याह तस्मान्नेति। चिदंशस्तु परिणामाभावात् सदैकरूपो देवादिदेहविलक्षणोऽपि तदादिप्रापकेन निजकर्मभेदेन विभिन्नचित्तैर्जनैर्बहुधा देवमनुष्यादिरूपेणानुसंहित इत्याह विज्ञानमेकमिति। एतच्च भगवद्वैमुख्यहेतुकेन कर्मणैव कृतं न तु स्वरूपप्रयुक्तमित्याह ज्ञानं विशुद्धमिति। विशुद्धं कर्मरहितं विमलं प्रकृतिस्पर्शरहितं विशोकं तत्कृतदुःखरहितं लोभादिहेयगुणरहितं च। एवं मदुक्तप्रकारकं सर्वदैकरसमिति विश्वान्तर्वर्तिनः क्षेत्रज्ञस्य शुद्धं स्वरूपं निरूपितम्। यस्योपसत्त्योक्षस्तमीशं निरूपयति परम इति। परेशस्तु परमो नित्यलक्ष्मीकः वासुदेवो विशुद्धसत्त्वाविर्भावः। 'सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृत' इति स्मरणात्। यतोऽन्यन्नास्ति शक्तिमतस्तस्माज्जगदन्यच्च भवतीति जीवाद्भेदः॥ ८१॥

उपसंहरति सद्भाव इति। एवं नित्यलक्ष्मीकतया

---

नैजं रूपं बोध्यम्। जीव ईशश्चाऽस्तिशब्दवाच्यः। तत्र जीवस्तद्वाच्योऽतः। अथेश्वरं निरूपयति यस्योपसत्त्येत्यादिना। उपसत्त्योपासनया। इति जीवादिति। नित्यलक्ष्मीकत्वविशुद्धसत्त्वाविर्भावित्वरहिताज्जीवात्तद्वानीश्वरो भिन्न इत्यर्थः॥ ८१॥

सद्भाव इति। सच्छब्दस्य ब्रह्माभिधायित्वं ॐतत्सदिति

विशुद्धसत्त्वाविर्भावितया च मया सतो ब्रह्मणो भावो विभूतिः स्वभावश्च तवोक्तः । ज्ञानं चिदंशः । पूर्वस्य सर्वैदैकरूप्येणास्तिशब्दवाच्यत्वं सत्यत्वम् । उत्तरस्य प्रतिक्षणपरिणामितया विनाशगर्भत्वान्नास्तिशब्दवाच्यत्वमसत्यत्वं च तवोक्तम् । नन्वस्याचिदंशस्योक्तिः किमर्था तत्राह एतत्तु यदिति । तत्रापि विष्णुतत्त्वनिरूपणैर्यदेतदचिदंशभूतं भुवनाश्रितं शैलाब्धिधरादिगतं तत् सम्यक् परमार्थोपयोगितया व्यवहारभूतं न तु शुक्तिरजतादिवन्मृषाभूतमित्यर्थः । देवमनुष्यादिभावः कर्मणैवेति विशदयति यज्ञः पशुरिति । अचिदंशस्य संव्यवहारभूततामाह यच्चैतदिति । कर्मवश्यो जीवो नानायोनीर्व्रजतीति ज्ञात्वा विरलः सन्निह जगति तत् कुर्याद्येन वासुदेवं विशति प्राप्नोति । पुरं प्रविशतीत्यत्र पुरप्राप्तिरवगम्यते । प्रवेशहेतुश्च भक्तिरेव । 'भक्त्या मामभिजानाती'त्यादिस्मृतिभ्यः ॥ ८२ ॥

---

निर्देशो ब्रह्मणस्त्रिविधः स्मृत इति वाक्यात् । भावशब्देन विभूतिः स्वभावश्चोच्यते । भावः सत्तेत्यादिमेदिनीकरकोषात् । स्फुटमन्यत् ॥ ८२ ॥

यत्त्विह बाधायां सामानाधिकरण्यमाश्रित्य ब्रह्मैकं निर्विशेषं सत्यं ततोऽन्यत् सर्वमसत्यमिति कल्पयन्ति ।



मायिनो व्याख्यां दूषयति यत्त्विहेत्यादिना । अयमर्थः-ज्योतींषि विष्णुरिति । बाधायां सामानाधिकरण्यादेकमेव ब्रह्मतत्त्वमिति प्रतिज्ञाय ज्ञानस्वरूपो भगवानिति तस्मिन्नज्ञानेन विजृम्भितं जगदध्यारोप्य । यदा शुद्धमिति । तदेव दृढीकृत्य वस्त्वस्ति-किमित्यादिभ्यां प्रतीतिकालेपि तस्य मिथ्यात्वमापाद्य तस्मान्न विज्ञानमिति प्रतिज्ञातं तत्त्वैकत्वमुपसंहृत्य विज्ञानमेकमिति कर्मैव भेददृष्टिमूलमिति विशदीकृत्य ज्ञानं विशुद्धमिति ब्रह्मस्वरूपं संशोध्य । सद्भाव इति । ब्रह्मैव परमार्थसत्यं तदन्यत् सर्वं मृषाभूतं तस्य सत्त्वं व्यावहारिकमिति शास्त्रीयं रहस्यमत एकमेव चिन्मात्रं ब्रह्म । अज्ञाने त्वनिर्वाच्यं, तेन शैलाब्धिधरादिजगत्तत्राध्यस्तमिति प्रत्यापद्य यच्चैतदित्यनेन ब्रह्माहमित्यद्वैतभावनयोपाधिविगमे स्वात्मभूतमेव वासुदेवं ब्रह्म विशति । घटनाशे घटाकाश इव महाकाशमिति प्रतिपादयति पराशर इति । व्याचष्टे केवलाद्वैती तन्मन्दं, तत्र हेतुः पूर्वापरेति । अत्र हि भुवनकोशस्य विस्तीर्णं स्वरूपं निरूप्य तत्रानिरूपितस्यैव रूपान्तरं सङ्क्षेपान्निरूप्यते-सङ्क्षेपः श्रूयतां पुनः। यदम्बु वैष्णवः कायस्ततो विप्र वसुन्धरा । पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता ॥ ज्योतींषि विष्णुरित्यादिः । अत्र विष्णोः कायभूते ब्रह्माण्डे चिदचिद्भूतौ द्वावंशौ । तत्र चिदंशः सदैकरूप्यादस्तिशब्दवाच्यः, अचिदंशस्तु परिणामेन नाशगर्भत्वान्नास्तिशब्दवाच्यः परिभाष्यते । चिदंश-

न तच्चतुरस्रं पूर्वापरविरोधादेवं बाधाद्द्रष्टुरनिरूप्यत्वाच्च ॥ ८३ ॥

अस्मिन् शास्त्रे श्रीमान् पराशरः पूर्वमीशजीवप्रकृतिकालान्नित्यानवोचत्। तथा हि—'अविकाराय शुद्धाय नित्याय परमात्मने। सदैकरूपरूपाय विष्णवे सर्वजिष्णवे॥ प्रधानं पुरुषं चापि प्रविश्यात्मेच्छया हरिः। क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ॥ अव्यक्तं कारणं यत्तत् प्रधानमृषिसत्तमैः। प्रोच्यते प्रकृतिः सूक्ष्मा नित्यं सदसदात्मकम्॥ अनादिर्भगवान् कालोऽनन्तोऽस्य द्विज विद्य-

---

स्याऽचिदंशावेशात् संसृतिर्विष्ण्वावेशात्तु विमुक्तिरिति पूर्ववर्णितस्यैव विशेषो वर्ण्यते नान्यदिति। एवमेव मैत्रेयस्यानुक्तिश्च सङ्गच्छते। विश्वाधारं यथा चैतत्त्रैलोक्यं समवस्थितम्। परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः॥ इति। तस्मान्नास्त्यसत्यशब्दाभ्यां प्रपञ्चस्य नश्वरत्वमुक्तम्। वस्त्वस्ति किमित्यादिभ्यां तथैव प्रत्ययात्। नास्त्यादिशब्दाभ्यामुक्तिर्वैराग्यायेति तत्त्वविदः। बाधेति। कोऽसौ बाध इष्टो जीवश्चेद्दृशि कर्तृत्वानुपपत्तिः, तस्य बाध्यत्वेन तादृशि कर्मत्वात्। ब्रह्मस्वरूपं चेद्वैशिष्ट्यापत्तिः ॥८३॥

श्रीविष्णुपुराणेऽस्मिन्निर्विशेषचिदैक्यकल्पनमतीव मौढ्यादेवाचार्यहृदयविरोधादिति भावेन प्रकरणं रचयति अस्मिन्नित्यादिना। अविकारायेत्यादीनि प्रथमांशवचांसि। प्रधानमिति। पुरुषं क्षेत्रज्ञं व्ययाव्ययौ सपरिणामापरिणामावित्यर्थः। परिणाम-

ते । अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमा' इति । न चैषां भावनयैव नाशः नित्यत्वव्याकोपात् ॥ ८४ ॥

भेदश्चैषामिह समभ्यस्यते—'प्रधानपुरुषव्यक्तकालानां परमं हि यत्। पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम्॥ विष्णोः स्वरूपात् परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्र । तस्यैव तेन्येन धृते वियुक्ते रूपेण यत्तद् द्विज ! कालसंज्ञम् ॥ न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः । सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे ॥ स ब्रह्म तत्परं धाम परमात्मा स चेश्वरः । स विष्णुः सर्वमेवेदं यतो नावर्तते यतिः ॥ प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनी'त्यादिभिः ॥ ८५ ॥

एतेनैव परत्र भरतरहूगणसंवादोपि व्याख्यातः ।

---

विरहान्नित्यो जीवः । अनादिरिति। आद्यन्तविरहान्नित्यः कालः॥८४॥

प्रधानेति । परमं श्रेष्ठं तेभ्योऽत्यन्तभिन्नमित्यर्थः । विष्णोरिति । इहान्यशब्दौ भेदार्थकौ व्यक्तमुक्तौ । न सन्तीति वस्तुभूता नामजातिलीलात्र न सन्तीत्यर्थः । आत्मनो जीवात्परे भिन्ने । एषु प्रधानेत्यादिद्वयं प्रथमेंशे, न सन्तीत्यादित्रयं तु षष्ठेंशे बोध्यम् ॥ ८५ ॥

अथ द्वितीयांशस्थं भरतरहूगणसंवादं सङ्गमयति—एतेनैवेति। नास्त्यसत्यशब्दाभ्यां परिणामिनः प्रतिपादनेनेश्वरादीनां चतुर्णां नित्यत्वप्रतिपादनेन शास्त्रैस्तिमस्तेषां भेदाभ्यासेन चेत्यर्थः ।

तत्र हि ब्रह्मजीवयोरभेदोऽपरमार्थः । शुद्धब्रह्मानुभवस्तु परमार्थः स्फुटमुक्तः । यस्त्वृभुनिदाघसंवादस्तेन स्वोक्तार्थपोषायोदाहृतः सोऽपि व्याख्यातः । तत्र हि क्षुधादिशून्यं जीवस्य शुद्धं स्वरूपं तस्य व्यापीशतन्त्रत्वं तत्र तत्र निवा-

---

व्याख्यात इति । भेदपरतया परे शक्तिपरतया च नीत इत्यर्थः। एतदेवाह तत्र हीत्यादिना । परमात्मात्मनोर्योगः परमार्थ इतीष्यते। मिथ्यै तदन्यद्द्रव्यं हि नैत्यन्यद्द्रव्यतां यत इति तत्रैव भरतोक्तिः। एतदुक्तं भवति यो भवान् यन्निमित्तं वेत्यादि रहूगणेन राज्ञा पृष्टो भरतोऽहमर्थोऽप्यात्मा स्वातन्त्र्याभिमानं नार्हतीत्युपदिशति । अथ श्रेयस्तेन पृष्टो धनपुत्रादीनि परापरात्मैक्यपर्य्यन्तानि श्रेयांस्यभिधाय तेषामपारमार्थ्यमुपपाद्य शुद्धब्रह्मानुभवस्य पारमार्थ्यमाह—तस्माच्छ्रेयांस्यशेषाणि नृपैतानि न संशयः । परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम ॥ एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः । जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः॥ परज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभुः । न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यति॥तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत् । विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः॥वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः । अभेदव्यापिनो वायोस्तथा तस्य महात्मनः ॥एकत्वं रूपभेदश्च बाह्यकर्मप्रवृत्तिजः॥देवादिभेदमध्यास्ते नास्त्येवावरणो हि सः इति।एषामर्थः-एकः स्वतन्त्रः व्यापी बहिरन्तश्च व्यापकः आत्मा चित्सुखवपुः । जीवज्ञानादपि यत्परं ज्ञानं तन्मयः असद्भिर्नामादिभिर्नैत्युक्तेः सद्भिस्तैः स्वरूपसिद्धैस्त्रैकालिकयोगवानित्यर्थः ।

सगत्यागत्यादित्वं चेति व्यापकाद्वैतमेव निरूप्यते। न त्व-न्यत्। उपसंहारोप्येवमेव नेयः। विष्णौ नानात्वदृष्टेर्निषेधस्त्वत्राधिकः॥ ८६॥

एवमुत्तरत्र केशिध्वजखाण्डिक्यसंवादेप्यात्मभावादि-

---

तस्येदृशस्यात्मपरदेहेषु रवेरिव पृथक् रमतोप्येकमयमैक्यप्रधानं यद्विज्ञानमनुभूतिरसावेव परमार्थः। ये तु द्वैतिनस्तत्तद्देहोपाधिदृष्ट्या तस्यापि भेदं मन्यन्ते तेऽतथ्यदर्शिनः। बहुधावभातस्याभेदं दृष्टान्तेन साधयति वेणिरति। सर्वेषु रन्ध्रेषु निःसरतो वायोर्यथैकत्वं तथा तस्य महात्मनस्तत्त्वमित्यनुषङ्गः रूपभेदादेव। मानवादिदेहविशेषस्तु बाह्यस्य बहिर्मुखस्य जीवस्य कर्मप्रवृत्तितो जातः। स परात्मा तु देवादिभेदमन्तर्यामित्वेनाधिष्ठायास्ते तत्तदुपाधिलेपाभावावरणो निरावरण इत्यर्थः। इह स्वतन्त्रो व्यापी चित्सुखवपुरीश्वरः। जीवस्तु तद्व्याप्यः। शुद्धस्येशस्यानुभवस्तु जीवस्य परमार्थ इति निष्कर्षः॥ ८६॥

ऋभुनिदाघसंवादेपि केवलाद्वैतशङ्कां परिहरन्नाह यस्त्विवति। इत्युक्ते मौनिनं भूयश्चिन्तयानं महीपतिम्। प्रत्युवाचाथ विप्रोऽसावद्वैतान्तर्गतां कथाम्॥ ऋभुर्नामाभवत् पुत्रो ब्रह्मणः परमेष्ठिनः। तस्य शिष्यो निदाघोऽभूत् पुलस्त्यतनयः पुरा॥ प्रादादशेषं विज्ञानं स तस्मै परया मुदा। अवाप्ततत्त्वज्ञानस्य न तस्याद्वैतवासनाम्॥ स ऋभुस्तर्कयामास निदाघस्य नरेश्वरेति। जीवेश्वरयोः स्वरूपतो गुणतश्च ज्ञानमस्यास्ति किन्त्वीश्वरव्याप्यत्वादिना जीवस्येश्वरानतिरेकमसौ न वेदेत्यद्वैतवासनां न

तर्कयामासेत्यर्थः । अथ दिव्याब्दसहस्रान्ते स्वगृहागतं तमृभुं भोजयित्वा तृप्त्यादि निवासादि च निदाघः पृच्छति । अपि ते परमा तुष्टिरुत्पन्ना तुष्टिरेव वा । अपि ते मानसं स्वस्थमाहारेण कृतं द्विज ॥ क्व निवासो भगवान् विप्र क्व वा गन्तुं समुद्यतः । आगम्यते च भवता यतस्तच्च द्विजोच्यतामिति । ऋभुस्तु क्षुधादिकं प्राणानामेव न त्वात्मनो धर्मः स तु स्वतस्तृप्त इति शुद्धजीवस्वरूपनिरूपणेन तृप्त्यादिप्रश्नान्निराचष्टे । क्षुद्यस्य भुक्तेऽन्ने तृप्तिर्ब्राह्मणस्य न जायते ॥ न मे क्षुदभवत्तृप्तिं कस्माद्ब्राह्मण पृच्छसीत्यादिभिः । अथ निवासादिप्रश्नांश्च निरस्यति । क्व निवासस्तवेत्युक्तं क्व गन्तासि च यत्त्वया । कुतश्चागम्यते तत्र तृतीयेपि निबोध मे ॥ आत्मा सर्वगतो व्यापी आकाशवदयं यतः । कुतः कुत्र क्व गन्तासीत्येतदप्यर्थवत् कथम् ॥ सोऽहं न गन्ता नागन्ता नैकदेशनिकेतनः ॥ न चान्ये च न च त्वं च नान्येन्ये नाहमप्यहमिति । आत्मा चित्सुखवपुर्वासुदेवः सर्वगतो व्यापीत्यन्तर्बहिश्च व्याप्य स्थितः । आकाशवदिति । तथापि व्याप्यसंसर्गजो दोषस्तस्य न भवति । तथा च परतन्त्रस्य व्याप्यस्य मम परेशानतिरेकात् कुतः कुत्र क्व गन्तासीति मदुद्देश्यकः पृथक् प्रश्नोऽनर्थक इति । एतद्विवृणोति सोहमिति तद्व्याप्यत्वात् स एवाहं तदतिरिक्तो नाहमित्यर्थः । नन्वेकोहमेतादृशः किन्त्वन्ये च सर्वेपीत्यर्थः । ननु मम चान्येषां च तव च कर्मसु स्वातन्त्र्यतदभिमानयोः प्रतीतेः कथं प्रत्यक्षविरुद्धमुच्यते तत्राह न च त्वमिति । यस्त्वं तेषु स्वतन्त्रः प्रतीयसे स त्वं तथा न भवसि । ये चान्ये स्वतन्त्राः प्रतीयन्ते तेन्ये तथा न भवन्ति ।

प्राप्यप्रापकभावेन च द्वैतस्य स्फुटत्वात् ॥ ८७ ॥

---

यश्चाहं त्वया स्वतन्त्रः प्रतीये तादृशो नाहं, किं तु सर्वे वयमीश्वरेण व्याप्यास्ततो नार्थान्तराणि भवामः। सर्वव्यवहारगोचरः स एवैको निरूपणीय इति व्यापकाद्वैतभावनां धारयेति। अयं भावः-जीवानां गमनादीनि विद्यमानान्यपि तद्व्याप्यत्वात्तदीयान्येव यथा राजगमनाद्यधीनानि सेनागमनादीनि राजकीयानीत्युच्यन्ते तद्वत्। यद्यपि वासुदेवस्य विभुत्वाद्गमनादीनि न सम्भवेयुस्तथाप्यविचिन्त्यशक्त्या तानि भवन्तीति तदीयैस्तैर्जैवानि तान्येकीकृतानीति। एवमेवोपसंहरति-एवमेकमिदं ब्रह्मन्नभेदि सकलं जगत्। वासुदेवाभिधेयस्य स्वरूपं परमात्मन इति। स्वरूपमिति। तद्व्याप्यत्वादिनेति बोध्यम्। उपसंहारापीति। ऋभुनिदाघसंवादेन स्वोक्तं प्रपोष्य भरतो रहूगणमाह-तथा त्वमपि धर्मज्ञ तुल्यात्मरिपुबान्धवः। भवसर्वगतं जानन्नात्मानमवनीपते॥ सितनीलादिभेदेन यथैकं दृश्यते नभः। अन्तर्दृष्टिभिरात्मापि तथैकः स पृथक् पृथक्॥ एकः समस्तं यदिहास्ति किञ्चित्तदच्युतो नास्ति परं ततोऽन्यत्। सोहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहमिति। एवमर्थः-आत्मानं वासुदेवाच्युतशब्दितं परेशम्। स चात्मैक एव। तत्र सत्त्वादिगुणकार्यादेव मनुष्यादिभावप्रतीत्या भेदबुद्धिर्भ्रान्तिरेव। यथैकस्मिन्नभसि सितनीलादिमुदिरधर्मारोपणेन वैविध्यबुद्धिस्तद्वैदुषी। स तु चित्सुखवपुरित्यर्थः। एकः सोऽच्युतः समस्तं तद्व्याप्यत्वादिना सर्वं ततो नातिरिक्तमित्यर्थः। भेदमोहं स्वातन्त्र्याभिमानरूपं मौढ्यं त्यजेति व्यापकाद्वैतभावनोपादिष्टा ॥ ८७ ॥

यत्पुनरुक्तमथ योऽन्यामित्यादिभिर्भेदग्राहिणो निन्दनाद्भयशंसनाच्च न भेदे शास्त्रतात्पर्यमिति । नैतत् सुपेशलं, भेदे तत्तात्पर्यस्य प्रागुक्तेः । अथेत्यत्र हि सकामसेवकत्वात् कर्मजडो निन्द्यते न तु स्वस्मादभ्यधिकत्वेन स्वामिनो भेदं विद्वान्निष्कामतद्भक्तोऽपि तस्य

———

खाण्डिक्यकेशिध्वजप्रसङ्गेऽपि केचित् केवलाद्वैतमुद्गिरन्ति तन्निरस्यति उत्तरत्रेत्यादिना । षष्ठेंऽशे कथास्ति । आत्मभावं नयत्येनं तद्ब्रह्मध्यायिनं मुने । विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा । आत्मनः स्वस्य भावं स्वभावमात्मनि स्वस्मिन् भावं विद्यमानतां वेत्यर्थः । न त्वात्मैक्यम् । न ह्याकर्षकस्वरूपतापात्तिराकृष्यमाणस्य दृश्यते । विज्ञानं प्रापकं प्राप्यं परे ब्रह्मणि पार्थिव । प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः । क्षेत्रज्ञः करणी ज्ञानं करणं तस्य वै द्विज । निष्पाद्यं मुक्तिकार्य्यं वै कृतकृत्यो निवर्तत इत्युत्तरवाक्याच्च । परमात्मध्यानाज्जीवस्तद्वत्प्रक्षीणाशेषभावनः । ब्रह्मभावना कर्मभावनोभयभावना चेति भावनात्रयेण शून्यः प्रापणीयो भवतीति प्राप्यप्रापकभावेनात्र भेदोऽवश्यं वाच्यः । तद्भावभावमापन्नो यदाऽसौ परमात्मना । भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् । विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणोभेदमसन्तं कः करिष्यतीति । तस्य ब्रह्मणो भावः स्वभावादिर्न तु तदैक्यं द्वितीयभावशब्दासङ्गतेर्विज्ञानं प्रापकमित्याद्यनन्तरपूर्वोक्तविरोधादाकर्षकदृष्टान्तविरोधाच्च । ब्रह्मस्वभावः खलु प्रक्षीणाशेषभावनत्वरूपस्तेन ध्यातेन भावं परिशुद्धिं गत

जुष्टमित्यादिना स्तुतत्वात्। यदेवेहेति। ब्रह्मव्यूहेषु भेददर्शिनो यदा ह्येवेति। ब्रह्मनिष्ठाविच्छेदकर्तुश्च संसृतिभयमुक्तम्॥ ८८॥

एतेन त्वं वा इत्यादिकमपि व्याख्यातम्। उपासकानामित्यादौ च न निर्विशेषत्वं श्रद्धेयं, उत्तरत्राऽऽत्ममूर्तये

---

इत्यर्थः। तदायमभेदी भवति कर्मरूपाज्ञानमूलदेवादिदेहकृतविजातीयभेदशून्यो भवतीत्यर्थः। एतद्विवृणोति विभेदेति। देवादिदेहकृतविजातीयभेदजनके कर्मरूपाज्ञाने ब्रह्मस्वभावध्यानेनात्यन्तिकं नाशं गते सति हेत्वभावादसन्तं ब्रह्मणः सकाशादात्मनो जीवस्य तद्भेदं कः करिष्यति न कोपीत्यर्थः। सजातीयो भेदस्तु तदाप्यस्तीति॥ ८८॥

एवं श्रीविष्णुपुराणे शङ्कां निर्धूयाऽवशिष्टाः काश्चिच्छङ्का निर्धुनोति यदित्यादिना। अथ योन्यामित्यादिवाक्यात् पूर्वं तद्धै तत् पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चेत्यहमिति स्ववृत्तिहेतुं ब्रह्म विमृश्य तदायत्तवृत्तिकत्वादिना मन्वादिप्रधानं जगत्तदात्मकमुपादिश्य तद्बुद्धिस्थैर्याय तादृशज्ञानविधुरः कर्मजडो विनिन्द्यतेऽथेति। यो हि देवतामन्यां स्वप्रवृत्त्यहेतुं स्वाव्यापिकां कर्माङ्गमात्रतयोपकारिणीं मत्वोपास्ते न स वेद नासौ तत्त्ववित्। यथा पशुरिति। लौकिकः पशुर्यथा लोकादुपात्तजीवनस्तस्य परिषेव्य नित्यं क्लिश्यति, तथा देवोपकृतो देवभृत्य इति तस्य पुरुषार्थधिषणाविरहाः देवाः खलु तन्निषेवा-

ब्रह्मानन्दैकविग्रह इति सविशेषत्वश्रवणात् । वेदाहमित्यादावादित्यवर्णं तमसः परस्तादिति श्रुतेश्च । तस्मात् प्राकृतरूपमादाय तत्सङ्गमनीयम् ॥ ८९ ॥

यत्तु भेद आविद्यको मोक्षे तदभावादित्युच्यते तद्भ्रमसाभिधानं—'निरञ्जनः परमं साम्यमुपैती'त्यादिवाक्यै-

---

भिकाङ्क्षिणस्तज्ज्ञानं प्रतिव+तीति तत्रैव विश्रुतम् । ब्रह्म तु स्वयमनन्तानन्दपूर्णतया परिनिःस्पृहं सर्वसुहृत्त्वान्निर्हेतुकोपकारि स्वज्ञानस्वरूपयोरुपलम्भकम् । तद्भक्तश्च तद्भक्त्यैव पूर्णस्तदेवेच्छति,न तु ततः किञ्चिदन्यदिति स्तुतियोग्यत्वम् । सकामसेवकत्वादित्यत्र तत्पुरुषः कर्मधारयश्च समासः । एवं निष्कामतादित्यत्र च यदेवेहेत्यत्र ब्रह्माविर्भावेषु जीवेष्विव प्रतीतो भेदः प्रत्याख्यायते, न तु ब्रह्मजीवयोर्भेदेऽपि तस्य तात्पर्यलिङ्गैर्दर्शितत्वात् । यदा ह्येवेत्यत्रान्तरशब्देन ब्रह्मनिष्ठा या विच्युतिरुच्यते सा खल्वेतदनन्तरवाक्ये प्रतिष्ठाशब्देनोक्ता । तस्मात् सर्वात्मना राजन् भगवान् हरिरीश्वरः । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताभयमित्यत्राजस्रं तन्निष्ठताऽभयहेतुरुपदिश्यते । तद्विच्छेदे तु संसृतिभयमस्तीत्युक्तं श्रीशुकेन ॥ ८९ ॥

एतेनेति । यो यद्वृत्तिहेतुर्यद्व्यापी च ततस्तद्वर्तिनस्तद्व्याप्याश्च नान्य इति प्राणसंवादादिभिः प्रतिपादनेनेत्यर्थः । श्रीरामतापनीयं वाक्यं समादधाति उपासकानामिति । सविशेषेति । मूर्त्तत्वोक्तेरित्यर्थः । वेदाहमिति । पुरुषसूक्तेऽपि ब्रह्मणो रूपवत्त्वं प्रस्फु-

स्तत्र तस्योदाहृतत्वात् । 'कर्मक्षये याति स तत्त्वतोन्यः' 'सोऽश्नुते सर्वान् कामा'नित्यादिवाक्याच्च । तस्मात्पारमार्थिको जीवेशभेदः ॥ १० ॥

अत एव स्मरन्ति—'यथेश्वरस्य जीवस्य सत्यो भेदो विनिश्चयात् । एवमेव हि मे वाचं सत्यां कर्तुमिहार्हसि ॥ यथेश्वरश्च जीवश्च सत्यभेदौ परस्परम् । तेन सत्येन मां देवास्त्रायन्तु सह केशव' इति ॥ ११ ॥

इति सिद्धान्तरत्नाख्ये भाष्यपीठके विधान्तरेण केवलाद्वैतनिरासः षष्ठः पादः ॥ ६ ॥

---

टम् । तस्मादिति । प्राकृतं विराड्रूपमित्यर्थः । तदित्युपासकानामिति वाक्यम् ॥ १० ॥

मोक्षकालिकभेदवाक्यानि प्रागुक्तानि श्रुत्वापि चिन्मात्रैक्यवादी वा धैर्यमालम्ब्य प्रत्यवतिष्ठत इत्यवैति । मोक्षे तदिति । मोक्षकालिकभेदावेदकवाक्याभावादित्यर्थः । कर्मेति । श्वेताश्वतराणां वाक्यम् । स जीवः कर्मक्षये सति ब्रह्म याति । कीदृश इत्याह तत्त्वतोन्यस्तदापि वस्तुतो ब्रह्मभिन्न इत्यर्थः । वाचनिकं भेदस्य सत्यत्वमुदाहरति यथेति ॥ ११ ॥

इति श्रीगोविन्दभाष्यपीठकटिप्पण्यां षष्ठस्त्रिविक्रमपादो व्याख्यातः ॥ ६ ॥

# सप्तमः पादः ।

अत्राहुः—'एकमेवाद्वितीयं' 'सत्यं ज्ञानमनन्त'मित्यादिषु शक्त्यादिविशेषाप्रतीतेः सजातीयादिभेदत्रयशून्यं ज्ञानमेव परं तत्त्वमिति प्रतीयते। तस्य च तर्ह्येवैकादिपदलब्धेन भेदत्रयाभावेनानन्तत्वं सत्यत्वं चोपपद्येत यदि ज्ञानमित्येतद्भावसाधनं भवेत्। इतरथा कारकसाधने ज्ञातृज्ञेयतत्साधनैः प्रविभागे सान्तत्वमेव स्यात्। तथा कर्तृसाधने ज्ञानस्य कर्तृतया विक्रियमाणस्य करणसाधनतैव वास्यादिवज्जडतया प्रतिपन्नस्यासत्यत्वं च स्यात्। तस्माद्भावसाधनमेव तत्। तथा च

---

पूर्वपादेन मायिनः सिद्धान्तो निरस्तः। अथ तस्य कुटिलाः काश्चन युक्तीश्छेत्तुं नन्दकपादोऽयमारभ्यते। स एवमुद्गिरति। एकमित्यादिवाक्यादखण्डं ज्ञानमात्रं ब्रह्म प्रतिबुध्यते। ज्ञानमिति। भावार्थकल्युट्प्रत्ययात्। स्वरूपपरत्वादिदं वाक्यं बलवत्। यः सर्वज्ञ इत्यादिवाक्यं तु गुणपरत्वाद् दुर्लभमिति स्वरूपपरेण बलवता वाक्येन परतत्त्वं ज्ञानमात्रं ग्रहीतव्यमित्येतदनुवदत्येकमेवेत्यादिना। शक्त्यादीत्यादिपदाद् गुणलीले ग्राह्ये। सान्तत्वं सखण्डत्वम्। इतरथा कारकेति। जानातीति ज्ञायते इदमनेन वेति

संविदनुभूतिज्ञप्तिपर्य्यायं ज्ञानं नाम तत्त्वं निर्विशेषमेव। तदन्यत् सर्वं मिथ्याभूतमेव। 'नेह नानास्ति किञ्चने'-त्यादेः। ज्ञानस्वरूपो भगवान्। यतोऽसावशेषमूर्तिर्न तु वस्तुभूत इत्यादेश्चेति चेत् ॥ १ ॥

नैतत् पटुतरं, भावरूपस्यापि तस्य तत्त्वस्य गले गृहीतन्यायेन शक्तिस्तावदवश्यमङ्गीकरणीया जगदादिकार्यदर्शनान्यथानुपपत्त्या तस्या अवश्यम्भावात्। न चार्थापत्तिमात्रं तत्र मानं, 'य एको वर्णो बहुधा शक्तियोगा'दित्यादिश्रुतिस्मृतिभ्यः। नन्वस्तु शक्तिः किं तु कल्पितत्वान्मिथ्यैव सेति चेन्मैवं भ्रमितव्यम्। 'परास्य श-

---

ज्ञानमिति कर्तरि नन्द्यादित्वाल्ल्युः। कृत्यल्युटो बहुलमिति सूत्रे बहुलमिति योगविभागेन कर्मण्यपि ल्युट्। करणाधिकरणयोश्चेति करणे सः। असत्यत्वं च स्यादिति। यद्विकारि जडं तदसत्यमित्यर्थः। तदन्यत् सर्वं मिथ्येति। कल्पितत्वादिति भावः। नेह नानेत्यादिवाक्याच्चैतद्व्याख्यानं बलीति भावः ॥ १ ॥

निराकरोति नैतदिति। भावरूपस्येति। ज्ञाधातोर्भावे ल्युटि सिद्धस्य प्रकाशलक्षणस्यार्थस्येत्यर्थः। जगदादीति। दिवाऽभुञ्जानस्य यथा पीनत्वमनुपपन्नं सत् स्वोपपत्तये तस्य रात्रिभोजनं कल्पयत्येवं जगदादिकार्यं दृश्यमानं ब्रह्मणः शक्तिं विनाऽनुपपन्नं सत् स्वोपपत्तये तस्य शक्तिं कल्पयतीति दिवा ऽभु-

क्ति'रित्यादिना 'शक्तयः सर्वभावाना'मित्यादिना च तस्याः स्वाभाविकत्वोक्तेः कल्पकानिरूपणाच्च। नाप्युक्तयुक्त्या सान्तत्वं 'यच्च किञ्च जगत् सर्व'मित्यादौ बहिरन्तश्च व्याप्तिश्रुतेः। 'तिलेषु तैलं दधिनीव सर्पि'रिति सर्वकार्मिकां तां प्रत्याययितुं दृष्टान्तः। न च कर्त्रादिसाधने सति विकाराद्यापत्त्या तस्यासत्यत्वप्रसङ्गः ज्ञानरूपस्यैव तस्यातर्क्यस्वरूपशक्त्या कर्तृत्वादि भजमानस्यापि स्वरूपसामर्थ्यमप्रच्युतं चकास्तीति श्रुतिसिद्धत्वात् ॥ २ ॥

ननु ज्ञातृत्वं नाम ज्ञानक्रियाकर्तृत्वं तच्च विकाररूपं जडमसत्यमेव, अहं विज्ञातेत्यमहर्थाभेदेन प्रतीतेः। अ-

---

ज्ञानस्य रात्रिभोजनमिव जगदादिहेतोर्ब्रह्मणः शक्तिर्गले निपततीत्यर्थः। कल्पकेति। ब्रह्मणि शक्तेः कल्पको वक्तव्यः। ब्रह्म चेद्वैशिष्ट्यापत्तिः। जीवोऽथवा माया चेदात्माश्रयतापत्तिरिति। नाप्युक्तयुक्त्येति। ज्ञानस्य कर्तृकर्मकरणसाधनैः प्रविभाग इत्यनयेत्यर्थः। प्रविभागः परिच्छिन्नत्वम्। तिलेष्विति श्वेताश्वतराः। तां व्याप्तिम्। न चेति। कर्तृसाधने विकारः करणसाधने जडतेति युक्त्या सत्यत्वं मिथ्यात्वं च स्यादिति नेत्यर्थः। श्रुतिसिद्धत्वादिति। स विश्वकृद्विश्वकृदात्मयोनिर्निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनमित्याद्या श्रुतिर्विश्वकर्तुर्ब्रह्मणो निर्विकारत्वं दर्शयति हि ॥२॥

अत्र शङ्कते—ज्ञातृत्वं जडमेव, अहं जानामीति जडाहङ्काराभेदेन प्रतीतेः। अहङ्कारस्तु जड एव, महत्तत्त्वोपादानकत्वात्। अतो

हमर्थस्त्वनात्मैव स्थूलोऽहमित्यादिदेहाभेदेन प्रत्ययात् तं विनापि सुषुप्त्यादावात्मानुभवदर्शनाच्च। तस्मादहङ्काराद्देहवच्च विज्ञातृत्वमात्मनि शुद्धेऽध्यस्तमिति चेत्,मन्दमेत। ज्ञानगुणाश्रयत्वमेव ज्ञातृत्वं, ज्ञानं तु नित्यस्यास्यौत्पत्तिकधर्मत्वान्नित्यम्। श्रुतिश्च 'परास्य शक्ति'रित्याद्या 'अविनाशी वा अरे अयमात्मानुच्छित्तिधर्मे'त्याद्या च। ज्ञानरूपस्य ज्ञानाश्रयत्वं तु प्रकाशरूपस्य रवेः प्रकाशकत्ववदविरुद्धमिति भावसाधनता-



नात्मत्वं तस्यासन्देहम्। तत्त्वे युक्त्यन्तरं चाह तं विनेति। अहङ्कारं विनापि सुषुप्तावात्मानुभवः। सन्ने यदिन्द्रियगणेऽहमिव प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्न इति वचनात्। अहङ्कारस्यात्मत्वे तदा तद्विनाभावानुपपत्तिः। निगमयति तस्मादिति। निराकरोति मन्दमिति। ज्ञानेति। न खलु मनःसंयोगेनात्मा ज्ञानं जनयतीति ज्ञानंक्रियाकर्तृत्वं ज्ञातृत्वं किं तु ज्ञानगुणाश्रयत्वमेव तदिति मनस्तु तदभिव्यञ्जकमस्तु। ननु ज्ञानं जन्यं कुतो नाऽङ्गीक्रियते तत्राह ज्ञानं तु नित्यस्येति। परास्येति। परात्मनो ज्ञानं नित्यमुच्यते। अविनाशीति तु जीवात्मनः। अस्यार्थः अरे मैत्रयि अयमात्मा जीवः स्वरूपतोऽविनाशी भवति। गुणतश्च यथेत्याह अन्विति। न चानुच्छित्तिरेव धर्मोऽस्येति समासादविनाशित्वमर्थः, पुनरुक्तिप्रसङ्गात्। ज्ञानरूपस्येति। सत्ता सतीत्यादौ सत्तादीनां सत्ताद्याश्रयत्ववज्ज्ञानस्य ज्ञानाश्रयत्वं बोध्यम्। एवं चेति। वि-

पि न विरुध्यते। एवं च 'विज्ञातारमरे केन विजानीया'-दित्यादिश्रुत्यविरोधः । तस्माज्ज्ञानादिशक्तिमदेव ब्रह्म न त्वनुभूतिसंवित्पर्यायज्ञानमात्रम् ॥ ३ ॥

अनुभूतित्वं नाम वर्तमानदशायां स्वसत्तयैव स्वाश्रयं प्रकाशमानत्वन्तयैव स्वविषयसाधनं वा भवतु । तत्रोभयत्र तन्मात्रवादिनः शक्तिमत्त्वप्रसङ्गः । विषयप्रकाशनत्वेनैव तस्याः स्वयम्प्रकाशत्वं त्वया साधितम् । तत्त्वस्वभावविरहे तत्त्वासिद्धेरनुभवान्तरागोचरत्वाच्च तुच्छतैव स्यात् ॥ ४ ॥

---

ज्ञातारमीशम्। आदिशब्दाज्ज्ञानज्ञातृत्वबोधकं कर्त्ता बोद्धा विज्ञानात्मा पुरुष इति वाक्यं ग्राह्यम् ॥ ३ ॥

केवलाद्वैतिमतेनाप्यनुभूतिस्वरूपस्य ब्रह्मणः सधर्मकत्वं ग्राहयति अनुभूतित्वमिति। स्वाश्रयमनुभवितारं प्रति। तयैवेति। स्वसत्तयैव घटादिप्रकाशकत्वं नेत्यर्थः। उभयपदक्षिणद्वये तन्मात्रवादिनः केवलानुभूतिमानिनः। शक्तिमत्त्वेति। स्वसत्तया स्वाश्रयं प्रति प्रकाशमानता स्वविषयप्रकाशता वा तत्र शक्तिरागतेत्यर्थः। न चेदं त्वया शक्यमपलपितुमित्याह विषयेति। तस्या अनुभूतेः। त्वया केवलानुभूतिवादिना। तत्त्वेति। अनुभूतेर्विषयप्रकाशकत्वस्वभावविरहे सति स्वप्रकाशकत्वासिद्धेरित्यर्थः। तुच्छतैव जडता खपुष्पतुल्यता च स्यादित्यर्थः ॥ ४ ॥

ननु बोधस्वरूपायास्तस्या न कोपि बोध्यो धर्म इति चेत्। न, त्वयैव नित्यत्वस्वयम्प्रकाशत्वादिधर्माणां प्रमाणसिद्धानां स्वीकृतत्वात्। न च तेषामनित्यत्वजडत्वाद्यभावतात्पर्य्यादिष्टसिद्धिः, तथाभूतैरपि चैतन्यधर्मैरिष्टव्याघातात्। तस्यां स्वरूपातिरेकेण नानित्यत्वादिप्रत्यनीकत्वमित्यभावरूपस्य धर्मस्यानङ्गीकारे तत्तन्निषेधोक्त्या किमपि नोक्तं स्यात् ॥ ५ ॥

किञ्च सा सिद्ध्यति न वा । आद्ये सधर्मकता तस्याः प्राप्ता। अन्त्ये खपुष्पादिवत्तुच्छतापत्तिः। सिद्धि-

---

नन्विति। तस्याः स्वाश्रयं प्रति प्रकाशमानत्वविषयप्रकाशत्वं कश्चिद् बोध्यो धर्मो नास्ति, निर्धर्मिका सेत्यर्थः। प्रमाणसिद्धानामिति। नित्यो नित्यानां सत्यं ज्ञानमनन्तमित्यादीनि प्रमाणानि प्रोच्य साधितानामित्यर्थः। न च तेषामिति। अतद्व्यावृत्तिः शब्दार्थ इति मतेन नित्यत्वादिधर्माणामनित्यत्वाद्यभावरूपत्वादनुभूतिमात्रमिष्टं सिद्धमित्यर्थः। तथाभूतैरभावात्मकैः। तस्यामिति। अनित्यत्वादिनिषेधैश्चेदनित्यत्वाद्यभावो नानीयते तर्हि तदुक्तिर्व्यर्थेत्यर्थः ॥ ५ ॥

अथानुभूतेर्विधान्तरेण सधर्मकत्वं साधयति किं चेति। तद्वादिनं पृच्छति सेति। साऽनुभूतिः। सिद्ध्यति सिद्धिं विन्दतीत्यर्थः। आद्य सधर्मकतेति। सिद्धिसत्त्वादिति भावः। अन्त्ये खपुष्पेति। स्वरूपाभावादेवेति भावः। तद्वादी पुनः प्रत्यवतिष्ठते

रेव सेति चेत् कस्य कं प्रतीति वाच्यम्। यदि कस्यचित् कश्चित्प्रति सा तर्हि न सिद्धिः। सिद्धिर्हि पुत्रत्वमिव कस्यचित् कञ्चित्प्रति भवति। अनुभूतेरिति चेत्, तर्ह्यनुभूतिसिद्ध्योर्भेदावगतेः सा तस्याः शक्तिरेवेत्यवसीयते, न तु स्वरूपमात्रम्। तदेवमागतं ज्ञानमात्रस्वरूपेऽपि स्वाभाविकज्ञातृत्वनित्यत्वादिधर्मकत्वात्॥ ६॥

यत्तु स्थूलोहमिति देहाभेदेन प्रतीतेः सुषुप्तौ तद्विरहितात्मप्रतिपादनाच्च देहवदहमर्थस्यानात्मकत्वमुक्तं तन्न, तस्यैव शुद्धात्मत्वात्। तथा हि न तावदहमर्थोऽसौ युष्मत्प्रत्ययगोचरो जडो भवितुमर्हति अस्मत्प्रत्ययगो-

---

सिद्धिरेवेति। सानुभूतिः सिद्धिरेव स्वयं, न तु त्वयापि सिद्धेः सिद्धिः शक्या वक्तुमनवस्थाप्रसङ्गादिति भावः। तं प्रति पृच्छति कस्य कं प्रतीति। सानुभूतिः कस्य वस्तुनः सिद्धिः कं कामुकं प्रति सिद्धिरिति त्वया वक्तव्यमित्यर्थः। तद्वादिना वक्तव्यं स्वयं प्रकटयंस्तस्याः सिद्धित्वं निराकरोति यदि नेत्यादिना। न खल्वनुभूतिः कस्यचिद्वस्तुनः सिद्धिर्न वा कञ्चित् कामुकं प्रति सा सिद्धिरित्यर्थः॥ ६॥

पूर्वोक्तां शङ्कामपाकरोति यत्त्विति। तद्विरहितेति। अहङ्कारशून्यात्मनिर्णयादित्यर्थः। तथैवेत्यहमर्थस्य। न तावदिति। आत्माऽस्मदर्थः, अनात्मा युष्मदर्थ इति केवलाद्वैतिनां परिभाषा बोध्या।

चरत्वात् स्वस्मै प्रकाशमानत्वाच्च। यः खलु स्वस्मै प्रकाशते स त्वहमित्येव प्रकाशते। यस्त्वहमिति न प्रकाशते नासौ स्वस्मै प्रकाशते यथा घटादिः। तस्मात् स्वं प्रति स्वसत्तयैव सिद्ध्यन्न जडोऽहमर्थ एवात्मा। यो ह्यहं जानामीति प्रतीतिसिद्धं ज्ञातारं युष्मदर्थं ब्रूयात्तस्य तु प्रसूर्मे वन्ध्येति व्याहतार्थो व्याहारः। अस्यैवाहमर्थस्य ज्ञातुः केवलं ज्ञानं सुखं चावभासते। अहं जानाम्यहं सुखीति ज्ञानस्वरूपस्यापि तस्य ज्ञातृत्वं प्रकाशवस्तुनः सूर्यादेः प्रकाशकत्ववदविरुद्धमित्यभ्यधायि प्राक् ॥ ७॥

ननु ज्ञानमात्र आत्मन्यहमर्थोऽध्यस्त इति चेन्न, अध्यासकाभावात्। अनहङ्कारस्य ज्ञानमात्रस्य जडस्य

---

अहमर्थस्यात्मत्वादेव स्वप्रकाशत्वमिति विशदयति यः खल्वित्यादिना। अहमर्थजडत्ववादिनमुपहसति यो हीति। युष्मदर्थमनात्मानम्। प्रसूर्जननी। यद्यहमर्थो घटवदनात्मा स्यात्तर्हि ज्ञानित्वं सुखित्वं च तस्य न स्यादित्याह अस्यैवेति। ननु सत्यं ज्ञानमनन्तं विज्ञानं यज्ञं तनुत इत्यादौ ज्ञानस्वरूपत्वेन श्रुतस्यात्मनो ज्ञातृत्वं कथा युक्त्येति चेत् सत्तासतीत्यादि। दृष्टविशेषबलेनेति भावेनाह ज्ञानस्वरूपस्येति ॥ ७ ॥

अथ निरस्तोऽपि तद्वादी विधान्तरैः प्रतिप्रवृत्तो निरस्यते नन्वित्यादिना। अध्यासे तदाधारः शुक्तिकादिरध्यासकश्च सान्तः

चाहङ्कारस्य तत्कर्तृत्वं न सम्भवति। न च तस्मिन्नहमर्थे ज्ञानच्छायापत्तिः द्वयोर्नैरूप्यात् । न चाऽयःपिण्डे वन्हि-सम्पर्ककृतौष्ण्यवज्ज्ञानमात्रसम्पर्ककृतं ज्ञातृत्वं तस्मिन्नह-मर्थेमन्तव्यमौष्ण्यवत्तद्धर्म्मसम्प्रतिपत्तेः। नन्वसावहङ्कारः स्वानुस्यूतं तज्ज्ञानमभिव्यञ्जयन् ज्ञातृत्वं प्राप्नोतीति चेत। मैवं,अहङ्कारादिधर्मिणस्तस्य धर्मत्वानुपपत्तेः। स्वयं ज्योतिषो ज्ञानस्य जडात्मकाहङ्कारव्यङ्ग्यत्वायोगात् । यदुक्तम्-'शान्ताङ्गार इवादित्यमहङ्कारो जडात्मकः। स्वयं

---

करणश्चेतनो ज्ञायते । तत्रानुभूता बाधारेकोऽहङ्कारमध्यस्यति । राजपुत्रधीवरन्यायेनानुभूतिरेवाध्यस्यतीति चेन्न राजपुत्रवत्तस्या अहङ्काराभावात्। अहङ्कार इति चेन्न तस्य घटादिवज्जडरूपत्वात्। ननु जडेऽप्यहङ्कारेनुभूतेश्छायया तप्तायोन्यायेन सचेतनत्वापत्तौ स्वाध्यासकत्वं नानुपपन्नमिति चेन्मनोमोदकभक्षणमेतदिति भावेनाह न च तस्मिन्निति। स्फुटार्थम्। न चेति। ननु मास्त्वनुभूतेरहमर्थेच्छाया तस्याः सम्बन्धस्तु तस्मिन्नवर्जनीय एव । ततश्च तत्सम्बन्धेनैव तस्मिन् सचेतनत्वं स्यादिति चेन्न, कुत इत्याह औष्ण्यवदिति । औष्ण्यं यथा वह्नेः स्वाभाविको धर्म एवं ज्ञातृत्वमनुभूतेरिति तवानभिमतत्वादित्यर्थः। नन्वसाविति। ननु ज्ञातृत्वमनुभूतेर्धर्मो नेति सत्यं, किन्त्वेवमस्तु-अहङ्कारः स्वान्तर्गतामनुभूतिमभिव्यञ्जयन् ज्ञातृत्वं लभतामिति। मैवमेतत्, अनुभूतिः खलु स्वेतरेषां सर्वेषामधिष्ठानं धर्मिणी, तामहङ्कारस्य धर्मं वदन्नप-

ज्योतिषमात्मानं न व्यनक्तीति युक्तिम'दिति। तदायत्तप्रकाशेनाहङ्कारेण तस्य प्रकाश्यत्वासम्भवः ॥ ८ ॥

ननु मिहिरकिरणगणस्य स्वाभिव्यङ्ग्यपाणितलाभिव्यङ्ग्यत्ववत् ज्ञानाभिव्यङ्ग्याहङ्कारव्यङ्ग्यत्वं ज्ञानस्य भवेदिति चेत्। न तस्य पाणितलाभिव्यङ्ग्यत्वाभावात्। पाणितलप्रतिहतगतिरसौ बाहुल्यात् स्वयमेव स्फुटतरमुपलभ्यते इति तद्बाहुल्यमात्रहेतुत्वात् पाणितलस्य

---

सिद्धान्ती भवसीति भावः। उपसर्जनत्वं हि धर्मत्वं सर्वाभ्युपगतम्। अपि च न खलसूच्यत्वमभिव्यङ्ग्यत्वं किं तु प्रकाश्यत्वमेव। तयानुभूतिर्न संभवेदित्याह स्वयमिति। शान्तेति। शान्ताङ्गारो यथादित्यं न प्रकाशयत्येवं जडात्मकोऽहङ्कारः स्वयंज्योतिषमात्मानं केवलानुभूतिलक्षणं न प्रकाशयतीति युक्तमिदमित्यर्थः। तदायत्तेति। अहङ्कारो ह्यनुभूत्यधीनप्रकाशः। अनुभूतिस्तु स्वप्रकाशा। घटसूर्याविह दृष्टान्तौ ॥ ८ ॥

लज्जितस्तद्वादी स्थूलेन युक्त्याभासेन प्रतिप्रवर्तते नन्वित्यादिना। यथा सूर्यांशवः स्वप्रकाश्येन करतलेन प्रकाश्या वीक्ष्यन्ते तथानुभूत्या प्रकाश्येनाहङ्कारेण तदन्तर्गता सा प्रकाश्या भवेदित्यर्थः। भवं कुत इत्याह तस्येति। मिहिरकिरणगणस्येत्यर्थः। पार्थिवप्रधानं हि पाणितलं तैजसप्रधानस्तद्गुणः कथमेतस्य तेन प्रकाश्यता शक्या वक्तुमिति भावः। तर्हि प्रतीतिः कथमिति चेद्भ्रान्त्येत्याह पाणितलेति। असौ तद्गुणः। निगमयति तस्मादिति।

न तद्व्यञ्जकभावः। तस्मात् स्वत एव ज्ञातृतया सिद्ध्य-न्नहमर्थ एव प्रत्यगात्मा न तु ज्ञानमात्रं 'सुखमहमस्वाप्सं न किञ्चिदवेदिष'मिति सुप्तोत्थितस्य परामर्शात्। तत्रा-प्यसमर्थता सुखिता ज्ञातृता चावगम्यते। तदा तमोगुणा-भिभवात् स्फुटतरा नावगतिः। इत्थं च देहवदहमर्थस्या-नात्मत्वं परिहृतम्। न हि सुप्तो देहस्तद्विरहितो वेह प्रती-यते ॥ ९ ॥

एष चाहम्भावो न संसृतिहेतुः शुद्धस्वरूपानुबन्धि-त्वात्, किन्तु तादृशतयाऽवगतिस्ततो मोचयत्येव तद्विरो-

---

उक्तादर्थप्रपञ्चाद्धेतोः। सुखमिति। सुखं यथा स्यात्तथाऽहमस्वाप्समिति सुखित्वमहमर्थत्वं च स्फुटम्। न किञ्चिदवेदिषमिति। तदुभयेतरस्य प्राकृताहङ्कारतत्कार्यश्रोत्रादिकस्य तदा विलीनत्वात्तदज्ञानं च साक्षादकार्षमिति सुखित्वादित्रिकानुभवाद्विज्ञातृत्वं च विस्फुटम्। तत्रापि सुषुप्ते जीवे। ननु सुषुप्तौ चिदेवात्मा जागरे त्वन्तःकरणेन सम्बन्धात् सुखित्वादिप्रतीतिरिति चेत्तत्राह तदेति। तमोगुणेन निद्रयाभिभवादावरणादित्यर्थः। अनुभूतमेव स्मरति नाऽननुभूतम्, अनुभवस्मरणयोरेकाधिकरणनियमात्। न हीति। सुप्तो जीवो न देहो न चाहन्ताशून्यस्तदा प्रतीयतेऽपि तु देहाद्भिन्नोऽहमर्थश्चेति गदितं सुष्ठु ॥ ९ ॥

एवमात्मनोऽहमर्थत्वमापाद्य तस्याहमर्थत्वस्य संसारहेतुत्वं निराकुर्वन्मुक्तिहेतुत्वं दर्शयति एष चेति। जीवोऽहमणुपरि-

धित्वात्। यद्ययमुपाधिरेव स्यात्तदा मुक्तौ विनश्येयमिति विजानंस्तत्कथाप्रसङ्गादपि जनोऽपगच्छेत्। निवृत्ताखिल-क्लेशोऽक्षयसुखभाक् तेजस्वी भवेयमित्येवं मोक्षकाङ्क्षिणः श्रवणादौ प्रवृत्तिः। सापि न स्यात्, अहमर्थस्यात्मनो मोक्षे विनाशभयप्राप्तेः। न च नष्टेपि मयि किञ्चिज्ज्ञान-मनुवर्तिष्यते स एवात्मेति वाच्यं, एवं प्रवृत्त्यदर्शनात् तत्र प्रमाणाभावाच्च। किं तत्र प्रमाणं वेदः साक्षी वा। नाद्यः अस्वीकारात्। न द्वितीयः तदानीं तस्य नाशात्। साक्षि-णोहमर्थत्वं प्रतिपादयिष्यते। तस्मादहमर्थो ज्ञातैव प्र-त्यगात्मेति सुस्थिरम्॥ १०॥

---

माणो विज्ञानसुखवपुः सुखी विज्ञाता प्राकृताहङ्कारेन्द्रियशून्यो-हमित्येवंलक्षण इत्यर्थः। ततः संसृतेः। तद्विरोधित्वादिति। ब्राह्मणोहं गौरोहमिन्द्रियवानहमज्ञोहमिति प्राकृताहङ्कार-विमर्दित्वादित्यर्थः। विपक्षे दोषमाह यद्ययमिति। जीवो-हमणुरहमित्याद्युक्तलक्षणोहम्भावो यद्युपाधिर्महत्तत्त्वजातः स्यादि-त्यर्थः। अपगच्छेत्पलायेत। निवृत्तेति। अहमर्थनये च मुक्तिसाध-नेषु मुमुक्षोः प्रवृत्तिः, सा तस्य तेषु न स्याद्यद्ययमहमर्थो मुक्तौ नश्येदित्यर्थः। न चेति। मय्यहमर्थे नष्टेपि किञ्चिन्निर्विशेषज्ञानं स्थास्यति निर्गतेपि कल्के मणिरिव शुद्ध इत्यर्थः। तत्र निर्विशेषे ज्ञाने। तदानीं मोक्षकाले। तस्य साक्षिणोहमर्थस्य। नाशस्वीका-रादित्यर्थः। तदा हि ज्ञानमात्रमेव तिष्ठेदिति त्वदीयं मतम्॥१०॥

अत एव लब्धविज्ञानस्यापि वामदेवादेरेवं व्याहारः। तद्धैतस्य पश्यन्नृषिर्वामदेवः प्रतिपेदे-'अहं मनुरभवं सूर्यश्चेति', 'प्राणोऽस्मि प्रज्ञात्मेति', 'नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत। स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तवे'ति। परस्य ब्रह्मणश्च मुक्तमृग्यस्य 'ब्रह्म वा इदमग्र आसीत्तदात्मानमवैदहं ब्रह्मास्मी'ति, 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता' इति, 'अहं सर्वस्य प्र-

---

एवमहमर्थत्वं शुद्धात्मन आपाद्य तस्य विद्वदनुभवेन तत्त्वं दर्शयति अत एवेति। शुद्धात्मनोऽहमर्थत्वादेवेत्यर्थः। एवंव्याहारोऽहम्भावप्रधानं वचनमित्यर्थः। व्याहार उक्तिर्लपितं भाषितं वचनं वच इत्यमरः। तद्धेति बृहदारण्यके। एतद्ब्रह्मस्वरूपं सर्ववृत्तिप्रदं सर्वव्यापकं च पश्यन्ननुभवन् वामदेव ऋषिः प्रतिपेदे ऊचे। किं प्रतिपेदे तदाह अहमिति। मद्वृत्तिहेतुर्मद्व्यापि च ब्रह्मैव मन्वादिजगदित्यर्थः। एवमग्रेऽपि बोध्यम्। प्राणोऽस्मीति। छान्दोग्ये इन्द्रस्य। अस्य ब्रह्मभक्तत्वं केनोपनिषदि प्रसिद्धम्। भगवता साकं प्रतिकूलाचरणं तु तल्लीलापोषाय तदिच्छानुगुणमेव। तथापि मन्तुक्षमणं दासानुचितकर्मत्वादिति व्याख्यातारः। नष्टो मोह इति श्रीगीतास्वर्जुनस्य। परस्येति। चकारादेवंव्याहार इति समुच्चीयते। ब्रह्म वा इति बृहदारण्यके। सेयमिति छान्दोग्ये। परमात्मरूपेयं देवता ऐक्षत विचारयामास। इमास्तेजोऽबन्नलक्षणास्तिस्रो देवताः। अनेन जीवशक्तिमतात्मनानुप्रविश्य नामरूपे

भव' इति, 'अहमेवासमेवाग्रे' इति चैवमादि ॥ ११ ॥

एवं सिद्धे यस्तु 'भूमिरापोऽनलो वायु'रित्यादिना क्षेत्रान्तर्भूतोऽहङ्कारः स्मर्यते स खल्वनात्मनि देहेऽहम्भावकारणहेतुत्वात्तथोपदिष्टो बोध्यः। तस्मादहङ्कारशब्दस्य च्विप्रत्ययमुत्पाद्य व्युत्पादनं द्रष्टव्यम्। एतदहङ्कारद्वयं च सुखमहमित्यादिश्रुतौ 'सन्ने यदिन्द्रियगणेहमि च प्रसुप्ते कूटस्थ आशयमृते तदनुस्मृतिर्नः' इति स्मृतौ च दर्शितम्। उपाध्यभिमानात्मकस्य प्रसुप्तत्वात् सुखमहमित्यनेन तदनुस्मृतिर्न इत्यनेन वाऽऽत्मनोहम्प्रत्ययेन परामर्शाच्च। अतो मामहं नाज्ञासिषमित्यस्मिन् परामर्शेऽप्युपाध्यभिमानिनोऽज्ञानविषयस्य नानुसन्धिरन्यस्य त्वज्ञानसाक्षिणोऽनुसन्धिरस्तीति। सुषुप्तावज्ञानसाक्षित्वेनात्मास्ते इति हि भवदीया प्रक्रिया। साक्षित्वं खलु साक्षाज्ज्ञातृत्वमेव।

---

व्याकरवाणीत्यग्रिमेण सम्बन्धः। स्फुटमन्यत्। ब्रह्म वा इत्यादौ भगवतोहम्भावेन स्वपरामर्शः स्वरूपानुबन्धिनैव तेन मन्तव्यः। सृष्टेः पूर्वं प्राकृतस्याहङ्कारस्यानुत्पत्तेरेवेति तत्त्ववादिनः ॥११॥

ननु चतुर्विंशतितत्त्वात्मकस्य देहस्यावयवोहङ्कारो यो भूमिरित्यादिवाक्येन पठितः। यस्तु स्वरूपानुबन्ध्यहम्भावो निरूपितः, स खलु कपोलकल्पित ,एव, तस्मिन प्रमाणालाभादिति चेत्तत्राहैवमित्यादि। अयमर्थः-आत्माभिन्नोहमर्थोऽस्मच्छब्दवाच्यो

'साक्षाद्द्रष्टरि संज्ञाया'मिति पाणिनिस्मरणात्। स चायं साक्षी साक्षाज्जानामीति प्रतीतिसिद्धोऽस्मदर्थ एव। मोक्षे-

---

मुख्यः। देहावयवोऽहमर्थस्तु मान्ताव्ययवाच्य इति वाच्ययोर्वाचकयोश्च भेदोऽस्ति। एष देहावयवो महत्तत्त्वजन्मा गौणः। श्यामोऽहं बधिरोऽहमित्यनहमि देहादावहङ्कारणहेतुत्वात् उत्पन्नचित्प्रत्ययेन योऽहङ्कारशब्देन वोच्यते। अहम्भावद्वये प्रमाणमाह सुखमहमित्यादि। सत्त्वे यदिति। जागरे शब्दादिविषयग्राहिणेन्द्रियगणेनोपेतो जीवः सविकारः। स्वप्ने सर्वेन्द्रियोपादानेनाहङ्कारेणोपेतो वासनामयान् विषयांस्तेनैव भुञ्जानस्तादृश एव। सुषुप्तौ तु पुरीतन्मध्यस्थे ब्रह्मणि सुप्तस्य जीवस्येन्द्रियगणेऽहङ्कारे च सत्त्वे विलीने सति स कूटस्थो निर्विकारो भवति। कुत इत्याहाशयमृते इति। आशयस्य विकारहेतोर्लिङ्गदेहस्याभावादित्यर्थः। नन्वेवं न प्रतीयते इति चेत्तत्राह तदिति। तस्य सुखज्ञानस्वरूपस्य सुषुप्तिसाक्षिणो निर्विकारस्यात्मनोऽनुस्मृतिर्नो योगेश्वराणामस्तीति ब्रह्मविद्यया लिङ्गभङ्गाभावात् सुषुप्ते उत्थितस्य तस्य पुनर्लिङ्गयोगादानिर्मोक्षे इति भावः। वाक्यद्वयेऽहमर्थद्वयं योजयति उपाध्यमीति। अहमिति। न इति चास्मच्छब्दवाच्योऽहमर्थः प्रसुप्तादन्य इत्यर्थः। अतो मामिति। यस्मादहमर्थद्वयं सिद्धं तस्मादित्यर्थः। जाग्रत्परामर्शोऽयमज्ञातजातिकः कश्चित् पृष्टः प्राह मामिति। देहाद्यहम्भावस्य देहाद्यज्ञानविषयस्य नानुसन्धिः। अहमिति। देहाद्यज्ञानसाक्षिणोऽस्मदर्थस्य त्वनुसन्धिः। तदा त्वन्मतेऽप्यात्मा न निर्विशेषः किं तु ज्ञाताहमर्थ एवेति दर्शयति सुषुप्ताविति। अज्ञानसाक्षित्वेनात्माभिन्नदेहाद्यज्ञानस्य

प्यहमर्थोऽनुवर्तते, इतरथा तस्मिन् प्रवृत्त्यनुपपत्तिरित्युक्तम् ॥ १२ ॥

श्रीविष्णुपुराणेऽप्यहम्प्रत्ययबोध्यताऽऽत्मनः स्वीकृता। 'यो भवान् यन्निमित्तं वा यदागमनकारणम्। तत्सर्वं कथ्यतां विद्वन्मह्यं शुश्रूषवे त्वये'त्येतद्रहूगणेन पृष्टो भरतस्तावदहंशब्दस्यावक्तव्यत्वं प्राह-'श्रूयतां कोहमित्येतद्वक्तुं भूयो न शक्यत' इति। रहूगणस्तु तस्यात्मनि वक्तव्यत्वमाह-'आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विजे'ति। भरतः पुनस्तत्स्वीकरोति। 'शब्दोहमिति दोषाय नात्मन्येष तथैव त'दिति। जिह्वादिषु त्वनात्मस्वहंशब्दो न प्रयोज्य इत्यनुगदति। 'अनात्मविज्ञानं शब्दो वा भ्रान्तिलक्षण' इत्यादिभिः ॥ १३ ॥

---

साक्षाद् द्रष्टृत्वेनेत्यर्थः। साक्षादिति। साक्षाच्छब्दादिनिः स्यात्, वादिनो विवादं यः साक्षात्पश्यति पक्षपातशून्यः सन् तस्य संज्ञायामिति सूत्रार्थः। स्फुटमन्यत् ॥ १२ ॥

अथात्मनोऽहमर्थत्वं प्रस्फुटतया प्रतिपादयति श्रीत्यादिना। यो भवानिति। द्वितीयेंशे बोध्यम्। श्रूयतामिति। स्वातन्त्र्यदोषभयात्तावदिदं निराकरणं ज्ञेयम्। वक्तुं प्रयोक्तुम्। भरत इति। तदहंशब्दबोध्यत्वम्। अहमिति शब्द आत्मनि न दोषाय तस्यास्मच्छब्दवाच्यत्वादिति भावः ॥ १३ ॥

नन्वहमर्थश्चेदात्मा तर्हि—'यद्यन्योऽस्ति परः कोपि मत्तः पार्थिवसत्तम । तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते॥ यदा समस्तदेहेषु पुमानेको व्यवस्थितः । तदा हि को भवान् सोहमित्येतद्विफलं वच' इत्युपरितनो ग्रन्थः कथं सङ्गच्छेत । मैवं, तेनाहमर्थस्याप्यात्मनः स्वातन्त्र्याभिमानो निरस्यते । तथा हि अहंशब्दः खल्वहं जानाम्यहं भुञ्जेऽहं गच्छामीति स्वार्थे स्वातन्त्र्यं समर्पयति । तदस्य जीवात्मनो न सम्भवति पारतन्त्र्यात् । ततश्च स्वतन्त्रः परमात्मैव तदभिमानमर्हति न तु जीवः । स तु तदायत्तवृत्तिकत्वादिना ततो नातिरिच्यते । न चैवमहमर्थत्वस्य क्षतिः, ईश्वरतन्त्रोहमित्यादिरूपस्याविरुद्धस्य तस्याऽहानात् । तदेवं सत्ययमर्थः—मत्तो मदेकाश्रयादीश्वराद्यद्यन्यः परः स्वातन्त्र्याभिमानी कोपि मल्लक्षणोऽन्यो वाऽऽत्मास्ति तदा तद्व्यवच्छेदेनैषोऽहमयं त्वन्य इति वक्तुं युज्येत । न चैवमस्तीत्याह यदेति । पुमान् स्वातन्त्र्याभिमानी व्यवस्थया स्थितः, तदा को भवानिति बहुषु समानेषु निर्धाररूपं ते प्रश्नवचः सोहमिति प्रतिवचश्च विफलम् । तदेवं सति श्रूयतामित्य-

---

स्थापितमात्मनोहमर्थत्वमाशङ्क्य द्रढयति नन्वित्यादिना । मत्तो भरतादद्वितीयात् । हे पार्थिवसत्तम रहगण नृपश्रेष्ठ । तेनोपरि-

त्राप्ययमेवाभिसन्धिः । तस्मात् स्वातन्त्र्याभिमानो जीव-स्यात्र निरस्यते न त्वहमर्थता च । तथा सति 'स्वो-क्ताहंशब्दव्याकोपापत्तेः ॥ १४ ॥

उपसंहारेऽपि देहाहम्भावं निरस्य शुद्धाहम्भावः स्थापितः।'समस्तावयवेभ्यस्त्वं पृथग्भूय व्यवस्थितः।कोऽहमित्येव निपुणं भूत्वा चिन्तय पार्थिव'॥ राजाहं दोष्मानित्यादिधीर्भ्रान्तिरेव, तत्तद्विलक्षणश्चित्सुखवपुरात्माहमिति तु प्रथेत्यर्थः। 'एवं व्यवस्थिते तत्त्वे मयाहामिति भाषितुम्। पृथक्कारणनिष्पाद्यं शक्यते नृपते कथम्'॥ एवं देहादिव्यतिरेकितयाऽऽत्मतत्त्वेऽवस्थिते मया राज्ञैष शत्रुर्हत, एनमहं हनिष्यामीति भाषितुं कथं शक्यते, यदिदं पृथक्कारणेन प्राकृताहङ्कारेण निष्पाद्यम् ॥ १५ ॥

---

तनेन ग्रन्थेन । स्वार्थे जीवात्मन्यहमर्थे । अहानादत्यागात् । व्यवस्थया वृत्तिमत्त्वव्यापकत्वाधारत्वरूपयेत्यर्थः । स्वोक्तेति । भरतोक्तेत्यर्थः ॥ १४ ॥

उपसंहारेऽपीति । तथा चोपक्रमोपसंहारयोरैकरूप्येण लिङ्गेनात्मनोऽहमर्थत्वं सिद्धमित्यर्थः । एवमिति । तत्त्वेऽहमर्थात्मस्वरूपे। पृथगिति । स्वरूपाहम्भावात् पृथगन्यत् प्राकृताहङ्कारणं तेनेत्यर्थः। निष्पाद्यं साध्यम् ॥ १५ ॥

इहाऽपरे त्वेवमाहुः-सर्वभूतेषु स्थितस्यात्मजातस्य ज्ञानादिरूपेणैक्याकारत्वाद्व्यावर्तकजात्याद्यभावेन यो भवान् सोहमित्यादिप्रश्नोत्तरे न घटेते इत्याह यद्यन्योऽस्तीति। परो विलक्षणजात्यादिमान्। सर्वेषु देहेष्वेकाकारव्यक्तिनानात्वमङ्गीकृत्य तद्वैसादृश्यं निषिद्धम्, इतरथैकत्रान्यपरपदद्वयासङ्गतेरिति ॥ १६ ॥

यत्तु सन्नयमनुभूयते चेति सर्वेषां पदार्थानां सत्तानुभूतिघटितत्ववीक्षणात् सर्वत्र तयोः सिद्धिः, सन्मात्रं सत्यमनुवृत्तत्वात्। शब्दस्पर्शादिकं तु व्यावृत्तत्वादसत्यं रज्जुभुजङ्गादिवत्। रज्जुर्यथाऽधिष्ठानतयानुवृत्ता सत्या, भुजङ्गादिकं तु व्यावृत्तत्वादसत्यं तथैतद्द्रष्टव्यं, ज्ञानस्वरूपमखिलं जगदित्यादिस्मरणाच्च। सद्रूपा ह्यनुभूतिः भे-

---

व्याख्यान्तरमत्राह-इहेति। अपरे श्रीवैष्णवाः। सर्वेति। निखिलशरीरेष्वित्यर्थः। आत्मजातस्य जीववृन्दस्य। इतरथेति। एवं व्याख्यानाभावे। एकत्रात्मवस्तुनि। अन्यपरेति। तथा च पौनरुक्त्यप्रसङ्गः स्यादिति ॥ १६ ॥

केवलानुभूतिवादिनामन्यां कुदृष्टिं निराकरिष्यंस्तामाह यत्त्विति। अयं शब्दस्पर्शादिलक्षणोर्थः सन् भवति तथानुभूयते चेति प्रतीतेः। शब्दादिषु सत्तानुभूतिश्चास्तीति सिद्ध्यति। ननु तद्वच्छब्दादिरप्यस्तीति भेदापत्तिस्तत्राह सर्वत्र सन्मात्रं सत्यमिति।

दार्ङ्गीकारेऽनवस्थानात् । स्वतःसिद्धां चानुभूतित्वात् । परतस्तत्सिद्धौ शब्दादिवज्जाड्यप्रसङ्गः । न चोत्पत्तिविनाशौ तस्याः शक्यौ वक्तुमसाक्षिकयोरसिद्धेः । न च सैव तयोः साक्षिणी स्वीययोस्तयोः स्वेनैव ग्रहीतुमशक्यत्वात्॥ १७॥

न च तां ग्रहीतुमन्यानुभूतिरपेक्ष्या स्वसत्तयैव प्रकाशमानत्वात् । तथा हि शब्दाद्यनुभूतिस्तदादिवदप्रकाशा प्रतीयते । न चार्थगतप्रकाशातिशयाल्लिङ्गात्तस्या भवेदनु-

---

सत्ता सत्या स्पर्शः सन्निति स्पर्शानुभवेपि तस्या अनुवृत्तेः । शब्दो मृषा, तस्य तत्र व्यावृत्तेः । दृष्टान्तेन विशदयति रज्जुभुजङ्गादिवदिति । रज्जुः सत्या स्रगनुभवेपि तस्या अनुवृत्तेः । भुजङ्गो मृषा तस्य तत्र व्यावृत्तेरित्यर्थः । ननु सत्तानुभूत्योरुभयोः स्थितौ भेदः सिद्ध इति चेत्तत्राह सद्रूपा हीति । अनुभूतितः सत्ता न भिन्ना । सत्तानुभूत्योर्यो भेदः स ताभ्यां भिन्न इत्येवमनवस्थाप्रसङ्गादैक्यवाक्याच्च । नन्वस्त्वनुभूतिः सत्तानतिरेकिणी किं तूत्पत्तिस्तस्याः स्यादनुभूतित्वात् शब्दानुभूतिर्मे जातेति प्रतीतेरिति चेत्तत्राह स्वतःसिद्धेति । परत इति । शब्दादेर्विषयस्य । ज्ञानमिति । तत्त्वमात्मनस्तत्समवायिकारणत्वमिति तार्किकमतेनान्यतो ज्ञानोत्पत्ताविसर्थः । न चेति । तस्या अनुभूतेः । तयोरुत्पत्तिविनाशयोः । न च सैवेति । अनुभूतिरेव । स्वोत्पत्तिविनाशयोः साक्षाद्द्रष्ट्रीति । न च वाच्यमित्यर्थः ॥ १७ ॥

एवमनुभूतेः सद्रूपत्वं स्वतःसिद्धत्वादुत्पत्तिविनाशरहितत्वं

मानं, शब्दादौ तद्भिन्नस्य प्रकाशस्यानुपलम्भात्, उभयसम्मतया तयैव सर्वव्यवहारनिर्वाहे तत्क्लृप्तेरन्याय्यत्वात् । न च सा नाना अनुभूतिरनुभूतिरित्येकाकारेणावभासात् । प्रयोगश्च विवादाध्यासितानुभूतिरौत्पत्तिकभेदशून्या विनोपाधिपरामर्शमविभाव्यमानभेदत्वात् खवत् । शब्दानुभूतिः स्पर्शानुभूतेर्न भिद्यतेऽनुभूतित्वाद्गन्धानुभूतिव-

---

च साधितम् । अथ किं तस्यां प्रमाणमित्यपेक्षायां स्वप्रकाशत्वान्न तस्यां प्रमाणापेक्षेत्याह न च तामिति । तस्या अनुभूतेर्ग्रहणायान्याऽनुभूतिर्न मृग्येत्यर्थः । कुत इत्याह स्वसत्तयैवेति । नु खलु । रविमीक्षितुं दीपो मृग्यते इति भावः । स्वप्रकाशतां विशदयति न हीति । तदादिवच्छब्दादिवत् । नन्वनुमानज्ञानेन तस्या भवेद्ग्रहणमिति चेत्तत्राह न चार्थगतेति । यथा पर्वतेषु धूमज्ञानाद्वह्निरनुमितस्तथा शब्दादिष्वनुभूतिरनुमिता, तेषां स्फुरणाधिक्याल्लिङ्गादिति न वाच्यमित्यर्थः । कुत इत्याह शब्दादाविति । तद्भिन्नस्यानुभूतेरन्यस्य । अनुभूतिरेव प्रकाशो न त्वनुभूतेरितरः स इत्यर्थः । उभयेति । अर्थप्रकाशरूपा ह्यनुभूतिरुभयवादिसंमता, तयैव ज्ञानज्ञेयव्यवहारे सिद्धेऽर्थप्रकाशातिशयाल्लिङ्गादनुभूतेरनुमेयत्वकल्पनमन्याय्यमित्यर्थः । शब्दादिविषयभेदादनुभूतेर्विषयिण्या भेदं चेत्कश्चिद् ब्रूयात्तं निराकरोति वचसेति । सानुभूतिर्नाना बहुविधा न भवति शब्दानुभूतिः स्पर्शानुभूतिरित्येवं चरमैक्यावभासनात् । विवादेति । विमतानुभूतिः स्वाभाविकभेदहीना शब्दादिसम्बन्धं

दिति ॥ १८ ॥

तस्मान्नित्या स्वप्रकाशा निर्विशेषाऽद्वितीया चैषानुभूतिः । जीवस्येश्वरस्य च स्वरूपमेतदेव । इतोन्यत् सर्वमिह मायया विजृम्भितमिति जल्पन्ति । तच्चानुभूतिस्वरूपस्यात्मनोऽनुभवितृत्वाहम्प्रत्ययबोध्यत्वाविषयप्रकाशकत्वस्वभावहेतुकस्वयम्प्रकाशत्वप्रतिपादनेनैव निरस्तं वेदितव्यम् ॥ १९ ॥

---

विना भेदानवभासादित्यर्थः ॥ १८ ॥

निगमयति तस्मादिति । अनुवृत्तत्वात् । सत्या उत्पत्तिविनाशविरहान्नित्या । प्रमाणनिरपेक्षप्रतीतिकत्वात् स्वयम्प्रकाशा । चरमे विशेषास्पर्शादैक्यरूपेण भानाच्च निर्विशेषाऽद्वितीया चैषानुभूतिर्ब्रह्मेत्यर्थः । जीवस्येति । अविद्यया जीवत्वं विद्यया चोपाधिनेश्वरत्वं चानुभूतौ कल्पितं, तयोर्वास्तवं स्वरूपं त्वनुभूतिरेव । घटाकाशगृहाकाशयोरिव महाकाशमित्यर्थः । इतोऽन्यदिति । माययानुभूतिस्वरूपाज्ञानरूपया । विजृम्भितं कल्पितम् । इति कल्पयन्तीति । यच्चिवति । कल्पयन्ति केवलानुभूतिवादिनः । तच्चानुभूतेरात्मनोनुभवितृत्वादिप्रतिपादनेनैव निरस्तं वेदितव्यमित्यनुषङ्गः । सत्तादीनां सत्ताद्याश्रयत्ववद्विज्ञानस्वरूपस्यैवात्मनो विज्ञातृत्वमिह प्रतिपादितम् । तस्यैव विज्ञातुरहमर्थत्वं तस्य स्वाविषयप्रकाशनशीलतया स्वप्रकाशकत्वं चेति हेतोस्तत्कुचोद्यं परिहृतमित्यर्थः । न खलु विज्ञाताहमर्थो विषयप्रकाशकसत्ताकश्चार्थो निर्विशेषत्वाच्छक्यते वक्तुम् ॥ १९ ॥

किं च शब्दानुभूत्युत्तरे स्पर्शानुभूतिकाले व्यावृत्तस्य शब्दस्यासत्यत्वमाख्यातुं न शक्यते तदानीमेव तस्यैवान्यैरनुभूयमानत्वात् । ज्ञानाप्रसारायुगपदनेकाग्रहः । प्रसृतज्ञानाः खल्वष्टावधानिप्रभृतयो दृश्यन्ते, न तेषां विषयव्यावृत्तिरस्ति । क्रमेण परात्मानुभवे च नानुभूतस्य व्यावृत्तत्वादसत्यं, 'नित्यो नित्याना'मित्यादिश्रुतिव्याकोपात् । एतेनैव तावनुभूत्यां कल्पितावतस्तथेत्युक्तिरपि निरस्ता कल्पकानिरूपणाच्च । रज्जुभुजङ्गादिकं

---

आपातरमणीयान् पूर्वपक्षार्थानधुना निराकरोति किंचेत्यादिना । तदानीमिति । अनुभूतशब्दस्य जनस्य तदानीं स्पर्शानुभववेलायामेव तस्यैव शब्दस्यान्यैः श्रोतृभिरनुभूयमानत्वादित्यर्थः । ननु स्पर्शानुभवी तं शब्दं कुतो नानुभवति तत्राह ज्ञानाप्रसारादिति । दुरदृष्टेन ज्ञानसङ्कोचादित्यर्थः । ये तूग्रपुण्येन प्रसृतज्ञानास्ते किल सार्धमेवाऽनेकानर्थाननुभवन्तीत्याह प्रसृतेति । क्रमेणेति । अनुभूतस्य परात्मनः । नित्येति । व्याख्यातं प्राक् । एतेनैवेति । एतेन परापरात्मनोर्नित्यत्वश्रवणेन हेतुना तौ जीवपरावनुभूत्यां कल्पितावतः कल्पितत्वाद्धेतोस्तथा मिथ्याभूतौ भवतोऽनुभूतिरेव सत्येत्युक्तिश्च निराकृता नित्ययोः कल्पितत्वासम्भवादिति भावः । रज्ज्विति । पुरः स्थितायां रज्जौ भुजङ्गं कल्पयन् रज्जोरन्यो यथा प्रतीतस्तथानुभूत्यां शब्दादीन् कल्पयन्ननुभूतेरन्यः प्रत्येतव्यः । स च ते नास्तीति विषमदृष्टान्तो

४१

तु न दृष्टान्तो वैषम्यात् ॥ २० ॥

न च सन्मात्रमनुभूतिः, विषये भावेन भेदस्य सिद्धत्वात् । न च शब्दाद्यनुभूतिस्तत्राप्यात्मा वृत्तिज्ञानस्यानित्यत्वस्वीकारात् । न च स्वरूपानुभूतिः सः, योऽहं बाल्ये स्वपितरावन्वभूवं, स एवेदानीं वार्द्धके स्वनप्तृननुभवामीत्यनुभवितुरेवास्मदर्थस्य तत्त्वेन प्रत्यभिज्ञानात् । न चानुभूतैरनुभूतिगोचरत्वे शब्दादिवज्जाड्यापत्तिः, अनुभूतित्वेनैव गोचरत्वात् । तस्माज्ज्ञानग्राह्यत्वेपि न जाड्यापत्तिः, 'मृगैर्मृगाणां ग्रहण'मित्यात्वमिति ॥ २० ॥

---

यत्तु सद्रूपा ह्यनुभूतिरिति सदनुभूत्योरभेदः प्रतिपादितस्तन्निरस्यति न च सन्मात्रमिति । न च तयोर्भेदे गृहीतेऽनवस्थापत्तिः तस्याऽधिकरणात् । यतो न तदनापत्तिः तथापि भेदवत्त्वभानं निर्विशेषात् । न च शब्दादीति । तव केवलानुभूतिवादिनः । न च स्वरूपेति । यस्मान्नीलपीताद्याकारा ज्ञानवृत्तयो भवन्ति सा ब्रह्मस्वरूपा निर्गुणानुभूतिरात्मेति त्वया न शक्यमभिधातुमित्यर्थः । कुत इत्याह योऽहमिति । तत्त्वेनात्मत्वेन । यत्तु न च तां गृहीतुमन्यानुभूतिरपेक्ष्येत्यात्मनो ज्ञानगोचरत्वं निषिद्धं, तत्प्रसाख्याति न चानुभूतेरिति । अनुभूतित्वेनैवेति । न तु शब्दादिवज्जडत्वेनेत्यर्थः । सजातीयेन गृहीतत्वे विजातीयत्वं न भवतीति विशदयितुं निदर्शनं न हीति । एवमिति । ज्ञान-

देः, 'ज्ञानगम्यः पुरातन' इति तन्नामस्तोत्राच्च। न हि प्रकाशैकरूपस्य रवेः प्रकाशात्मकचक्षुर्विषयत्वे सत्यप्रकाशतापत्तिर्दृष्टा। एवं हानोपादानादिलिङ्गकानुमानज्ञानगम्यत्वं परानुभूतेः सिद्ध्यति, अहमन्वभूवमिति स्वानुभूतेश्च। 'औपनिषदः पुरुषो' 'ज्ञानं ज्ञेयं ज्ञानगम्य'मित्याद्याः श्रुतिस्मृतयो विज्ञानस्वरूपस्य ब्रह्मणो वेद्यत्वबोधिका नोपरुध्येरन्। तस्मादनुभवितैवात्मा। अनुभूतिस्तु तस्य धर्मः। स च विषयप्रकाशनसमये स्वप्रकाशः प्रतीतः, अन्यदा

---

स्य ज्ञानग्राह्यत्वे स्वीकृते सतीत्यर्थः। हानेति। एष विप्रो ब्रह्मविद्विषयत्यागित्वे सति ब्रह्मभक्तिग्राहित्वादिति विप्रस्य ब्रह्मवेदनमनुमितम्। स्फुटार्थमन्यत्। एतेन फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्नि++तं ब्रह्मण्यज्ञाननाश+वृत्तिव्याप्तिरपेक्ष्यत इति निरस्तम्। मनसैवानुद्रष्टव्यमिति श्रुतेर्वृत्तिव्याप्यं ब्रह्म। यन्मनो न मनुते इति श्रुतेस्तु फलव्याप्यं तन्नेति वदन्ति। अन्तःकरणवृत्तिरावरणनिवृत्त्यर्थमज्ञानावच्छिन्नचैतन्यं व्याप्नोतीति वृत्तिव्याप्यत्वम्। आवरणे निवृत्ते स्वयम्प्रकाशमानं चैतन्यमुच्यते, तन्न। चित्तवृत्तिर्व्याप्नोति आवरणस्य प्रागेव निवृत्तेः। प्रयोजनाभावात्तदाऽन्तःकरणस्यापि विनाशाच्च कथं तद्व्याप्तिः शक्या वक्तुम्। तस्मादिति। उक्तनिर्णयाद्धेतोरात्मानुभविता ज्ञानी न तु केवलानुभूतिस्वरूप इत्यर्थः। अनुभूतिस्तु तस्यात्मनः स्वानुबन्धी धर्मो भवति। ननु ज्ञानी चेदात्मा तर्हि न दृष्टेरित्यादिना ज्ञानि-

ज्ञानगम्यश्च । 'न दृष्टेर्द्रष्टारं न मतेर्मन्तार'मित्यत्र तु तथाभूतं जीवं निषिध्य सर्वान्तरात्मानमीशमुपास्स्वेति व्याख्यानान्न काचिच्छङ्का ॥ २१ ॥

इति श्रीसिद्धान्तरत्नाख्ये भाष्यपीठके
केवलानुभूतिव्युदासः सप्तमः पादः ॥ ७ ॥

---

त्वप्रतिषेधः कथं सङ्गच्छेतेति चेत्तत्राह न दृष्टेरिति । स्फुटार्थम् । तथाभूतं जीवं निषिध्येति । तदुपासने क्लेशाधिक्यादिति भणितं भगवता ये त्वक्षरमनिर्देश्यमित्यादिभिः ॥ २१ ॥

इति श्रीगोविन्दभाष्यपीठकटिप्पण्यां सप्तमो
नन्दकपादो व्याख्यातः ॥ ७ ॥

# अष्टमः पादः ।

तदेवं ज्ञानस्वरूपो ज्ञाताहमर्थश्चात्मा कर्तृत्वादिमान् । स चेशो जीवश्चेति द्विविधः । तत्रेशो विभुः स्वद्वारा जगत्कर्ता, स्वायत्तवृत्तिकप्रकृतिद्वारा तु तदुपादानं चेति 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधा'दित्यादिकात् सूत्रपञ्चकात्तद्भाष्याच्चाऽवसीयते । प्रकृतिजीवरूपात् प्रपञ्चात्तदाश्रयस्येशस्य भेदस्त्वानन्दमयाद्यधिकरणेभ्यः सिद्धः ॥ १ ॥

---

ग्रन्थारम्भे विज्ञातानन्दस्य सार्वज्ञ्यादिगुणरत्नाकरस्य श्रीपतेः सर्वेश्वरस्य विष्णोर्भक्तिरार्तातिक्रयोः सुखदुःखप्राप्तिपरिहारयोर्हेतुः । सा च स्वसंवित् पूर्वया तत्संविदा प्रवृत्तेति भगवतो बादरायणस्य मतेनापादितं तद्दृढतायै सर्वदेवतैक्यादिवादा निराकृताः । निर्गुणात्मैक्यवादस्तु पञ्चमादिभिस्त्रिभिः पादैः परिदूषितः । तेन सविशेषब्रह्मवादो दृढतां नीतः । अथ तद्वादमुद्दिष्टं पुमर्थं वर्णयितुं पञ्चपादोऽयमारभ्यते तदेवमित्यादिना । स्वद्वारेति । पराख्यस्वरूपशक्तिमतात्मनेत्यर्थः । प्रकृतिश्चेति । विश्वस्योपादानं निमित्तं च ब्रह्मैव । कुतः ? एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मृत्पिण्डादिदृष्टान्तस्य चानुगुण्यादित्यर्थः । अवशिष्टानि सूत्राणि भाष्ये विज्ञेयानि ॥ १ ॥

तस्य स्वरूपलक्षणं सत्यानन्तज्ञानत्वं जगज्जन्मादिहेतुत्वं च चिदचिच्छक्तिमानसौ जगन्निमित्तोपादानतां भजतीति तदुभयरूपतायाः स्वतो ब्रह्मगतत्वेनौपाधिकत्वाभावादुपलक्षणत्वनामकतटस्थलक्षणत्वनियमोऽपि नातीव समञ्जसः। जगज्जन्मादिहेतुत्वमेव ब्रह्मलक्षणं शास्त्रकृद्भिर्दर्शितम्—'जन्माद्यस्य यत' इति । इतरथा लक्षणासङ्गतिः। जगच्च परमार्थतः सत्यमित्युपपादितम् ॥ २ ॥

ये तु मृषाभूतं जगद्रज्जुभुजङ्गादिवद्भ्रमारोपितमित्या-

---

तस्येति । तदभिन्नत्वे सति तद्बोधकं स्वरूपलक्षणम् । तद्भिन्नत्वे सति तद्बोधकं तु तटस्थलक्षणम् । यथा ब्रह्मणः सत्यत्वादि यथा च जगज्जन्मादिकर्तृत्वमिति । मायिनो वदन्ति-जगतो ब्रह्मभिन्नत्वेपि स्वकर्तृत्वेन ब्रह्मबोधकत्वमस्तीति ब्रह्मोपलक्षकत्वात्तटस्थलक्षणत्वमिति । नैतत् सुपेशलं यथा सास्नादिकं गोरसाधारणं स्वरूपानतिरेकीति सास्नादिमत्त्वं तस्य स्वरूपलक्षणं स्यादेवं परादिशक्तित्रयं शक्तिमतो ब्रह्मणोऽसाधारणं स्वरूपानतिरेक्येव नवजपापुष्पारुण्यादौपाधिकम् । अतस्तत्त्रयेण निमित्तोपादानत्वं तस्य सास्नादिमत्त्ववत् स्वरूपलक्षणमेवेति भावः । जन्मादीति । यतो हेतोरस्य जगतो जन्मादि भवति तद्ब्रह्मेति सूत्रार्थः ॥ २ ॥

जगद्भ्रमवादं निराकरोति ये त्विति । भ्रमस्थले भ्रमाधिष्ठानं

हुस्तन्मते निरधिष्ठानं तत् स्यात्। सामान्यतो ज्ञातत्वे सत्यज्ञातविशेषवत्त्वं खल्वधिष्ठानत्वे तन्त्रं, तच्च निर्विशेषे निःसामान्ये ब्रह्मणि न सम्भवतीति मृद्घटादयो दृष्टान्ताः श्रौताः। शुक्तिरजतादयस्तु बौद्धा एव। तस्माज्जगन्निमित्तोपादानरूपत्वं ब्रह्मणस्तस्य पारमार्थिकम् ॥३॥

एवं हि स्मरन्ति—'एष प्रकृतिरव्यक्तः कर्ता चैव सनातनः। परश्च सर्वभूतेभ्यस्तस्माद् वृद्धतमोऽच्युतः॥बुद्धिर्मनो महान् वायुस्तेजोऽम्भः खं मही च या। चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम्॥चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः। प्रभवश्चैव सर्वेषां निधनं च युधिष्ठिरे'ति। 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जन'मित्या-

---

सामान्यतो ज्ञातमज्ञातविशेषवच्च प्रतीतम्। यथा शुक्तिकारज्जुप्रभृतिः। न चैवं त्वया ब्रह्म स्वीक्रियतेऽतोऽसङ्गतोऽयं भ्रमवादः। किं च यैर्दृष्टान्तैरेष वादः प्रवर्तितस्ते श्रुतिषु नोपलभ्यन्ते। ननु पुराणे क्वचित्ते दृष्टा इति चेत्तत्राह बौद्धा एवेति। जगत्यनित्यत्वबुद्ध्यर्था विरक्तिफलका इति यावत्। वैराग्यजिग्राहयिषुभिराचार्यैर्बुद्ध्यैव कल्पिता इति भावः॥ ३॥

उभयस्वरूपत्वे प्रमाणं—एवं हीति। एष इति। भारते सभापर्वणि भीष्मवाक्यम्। प्रकृतिरुपादानं कर्ता निमित्तं च। सनातन इत्यविकारित्वं, बुद्धिरिति महत्तत्त्वं, मन इति तत्कारणमह-

द्या श्रुतिस्तु तथापि न कश्चिद्विकार इति वक्तीति सर्वं समञ्जसम् ॥ ४ ॥

जीवस्त्वणुः। 'बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते' ॥ एषोणुरात्मा चेतसा वेदितव्यः, 'सूक्ष्माणामप्यहं जीव' इत्यादिश्रुतिस्मृतिभ्यः। तस्य कर्तृत्वभोक्तृत्वादिकं पारमार्थिकं परायत्तं चेति 'कर्त्ता शास्त्रार्थतत्त्वा'दित्यादिसूत्रदशकात्तद्भाष्याच्च विदितम् ॥ ५ ॥

---

न्तत्त्वं, तेनेन्द्रियतद्देवतानां ग्रहणम्। महान् वायुरित्यादिना भूतपञ्चकं, चतुर्विधं च यज्जरायुजाण्डजादिभूतं प्राणिजातं सर्वमेतत् कृष्णे प्रतिष्ठितं तेन पालितमित्यर्थः। प्रभवो जनकः, निधनं संहर्तेति, निखिलैकहेतुत्वं कृष्णस्योक्तम्। नन्वेवं जगत्कर्तृत्वे सिद्धे तस्य निष्क्रियत्वं कथं श्राव्यते श्वेताश्वतरैस्तत्राह निष्कलमिति। विकारः श्रमादिः ॥ ४ ॥

एवमीशं निरूप्याऽथ जीवं निरूपयति जीवस्त्विति। बालाग्रेति। श्वेताश्वतराणां वाक्यम्। आनन्त्याय मुक्तये। एषोणुरिति। मुण्डके। सूक्ष्माणामित्येकादशे। तस्येति। परायत्तमीशतन्त्रम्। कर्तेति। जीवः कर्ता। कुतः? यजेत ध्यायेदित्यादिश्रुतेश्चेतने कर्तरि सति सार्थक्यात्। प्रकृतेः कर्तृत्वे व्यर्थं तत् स्यादित्यर्थः ॥ ५ ॥

परमार्थतो बहुत्वं च मन्तव्यम् । 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः। तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्॥इदं ज्ञानमथाश्रित्ये'त्यादिषु विध्वस्ततमसां भगवत्साम्यभाजां बहुत्वाभिधानात् । ज्ञानस्वरूपस्यापि तस्य ज्ञानगुणकत्वं स्वीकार्यं, 'यो विज्ञाने तिष्ठन्' 'मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुष' इतिश्रुतेः। नित्य एव स गुणः, 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत' इत्यादिश्रुतेः। 'यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। दोषप्रहाणात्तज्ज्ञानमात्मनः क्रियते तथा ॥ यथोदपानख-

---

ईश्वरो यथैक एव न तथा जीवः किं तु बहवो जीवा इत्याह परमार्थत इति । बहुत्वं जीवतत्त्वस्येत्यर्थः। ज्ञानेनेति। श्रीगीतासु। प्रकाशस्य भानोः प्रकाशकत्ववज्ज्ञानस्य जीवस्य ज्ञातृत्वमित्याह ज्ञानस्वरूपस्यापीति । य इति । बृहदारण्यके । योऽन्तर्यामी। विज्ञाने चिदेकधातौ जीवे । तिष्ठंस्तदन्तर्यमयतीत्यर्थः । मन्तेति षट्प्रश्न्याम् । विज्ञानात्मेति । चिदेकधातुत्वम् । बोद्धेति । विज्ञातृत्वम् । ननु मनसा—संयुक्ते आत्मनि ज्ञानस्योत्पत्तेरनित्यं तदिति चेत्तत्राह नित्य एवेति । न हीति । बृहदारण्यके । विज्ञातुर्जीवस्य । विज्ञातेर्धर्मभूतज्ञानस्य । विपरिलोपो विनाशो नास्ति अविनाशित्वादिति वाक्यशेषः । अविनाशी वा इत्यादिकं चादिपदात् । यथेति । शौनकवाक्यम् । इह हेयगुणाः पापा जरादयः। अवबोधो गुणोऽभ्युदितः संसृतितिमिरं

ननात् क्रियते न जलान्तरम्। सदैव नीयते व्यक्तिमसतः सम्भवः कुतः॥ तथा हेयगुणध्वंसादवबोधादयो गुणाः। प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि त' इति स्मृतेश्च। केवलानुभूतिवादस्य निरासाच्च। इत्थं चेशतुल्योऽपि स्वरूपसामर्थ्याभ्यामल्पीयस्त्वेनोपसर्जनत्वात्तदहशोसौ भण्यत इत्यंशाधिकरणे तद्भाष्ये च विवृत्तम्। तदेवं नित्यज्ञानादिगुणकमणुचैतन्यं जीवस्वरूपमिति सिद्धम् ६

यत्तु वदन्ति-ब्रह्मैवाणुभूतान्तःकरणोपाधियोगाज्जीवसंज्ञमतो ब्रह्मांशत्वं जीवस्येति तदिदमविचारिताभिधानम्। तथा हि न तावट्टङ्कच्छिन्नपाषाणखण्डवद्वास्तवोपाधिपरिच्छिन्नो ब्रह्मखण्डो जीवः, अच्छेद्यत्वादखण्डत्वाभ्युपगमाच्च ब्रह्मणः, आदिमत्त्वापत्तेश्च जीवस्य।

---

नाशयति यत् सूर्यसहस्रेणापि नापनेतुं शक्यते, यस्यानुदये सर्वत्यागिनोपि पशोरिव न मुक्तिः। यस्योदये गृहिणोपि जनकादेरिव मुक्तिरिति। एवमुक्तं मोक्षधर्मे। आकिञ्चन्ये न मोक्षोऽस्ति किञ्चने नास्ति बन्धनम्। किञ्चने चेतरे चैव जन्तुर्ज्ञानेन मुच्यते॥ इति सुलभां भिक्षुकीं प्रति जनकेन॥ ६॥

ब्रह्मोपसर्जनत्वाद्ब्रह्मांशत्वं जीवस्योक्तं तत्राद्वैतिनो वदन्ति-अंशशब्दस्य वस्त्वेकदेशे शक्तत्वादुपाधियोगि ब्रह्मैकदेशत्वं जीवस्य ब्रह्मांशत्वं नामेति। तदिदं निराकर्तुं प्रवर्तते यत्त्विसादिना।

यत एकस्यैव सतो द्वैधीकरणं छेदः। नाप्यच्छिन्न एवोपाधिसंयुक्तो ब्रह्मप्रदेशविशेषः, उपाधौ गच्छत्युपाधिसंयुक्तब्रह्मप्रदेशाकर्षणायोगादनुक्षणमुपाधिसंयुक्तब्रह्मप्रदेशभेदात् प्रतिक्षणं बन्धमोक्षापत्तेः॥ ७॥

न चोपाधिसंयुक्तं ब्रह्मस्वरूपमेव सः, अनुपहितब्रह्मव्यपदेशासिद्धेः 'य आत्मनि तिष्ठ'न्नित्यादिश्रुतिविरोधाच्च॥ ८॥

नापि ब्रह्माधिष्ठानमुपाधिरेव सः, मुक्तौ जीवनाशापत्तेः॥ ९॥

---

तत्र छेदेन तन्निरस्यति न तावट्टङ्केति। टङ्कः पाषाणदारणः इत्यमरः। ननूपाधिना टङ्केनैव छेदो नोच्यते किं तु योगमात्रात्तत्प्रदेशस्य तत्त्वं स्यात्ततश्च न विकारापत्तिरिति चेत्तत्राह नाप्यच्छिन्न एवेति। उपाधौ गच्छतीति। उपाधेरन्तःकरणस्य परिच्छिन्नत्वाज्जीवत्वाच्च चलनं सम्भवेदेव। ततश्चोपाधियोगी ब्रह्मप्रदेशो बद्धस्तद्वियोगी तु मुक्त इत्यापद्येतेत्यर्थः॥ ७॥

उपहितब्रह्मजीवपक्षं निराकरोति न चोपाधीति। अनुपहितेति। शिवमद्वैतं चतुर्थं मन्यन्त इति ब्रह्मणस्तुरीयत्वश्रवणव्याकोपाद्य आत्मनीत्यादिजीवान्तर्यामित्वश्रवणव्याकोपाच्चेत्यर्थः॥८॥

अन्तःकरणजीवपक्षं निराकरोति नापीति। ब्रह्माधिष्ठितमन्तःकरणमेव जीव इत्यर्थः। मुक्ताविति। तथा च नित्यो नित्यानामित्यादिश्रुतिव्याकोपापत्तिः॥ ९॥

न च भ्रान्तं ब्रह्मैव सः, सार्वज्ञ्यदेशिकश्रुतिव्याकोपात् ॥ १० ॥

न चोपाधिप्रतिबिम्बितं ब्रह्मैव सः, तस्य विभुत्वान्नैरूप्याच्च । न च नीरूपरूपवत्तस्य सः, रूपस्य साश्रयत्वेन दृष्टान्तवैषम्यात् । न च जपापुष्पारुण्यात्तस्य सः, प्रतिबिम्बत्वावच्छिन्नं प्रति रूपिद्रव्यस्य हेतुत्वेन विवक्षितासिद्धेः । न चाकाशवत्तस्य सः, विभुत्वेन नैरूप्येण च तन्निरासात् । उपाधिपरिच्छिन्नाकाशस्थज्योतिरंशस्यैव तत्तया प्रतीतिरवैदुषी । इतरथा वायुकालादिरपि तत्प्रसङ्गः । यस्तु ब्रह्मणः



भ्रान्तब्रह्मजीवत्वपक्षं निराकरोति न च भ्रान्तमिति । भ्रान्तो राजपुत्रो यथा धीवरस्तद्वद् भ्रान्तं ब्रह्मैव जीव इति न च वाच्यमित्यर्थः ॥ १० ॥

उपाधिप्रतिबिम्बितब्रह्मजीवत्वपक्षं निराकरोति न चोपाधिप्रतीति । तस्येति । ब्रह्मणः विभोर्नीरूपस्य नभसः प्रतिबिम्बो यथा न भवति तथा ब्रह्मणोपि तादृशस्य स न भवेदित्यर्थः । ननु रूपं विभु नीरूपं च यथा दर्पणादौ प्रतिबिम्बति तथा स्यादिति चेत्तत्राह न च नीरूपेति । ब्रह्मणो रूपवत् स्वाश्रयत्वाभावाद्विषमोऽयं दृष्टान्त इत्यर्थः । न च जपेति । जपापुष्पारुण्यस्य यथाश्रयनिरपेक्षः स्फटिके प्रतिबिम्बः स्यादेवं ब्रह्मणो निराश्रयस्य सोऽस्त्विति न वाच्यमित्यर्थः । कुत इत्याह प्रतिबिम्बत्वेति । यो यः प्रतिबिम्बः स सर्वोपि रूपवद्द्रव्यहेतुः । ततश्च स्फटिके जपापुष्पेणैव

प्रतिबिम्बं प्रतिपादयन् ध्वनेरिव प्रतिध्वानिं तत्र निदर्शयति स किल प्राच्यां प्रस्थितः प्रतीचीमासीदति तयोरसाधर्म्यादेव ॥ ११ ॥

तच्छास्त्रं तु गौण्या वृत्त्या सङ्गतिमत्। एवमाह भ-

———

प्रतिबिम्बितमतिस्वच्छे तत्र तदारुण्यातिप्रसाराद्दतुलं तद्ग्रहीतुं न शक्यत इति विवक्षितस्ते नीरूपब्रह्मप्रतिबिम्बो न सिद्ध्यति। न चाकाशेति। प्रकटार्थः। ननु प्रतीतेः कः समाधिस्तत्राह उपाधिपरीति। ग्रहनक्षत्रप्रभामण्डलस्याकाशप्रतिबिम्बतया प्रतीतिर्भ्रान्तिरित्यर्थः। इतरथेति। नीरूपस्य विभोश्च प्रतिबिम्बस्वीकारे इत्यर्थः। पास्त्विति। तत्र प्रतिबिम्बनिरूपणे ॥ ११ ॥

ननु न चेद्ब्रह्मणः प्रतिबिम्बो जीवस्तर्ह्याकाशमेकं हि यथा घटादिषु पृथग्भवेत् तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमानित्यादि प्रतिबिम्बशास्त्रं कथमर्थवत् स्यादिति चेत्तत्राह--तच्छास्त्रं त्विति। गौण्या वृत्त्या गौणलक्षणया सिंहो देवदत्त इतिवत्प्रतिबिम्बसादृश्येनेत्यर्थः। इत्थमेव सूत्रकृता निर्णीतमित्याहैवमिति। अम्बुवदित्यस्यार्थः—अम्बुनि यथा सूर्यादेः परिच्छिन्नस्य रूपवतो ग्रहणं भवत्येवं ब्रह्मणो विभुत्वेन नैरूप्येण चाविद्यायां ग्रहणं न भवतीत्यतो न तथात्वं, जीवस्य ब्रह्मप्रतिबिम्बत्वं नेत्यर्थः। वृद्धीत्यस्यार्थः—जलाधारेष्विवांशुमानिति शास्त्रं मुख्यवृत्त्या न प्रवर्तते किं तु वृद्धिह्रासभाक्त्वं स्वधर्मांशमुपादाय गुणवृत्त्या प्रवर्तत इत्यर्थः। अन्तर्भावात् एतस्मिन्नंशे शास्त्राशयसमाप्तेः। एवं सत्युभयोरुपमानोपमेययोः सामञ्जस्यात् सङ्गतेः। सूर्यतत्प्रतिबि-

गवान् सूत्रकारः—'अम्बुवदग्रहणात्तु न तथात्वम्'। 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेव'मिति॥१२॥

तस्माद्ब्रह्मवदनादिसिद्धोऽपि ज्ञानात्मा जीवः, 'नित्यो नित्याना'मित्यादिश्रुतेः ॥ १३ ॥

स च तद्भिन्नोऽपि तच्छक्तिरूपत्वात्तदंशो निगद्यते। 'इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूता'मिति स्मृतेस्तच्छक्तिरूपत्वं तस्य सिद्धम्। अत एव सम्बन्धापेक्षावत्त्वं च। वर्णितं चैतदंशाधिकरणभाष्ये ॥ १४ ॥

तस्य तदंशभूतस्य स्वांशिभगवद्वैमुख्यान्मायया परिभवस्तत्सांमुख्ये तु सा विलीयते। तत्स्वरूपसाक्षात्कारश्च सदैव स्फुरति। 'क्षरप्रधानममृताक्षरं हरः क्षरात्मना

---

म्बौ यथा वृद्धिह्रासवन्तौ स्वतन्त्रावुपाधिधर्मसम्पर्कसम्पर्किणौ तथेशजीवाविति ॥ १२ ॥

निगमयति तस्मादिति। प्रकटार्थम् ॥ १३ ॥

भगवदंशत्वं जीवस्य तदुपसर्जनत्वादुक्तम्। तत्त्वं च तस्य तच्छक्तित्वादिति दर्शयति स चेति। इतस्त्वन्यामिति। श्रीगीतासु। प्रकृतिं शक्तिम्। तस्येति जीवस्य। अत एवेति। शक्तित्वादेः ॥ १४ ॥

तस्येति। जीवस्य। स्वांशिभगवद्वैमुख्यादिति। भयं द्वितीयाभिनिवेशतः स्यादीशादपेतस्य विपर्ययोऽस्मृतिः। तन्माययातो

वीक्षते देव एकः। तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूय-श्चान्ते विश्वमायानिवृत्तिः’। ‘न स पुनरावर्तत’इत्यादि-श्रवणात्॥ १५॥

तद्वैमुख्यं चाऽनादिकालिकमपि सत्सङ्गाद्विनश्यति

---

बुध आभजेत्तं भक्त्यैकयेशं गुरुदेवतात्मेति। जनस्य कृष्णाद्विमुखस्य दैवादधर्मशीलस्य सुदुःखितस्य। अनुग्रहायेह चरन्ति नूनं भूतानि भव्यानि जनार्दनस्येति च श्रीभागवतात्। यत्र क्वचिन्माययैव कर्मभिर्वा जीवस्य देहयोगात्मा संसृतिर्वर्ण्यते तत्रापि प्रागीशवैमुख्यमूह्यम्। वैमुख्यं त्वनादिवैमुख्यादृते मायावृत्तिर्न स्यात्। यथावृतं घटदीपमन्धकारस्तथा वैमुख्यावृतं जीवं मायावृणोतीति बोध्यम्। तत्सांमुख्ये च सत्प्रसङ्गाज्जाते, तेन वैमुख्ये ध्वस्ते मायापसरति, मुद्गरप्रहारेण घटे ध्वस्ते यथान्धकारः पलायते। ततश्च दीपस्येव स्वरूपं जीवस्य स्फुरति परमात्मानं च सर्वदा स वीक्षते। अत्र प्रमाणं क्षरमिति। श्वेताश्वतरवाक्यम्। प्रधानं परिणामित्वात् क्षरमुच्यते। हरपरमात्माक्षरात्मानौ प्रधानजीवावेको देवः परमात्मा हर ईशते नियमयति। अथ तस्य देवस्याभिध्यानात् योजनादसम्प्रज्ञातसमाधितः तत्त्वभावात् स्वरूपद्वयस्फुरणादन्ते विश्वमायानिवृत्तिर्जीवस्य भवति विमुक्तिं स लभते इत्यर्थः। न स इति। छान्दोग्ये। स मुक्तो भगवल्लोकान्नावर्तते न पततीत्यर्थः॥ १५॥

तद्वैमुख्यं चेति। अनादिकालिकं भगवद्विषयकमानसापरोक्षप्रागभावत्वादिति बोध्यम्। अनादीति। अनादिवैमुख्यप्रवृत्तया ह-

सामुख्यं चाविर्भवति । 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते। अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा॥ महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम् । महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये' इत्यादिश्रुतिभ्यः ॥ १६ ॥

सत्सङ्गविशुद्धे जीवे ज्ञानानन्दात्मकभगवत्स्वरूपावरकाविद्याविशेषविनाशात्मा वेदान्तजन्यभगवद्विषयकमानसापरोक्षप्रागभावविनाशात्मा वा भगवत्सम्बन्धः । स एष सत्सङ्गहेतुकाद्भगवत्प्रसादशब्दितात्तत्सांमुख्यादेव भवति । ततो विरतोऽनुवृत्त्या जीवं प्रति भगवद्गुणावर-

---

रिमायया मोहित इत्यर्थः । यदा प्रबुध्यते सत्सङ्गेन वैमुख्यनाशे तत्सांमुख्यं विन्दतीत्यर्थः । तदाऽजं हरिं बुध्यते स्वामित्वेन लभते इत्यर्थः । महत्सेवामिति । पञ्चमे ऋषभवाक्यम् । स्फुटार्थम् ॥ १६ ॥

उक्तमर्थं विवृणोति—सत्सङ्गविशुद्धेति । सत्सङ्गेन विनष्टभगवद्वैमुख्ये जीवे सत्सङ्गहेतुकाद्भगवत्प्रसादरूपात्तत्सांमुख्यात्तत्सम्बन्धः स्वस्वामिभावलक्षणो भवतीत्यन्वयः । स कीदृश इत्यपेक्षायां विशेषणद्वयं ज्ञानानन्देति वेदान्तजन्येति च । स्फुटार्थम् । सत्सङ्गाद्वैमुख्यनाशेन सांमुख्योदयाद्भगवत्स्वरूपं जीवस्य स्फुरतीत्युक्तम् । अथ प्रेमलक्षणया भक्त्या तद्गुणाः स्फुरन्तीत्याह ततो

कोऽविद्याविशेषो विनश्यति, ततस्तमसौ साक्षात्करोतीति द्वयोरविद्ययोर्ध्वंसो विमोक्षः ॥ १७ ॥

एवमेवाह श्रुतिः—'विमुक्तश्च विमुच्यते' इति, 'भूयश्चान्ते विश्वमायानिवृत्ति'रिति च । ये त्वनया श्रुत्या बन्धमिथ्यात्वं प्रतिपादयन्ति ते खलु तद्विषयकवेदाप्रामाण्यकरणान्नास्तिका एवेत्यभाणि प्राक् ॥ १८ ॥

तद्ध्वंसश्च कार्योऽपि नित्यः, अभावरूपत्वात् अना-

---

विरतेत्यादिना । ततस्तमिति । तमनन्तगुणलीलाविभूतिं स्वामिनं हरिमित्यर्थः ॥ १७ ॥

अविद्याद्वित्वे प्रमाणमाह विमुक्तश्चेति । काठके । स्वरूपावरिकयाऽविद्यया विमुक्तो जीवो गुणावरिकया तया विमुच्यत इत्यर्थः । भूयश्चेति । स्वरूपावरिकया मायया विमुक्तस्यान्ते परभक्तिलाभोत्तरकाले विश्वमायानिवृत्तिर्गुणावरिकायाश्च पलायनं भवतीत्यर्थः । ये त्विति । चिन्मात्राद्वैतिनः । देहादेः शुक्तिरजतादिवद्भ्रमरचितत्वात्प्रतीतिकालेपि जीवो वस्तुतो मुक्त एवास्ति । स पुनरेकमेवाद्वितीयं नेह नानास्ति किञ्चनेत्यादिवेदान्तवाक्यार्थपरिशीलनात्तद्भ्रमेण विमुच्यते इत्यर्थः । एवं भूयश्चेत्यत्र व्याख्येयम् । तद्विषयकेति । यतो वा इत्यादिप्रपञ्चविषयकेत्यर्थः । प्रागिति । षष्ठे पादे ॥ १८ ॥

ननु द्विविधाऽविद्या । विध्वंसस्य कार्यत्वेनानित्यत्वात्तद्विध्वंसेऽविद्ययोस्तयोरुज्जीवनापत्तिरिति चेत्तत्राह तद्ध्वंसश्चेति ।

वृत्तिशास्त्राच्च ॥ १९ ॥

न च परोक्षस्वभावस्य हरेरापरोक्ष्यं कथमिति वाच्यं, तादृशस्यापि तस्य देवादिवत् षड्जादिवच्च सार्वदिकानुशीलनेन तत्सम्भवात्। आह चैवं भगवान् सूत्रकारः-'प्रकाशश्च कर्मण्यभ्यासा'दिति। एवं च दुःखहानिसुखलाभरूपो मोक्षः ॥ २० ॥

यत्त्वाहुः—मुक्तावहमर्थो विनश्यति चित्सुखरूपं तु किञ्चिदवशिष्यते तदेवात्मवस्तु पुमर्थस्वरूपमिति। तदतीव मन्दं, केनाप्यननुभूतस्य ज्ञानानन्दत्वं ज्ञानानन्दाननुभवितुश्चात्मत्वमिति परिभाषामात्रत्वात्। ईदृक् पुमर्थो हि

---

अभावेति। ध्वंसाभावरूपं कार्यं नित्यं ध्वस्तस्य घटस्य पुनरनागतेः ॥ १९ ॥

न चेति। परोक्षस्वभावस्य प्रत्यक्स्वरूपस्य। आपरोक्ष्यं साक्षात्कारः। सार्वदिकानुशीलनेनेति। श्रुतिश्च ध्याननिर्मथनाभ्यासादेवं पश्येन्निगूढवदिति। अनुशीलनात्प्रस्युदितया कृपाशक्त्या परोक्षस्वभावस्याप्यापरोक्ष्यम्। सच्चिदानन्दरूपत्वात् स्यात्कृष्णोऽधोक्षजोऽप्यसौ। निजशक्तेः प्रभावेन स्वभक्तान् दर्शयेत्प्रभुरिति पाद्मात्। प्रकाशश्चेति। कर्मणि ध्यानेऽभ्यासाद्ब्रह्मप्रकाशो भवतीत्यर्थः। एवं चेत्युक्तप्रकारेण ॥ २० ॥

मुक्तो निर्दुःखः सुखीत्युक्तं, एतत्प्रातिकूलं केवलानुभूतवादिमतं निराकृतमपि पुनः प्रसङ्गान्निराकरोति ये त्वाहुरित्यादिना।

विगीतः। 'दुःखहानिः सुखप्राप्तिः श्रेयस्तत्रेह चेष्यत' इति स्मृतेः। दुःखशून्यः सुखी स्यामितीच्छैव तत्त्वे मानं तदभावादप्रमाणं तत्कल्पनम्। तदुभयरूपः पुमर्थः खल्वात्मावधिको दृष्टः। आत्मनोऽहमर्थस्य विनाशे सम्भवेत् ॥२१॥

यत्त्वाहुरात्मा खलु दुःखहेतुः पापार्जनादतस्तन्नाशादेव दुःखनिवृत्तिः स्यादिति, तत् किल कुबुद्धिविजृम्भितमेव। जागर एव दुःखोदयो न तु सुषुप्तावित्यन्वयव्यतिरेकाभ्यामात्मनोऽहमर्थस्य तत्राऽहेतुत्वात्। किञ्च शरीरेन्द्रियविषयवेदनादेरपि तत्र हेतुत्वम्। ज्ञानभोगाभ्यां कर्मणो विनाशे सति हेत्वभावेन शरीराद्यनुत्पत्तौ स्यादेव दुःख-

---

केनापीति। तदा ह्यनुभवितुर्धर्मिणोऽभावस्तन्मतः। ज्ञानानन्देति। न हि विज्ञातुर्विज्ञातेरित्यादिश्रुत्यात्मनोनुभवितृत्वं स्वीकृतमस्ति। ईदृगिति। दुःखहानिसुखप्राप्तिभिन्नः। दुःखेति। चतुर्थे श्रीनारदवाक्यम्। इहेति। कर्मानुष्ठाने। दुःखशून्य इति। तत्त्वे मोक्षस्य दुःखहानिसुखप्राप्तिरूपत्वे। तदभावात्तादृशेच्छाविरहात्। तदुभयेति। आत्मावधिको जीवात्माश्रयकः। असावात्मावधिकः पुमर्थः ॥२१॥

यत्त्विति। आहुर्भावक्षणिकत्ववादिनो बौद्धाः। पापार्जनात्पापकर्मोत्पादनात्। जागर इति। शरीरेन्द्रियविषयविज्ञानवती जाग्रदवस्था दुःखहेतुस्तस्यां नष्टायां सुषुप्तौ तु न दुःखमित्यन्वयव्यतिरेकाभ्यां जाग्रदवस्थैव तादृशी दुःखहेतुर्न त्वात्मेत्यर्थः। ज्ञानेति। कर्मणः पापस्य हेतोः। पापस्याभावेन तत्कार्यस्य शरी-

निवृत्तिरतोऽनुचित एवात्मविनाशस्वीकारः ॥ २२ ॥

किञ्च दुःखाभावोऽप्यात्मनिष्ठः सन् पुमर्थः, अन्यथा स्तम्भादिनिष्ठोऽपि स तथा स्यात्।तस्मादात्मभिन्नानामेव दुःखहेतूनां मुक्तौ विनिवृत्तिर्न त्वात्मनश्च । इतरथा स्तम्भादिशून्यतापि मुक्तिः स्यात् । आत्मशून्यत्वस्तम्भादिशून्यत्वयोर्विशेषाङ्गीकारे निर्विशेषत्वक्षतिः । अपि च–आत्मविनाशो मोक्षः किमात्मनः फलमनात्मनो वा । नाद्यः तस्यैवाभावात् । न हि फलिनोऽभावे फलमुपपद्यते । नेतरः अनात्मनस्तेनोपकाराभावात् । तस्मादुपेक्ष्याः कुबु-

---

रादेरनुत्पत्तौ सत्यम् ॥ २२ ॥

किञ्चेति । अन्यथा दुःखाभावस्यात्मनिष्ठतया पुमर्थत्वास्वीकारे स्तम्भादिनिष्ठोपि दुःखाभावः पुमर्थः स्यादित्यर्थः । तस्मादिति । दुःखहेतूनां जागरोपलब्धसम्बन्धानां शरीरेन्द्रियविषयवेदनानां तद्धेतूनां कर्मणां चेत्यर्थः । इतरथेति । आत्मनोपि मुक्तौ विनिवृत्तिस्वीकारे । स्तम्भादीति । यथात्मशून्यताया न कोपि द्रष्टा तथा स्तम्भादिशून्यतायाश्च न कोपीति तयोर्विशेषस्वीकारे तौल्यक्षतिरित्यात्मास्तित्वप्रसिद्धिरिति भावः । अपि चेति । नाद्यः, आत्मविनाश आत्मनः फलमिति प्रथमः पक्षो नेत्यर्थः । तस्यैवेति । फललिप्सोरात्मन इत्यर्थः । आत्मविनाशो देहादेरनात्मनः फलमिति द्वितीयोपि पक्षो नेत्यर्थः । कुतः ? अनात्मनो देहादेस्तेनात्म-

द्धयः ॥ २३ ॥

तदेवं सर्वेश्वरस्य भगवतः श्यामसुन्दरस्य जीवजडात्मकात् प्रपञ्चाद्भेदस्तज्ज्ञानभक्तिभ्यां जीवस्यात्यन्तिकदुःखहानिसुखप्राप्तिसम्भव इति कृत्स्नं शास्त्रं जीवेशभेदपरं निर्णीतम् ॥ २४ ॥

तत्र यान्यभेदपराणीव वाक्यानि कानिचित् प्रतीयन्ते तानि कचित्तन्मात्रायत्तवृत्तिकतया तन्निष्ठतद्व्याप्यतया वा विश्वं तदात्मकमिति बोधयेयुः । कचिज्जीवेशयोः स्थानैक्यान्मत्यैक्याच्चाऽभेदं बोधयन्ति । कचिच्छक्तेर्जीवजडरूपायाः शक्तिमतः परेशादनन्यत्वादभेदमाहुः ।

---

विनाशेनोपकाराभावात् । आत्मनैव देहादेरुपकारो भवति ॥२३॥

महाप्रकरणमुपसंहरति तदेवमिति ॥ २४ ॥

ननु शास्त्रं चेत् सर्वं भेदपरं तर्ह्यभेदवाक्यानां सङ्गतिः कथमित्यपेक्षायां पूर्वदर्शितामपि तां पुनर्विशदतयाऽन्ते दर्शयति तत्रेति । शास्त्रे । तन्मात्रेति । ब्रह्माधीनस्थितिजीविकतयेत्यर्थः । तन्निष्ठया ब्रह्माधिकरणतया । स्थानैक्यादिति । यथा प्रातर्विभिन्नाश्चरन्तः पशवः सायमैक्यं भजन्तीति । मतैक्यादिति । यथाऽत्र विवदमाना राजानः श्वऐक्यं गन्तार इति स्वरूपभेदे विद्यमानेपि स्थानमत्यैक्येनाभेदो व्यपदिश्यते । कचिच्छक्तेरिति । विशेषणानां विशिष्टानतिरेकादित्यर्थः । कचिच्च भगवदिति । अवताराणामवतारिस्वरूपत्वादित्यर्थः । चिन्मात्रैक्यवादे तु स्व-

क्वचिच्च भगवदाविर्भावेषु प्रतीतेः स्वगतभेदं निवारयन्तीति सर्वमनवद्यम् ॥ २५ ॥

परे त्वेवं वाक्यार्थं वर्णयन्ति 'आत्मैवेदं सर्वम्' 'सर्वं खल्विदं ब्रह्म' 'नेह नानास्ति किञ्चने'त्याद्याः श्रुतयः सर्वेश्वरस्य ब्रह्मणः सर्वाभेदमाहुः, 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टं यदा पश्यति अन्यमीशम्' 'द्वा सुपर्णा सयुजा सखाया' 'कर्मक्षये याति स तत्त्वतोन्यः' 'निरञ्जनः परमं साम्यमुपैती'त्याद्यास्तु तस्य सर्वस्माद्भेदम् । द्विविधयोश्च तयोर्मिथोविरुद्धार्थतया प्रतीतावपि तयोरप्रामाण्यस्यान्याय्यत्वात् । द्वयोः प्रामाण्ये स-

---

ष्टिरुपदेशश्च चिन्मात्रादेकस्मान्न सम्भवतीति तन्मतं सुधीभिर्न श्रद्धेयम् ॥ २५ ॥

अथ विशिष्टाद्वैतवादं समर्थयति परे त्विति । परे श्रीवैष्णवाः । कर्मेति । स मुक्तो जीवः । याति ब्रह्म प्राप्नोति । तत्त्वतः स्वरूपतस्तदाप्यन्यो भिन्नः । अथाभेद एव भेद एव च निखिलाः श्रुतयो नाञ्जस्येनान्वयं भजेरन्नित्यतस्तासां द्विविधानां व्यवस्थायै भाव्यमित्याह द्विविधयोरिति । द्विविधयोरभेदभेदावेदिकयोः श्रुत्योर्मिथोविमर्दितार्थतया प्रतीतयोर्विषयभेदेन व्यवस्था वक्तव्येत्यन्वयः । कुतस्तयोर्व्यवस्था कार्येत्यत्र हेतुस्तयोरिति । अपौरुषेयवाक्यत्वाविशेषादिति भावः । न चाऽद्वैतं वा मृषाभूतमापाद्य तदेकतरश्रुतेरप्रामाण्यं वाच्यमित्याह द्वयो-

म्भवत्येकतराप्रामाण्यस्यापि तथात्वाद्विषयभेदेन न व्यवस्थो तयोर्वक्तव्या। तथा हि सुबालोपनिषदि-'अन्तःशरीरे निहितो गुहायामज एको नित्य एती'त्यादौ 'यस्य पृथिवी शरीरं, यस्य तेजः शरीरं, यस्य वायुः शरीरं, यस्याकाशः शरीरं, यस्य मनः शरीरं, यस्य बुद्धिः शरीरं, यस्याहङ्कारः शरीरं, यस्य चित्तं शरीरं, यस्याव्यक्तं शरीरं, यस्याक्षरं शरीरं, यस्य मृत्युः शरीरमेष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण' इत्यभिधानादैक्यश्रुतीनां शरीरशरीरिभावेनाभेदो विषयेष्वेवं श्रुतीनां तु स्वरूपभेदः सः, इतरथा जीवगता दोषा ब्रह्मणि प्रसज्येरन्निति भेदाभेदश्रुत्योर्विषयभेद-



रित्यादि। अत्रापि तत्त्वाविशेषादिति बोध्यम्। तथात्वादित्यन्याय्यत्वादित्यर्थः। तथा च प्रामाण्यत्यागे नास्तिकतापत्तिरिति भावः। अन्तरिति। अव्यक्तं प्रधानम्। अक्षरं जीवः। मृत्युः कालः। शरीरशरीरिभावेनाभेद इति। यथा गवादिशब्दानां विशेषणभूतगोत्वादिवाचिनां गोत्वादिविशिष्टेषु गवादिषु पर्यवसानं दृष्टं तथा विशेषणभूतशरीरवाचिनां प्रकृतिजीवकालशब्दानां तत्तच्छरीरविशिष्टे नारायणे ब्रह्मणीति विशिष्टमेकं ब्रह्मेति निष्कर्षः। स्वरूपेति। विभुत्वाणुत्वादिभिर्नित्यैर्धर्म्मैर्जीवब्रह्मस्वरूपयोर्यो भेदः स द्वैतश्रुतीनां विषय इत्यर्थः। इतरथेति।

प्रदर्शनान्मिथोविरुद्धार्थप्रतीतिर्निवर्तिता ॥ २६ ॥

चिज्जडयोर्भेदस्य चाऽभेदस्य च स्वाभाविकत्वे व्याघाताज्जडाभेदसाधकानां च पुंसां जाड्यापादकत्वेन स्वव्याघाताच्च जीवप्रधानब्रह्माभेदानुपपत्तेस्तेषां स्वरूपभेदः सिध्यतीत्यस्मिन्नपि पक्षे जीवेशस्वरूपभेदपरमेव शास्त्रमिति विस्फुटम् ॥ २७ ॥

नवीनास्तु केचिन्मन्यन्ते कार्य्यकारणयोर्भेदाभ्यां तथा देहदेहिनोर्गुणगुणिनोर्जीवेशयोश्च स्वरितस्वरवत् । स्वरितस्य यथोदात्तत्वानुदात्तत्वाभ्यां द्विरूपत्वं

---

जीवब्रह्मणोः स्वरूपतोऽप्यभेदस्वीकारे सतीत्यर्थः ॥ २६ ॥

नन्वीशजीवप्रधानानां भेदाभेदावूरीकृत्य द्विविधयोः श्रुत्योरविरोधः कथं न समर्थ्यते तत्राह चिदिति । जीवादीनां त्रयाणामभेदानुपपत्तेस्तेषां स्वरूपभेदः सिद्ध्यतीत्यन्वयः । कुतस्तेषां त्रयाणामभेदानुपपत्तिरिति चेत्तत्राह चिज्जडयोरिति । भेदेनाभेदस्याभेदेन तु भेदस्य च व्याघातः, मिथोविमर्दित्वादित्यर्थः । ये पुरुषा जडेन प्रधानेन सार्धमात्मनामभेदं साधयन्ति तेषां चेतनत्वव्याघातान्न तत्साधकतेत्येवं जीवादीनां त्रयाणामभेदासिद्धेः स्वरूपतो भेदः सिद्ध इत्यर्थः ॥ २७ ॥

अथाधुनिकीं कल्पनां दूषयति नवीनास्त्विति । स्वकल्पनायां निर्मूलतादोषमपाचिकीर्षवो भेदवाक्यान्यभेदवाक्यानि च सङ्गमयन्तो भट्टभास्करादय इत्यर्थः । देहदेहिनो-

स्वरितत्वेन त्वैकरूप्यमिति । तथा हि कार्य्यकारणयोर्भेदे हि कपालादेर्गुरुत्वमेकं घटादेश्चैकमिति तुलारोपे द्विगुणं तत् स्यात् । अभेदे तु जलानयनादिकार्य्यापन्हवः कारकव्यापारवैयर्थ्यं च । तस्मात्तयोर्भेदाभेदौ स्याताम् । न च विरोधः, एकरूपेण विरोधेऽपि भिन्नरूपेणाऽविरोधात् । मृत्तिकात्वादिनाऽभेदः घटत्वकपालत्वादिना तु भेद इति । देहदेहिनोर्गुणगुणिनोश्च ब्रह्मत्वेनाऽभेदः, गौणत्वेन मुख्यत्वेन च भेदः । एवं जीवेशयोश्च । इत्थं च तत्तद्विषयकाणि वचांस्याञ्जस्यं भुञ्जीरन्निति । नैतच्चारु, यदि जीवेशयोः स्वरूपेणैवाभेदस्त-

---

रिति । भगवद्विग्रहस्य भगवता विग्रहिणा सह भेदाभेदाभ्यां भाव्यमित्यर्थः । एवमन्यच्च व्याख्येयम् । अभेदे त्विति । घटश्चेन्मृत्पिण्डात्मा तर्हि जलानयनादिकमपलपनीयम् । मृत्पिण्डश्चेद्घटात्मा तर्हि कारकव्यापारो व्यर्थः स्यादित्यर्थः । तस्मान्नास्त्यभेद इत्यर्थः । अन्यत्राप्येवमित्याह देहेति । विग्रहविग्रहिणोः सार्वज्ञ्यादितद्वतोश्च । ब्रह्मत्वेनेति । विज्ञानानन्दब्रह्मरूपत्वेनेत्यर्थः । गौणत्वेनेत्यादि । देहो गुणश्च गौणः । देही गुणी च मुख्य इत्यर्थः । इत्थं चेति । तद्विषयाणि भेदाभेदयोः प्रतिपादकानि । आञ्जस्यं मुख्यार्थताम् । भुञ्जीरन् भजेयुः । निराकरोति नैतदिति । जगत्कर्तृत्वादीत्यत्राप्यांशिकामिति बोध्यम् । तथा च बादरायणसिद्धान्तविरोधः । तत्सिद्धान्ते हीशस्य कदाचि-

ह्रीशस्याप्यांशिकं सुखदुःखभाक्त्वं जीवस्य च जगत्कर्तृत्वादि। यदि 'वाचं धेनु'मित्यादिवदारोपित एवासौ मतस्तदा नयान्तरताऽसिद्धिः। स्वरितस्य त्वर्द्धनारीश्वरादिवत् द्विरूपत्वान्न तत्र दृष्टान्तीभावः। जलानयनादिकार्यापह्नवादिभिः कार्य्यकारणाभेदवांस्तु न स्यात्। तदनन्यत्वाधिकरणे तद्भाष्ये च तदर्थस्य समर्थितत्वादिति। तस्मात् कल्पनमात्रमिदम्॥ २८॥

यत्तु केचिदाहुः—एकमेव निर्धर्मकमिति परे वदन्ति भिन्नं धर्मीति त्वपरे। परं त्वत्रोभयत्रापि नोपयुक्तिं पश्या-

---

दपि न सुखदुःखभाक्त्वं जीवस्य मुक्तस्यापि न जगत्कर्तृत्वादीति सूत्रभाष्यादिषु द्रष्टव्यम्। यदीति। असावभेदः। नयान्तरेति। भेदाभेदमतासिद्धिः। शुद्धभेदकुक्षिप्रवेश इत्यर्थः। दृष्टान्तं दूषयति स्वरितस्येति। ह्रस्वस्वरित एकमात्रत्वादद्वैतभाक् दीर्घस्वरितो द्विमात्रत्वाद्द्वैतभागिति स न दृष्टान्तः। द्वैगुण्यं तूभयोरस्तु। तत्र भेदाभेदमते। जलानयनेति। उपादानोपादेययोर्भेदे पृथक् प्रतीतिः स्यात् सम्पृक्तत्वे परिमाणाधिक्यं स्यादतस्तयोरभेद एव। कारकव्यापारस्तु घटावस्थाभिव्यञ्जकार्थस्तदभिव्यक्तौ च जलानयनादि तेनैव सिद्ध्येदिति न तदपन्हव इति भाष्ये निरूपितं द्रष्टव्यम्॥ २८॥

यत्त्विति। केचित् स्वकल्पनाया निर्मूलत्वं दूषणमपनिनीष-

मः, भागतो वाक्यार्थकदर्थनात् । किन्त्वेकमेव तत् परमार्थतः सर्वाकारमित्येत्र सम्यक् । एतन्मते जीवेश्वरयोः स्वरूपैक्येऽपि व्यूहतद्वतोरिव वैलक्षण्यव्यवहारो नित्यस्तेन न क्वापि वाक्यव्याकोपः । नाप्यत्र सर्वथा धर्मव्यतिकरः कचिदैक्येऽपि सति तददर्शनात् । न हि घटकपालयोर्गुणगुणिनोश्च सत्यपि तस्मिंस्तमीक्षामहे । सगु-

---

वो विष्णुस्वाम्यनुयायिनंमन्या नवीना एवेत्यर्थः । परे शङ्कराचार्याः । अपरे मध्वाचार्याः । उभयत्र मतद्वयेपि । भागतो वाक्यार्थेति । परे भेदवाक्यार्थानन्यथयन्त्यपरे त्वभेदवाक्यार्थानित्यर्थः । भवता कथं वाक्यार्थो वर्ण्यत इति चेत्तत्राह—किं त्विति । परमार्थतो वस्तुतस्तद्ब्रह्म सर्वाकारमीशजीवप्रकृतिकालरूपं चतुर्दशभुवनात्मकं चेति निखिलः प्रपञ्चश्चिद्रूप एव । इह जडत्वभानं तु चिद्रूपत्वाज्ञानहेतुकं सुवर्णजलवद्भ्राह्यमित्यर्थः । व्यूहेति । यथा वासुदेवादेर्व्यूहस्य नारायणेन सार्धमभेदेपि परत्वव्यूहत्वाभ्यां वैलक्षण्यमस्ति तद्वज्जीवेशयोस्तन्मन्तव्यं न तु द्वैतमित्यर्थः । तेन न क्वापीति । द्वा सुपर्णेत्यादौ वैलक्षण्यमादाय द्वान्येत्यादिपदप्रयोग इत्यर्थः । नाप्यत्रेति । धर्माणां व्यतिकरः साङ्कर्यम् । सत्यपीति । अभेदे सत्यपि तं धर्मव्यतिकरं न पश्यामः । यथा घटत्वं न कपाले कपालत्वं च न घटे तथा जीवत्वं नेश्वरे ईश्वरत्वं च न जीवे इति न भक्तिसिद्धान्तहानिरिति भावः । सगुणेति । सगुणवाक्यं स्वरूपानुबन्धिगुणपरम्, निर्गुणवाक्यं

णनिर्गुणत्वाक्ययोस्तु हिंसाहिंसावाक्यवद्विषयभेदेन व्यवस्थेति सर्वं निरवद्यमिति ॥ २९ ॥

तदेतदविचारिताभिधानं, दुःखभोगान्यथानुपपत्तेर्बाधकत्वात । यदि जीवो नाम ब्रह्मैव स्यात्तर्हि दुःखभाक् न स्यात । ननु जडप्रपञ्चस्य सत्यत्वे स्यादयं दोषः स तु नयान्तरवदिहापि मिथ्यैवेति चेन्न, वेदा-

---

तु प्रातीतिकमायिकगुणनिषेधपरम् । यथा हिंसावाक्यं यज्ञीयपशुहिंसापरम्, अहिंसावाक्यं तु यज्ञादन्यत्र पशुहिंसानिषेधपरं, तद्वत् ॥ २९ ॥

निराकरोति–तदेतदिति । दुःखभोगेति । जन्मजरामरणनरकानुभवो जीवस्य श्रूयते तस्येश्वराभेदे स नोपपद्यते तदनुपपत्त्या तस्य तदभेदो बाध्यत इत्यर्थः । ननु जडेति । यथा केवलाद्वैतिनां जडप्रपञ्चः स्वाप्निकरथाश्वादिवन्मृषैव तथास्माकमपीति जन्मजरादिदुःखानुभवस्य वस्तुतोऽसत्त्वात्तदनुभवान्यथानुपपत्त्या जीवस्येश्वराभेदो न शक्यो बाधितुमिति चेदित्यर्थः। परिहरति–नेति । जडप्रपञ्चस्य मिथ्यात्वे तत्प्रतिपादकस्य यतो वा इमानीत्यादिकस्य वेदस्य वन्ध्यासुतो भातीत्यादिवाक्यवन्निरर्थकत्वेनाप्रामाण्यादौद्धत्यापत्तेरित्यर्थः । किंचेति । ये भगवति कारुण्यपावनत्वादयो गुणास्तेषामभावः स्यात् । करुणा खलु स्वस्मादन्यं दीनं पतितं चोद्दिश्य प्रभोर्भवति न स्वात्मानमेव तादृशमुद्दिश्येति, तस्मात्तस्य कारुणि-

प्रामाण्यादिदोषापत्तेः । किञ्च कारुण्यादीनां चात्र दत्तोत्तरतोपपत्तिर्निरुद्देश्यत्वात् । तस्माद्वाक्यार्थावगाहनाशक्तैः कैश्चिन्मन्दमतिभिः कल्पितमिदं मतद्वयमतो यत्किञ्चिदेतत् ॥ ३० ॥

विद्यारूपं भूषणं मे प्रदाय
ख्यातिं निन्ये तेन यो मामुदारः ॥

---

कत्वादिवाक्यानि न सम्भवेयुरित्यर्थः । तस्मादिति । उभये ह्येते केवलाद्वैते सदोषत्वात् केवले द्वैते च निर्दोषेपि तद्वादिशिष्यतापत्तिलाञ्छनभयादरुचयः स्वातन्त्र्येच्छवः कौणिकाः सन्निहिताश्च तत्त्ववादिभिः स्वानीया (?) इत्युपेक्ष्या एव कुधियः ॥३०॥

एवं भाष्यपीठकं निर्माय भाष्यनिर्माणे भगवता कृतमनुग्रहं प्रकटयन्नन्ते तत्परमोत्कर्षाशंसनं मङ्गलमाचरति विद्येति । यः श्रीगोविन्दो मे मह्यं विद्यारूपं भूषणं प्रदाय तेन तद्रूपेण भूषणेन मां ख्यातिं प्रसिद्धिं निन्ये प्रापितवान् । नन्वेवं कुतः कृतवान् तत्राहोदार इति । उदारो दातृमहतोरित्यमरः। स जीयान्निजोत्कर्षं सर्वत्राविष्करोतु । कीदृशः? राधाबन्धुर्वार्षभानवीप्रियः। बन्धुराङ्गः कमनीयसर्वावयवः । स्वप्ननिर्दिष्टभाष्यः स्वप्ने त्रिर्निर्दिष्टं भाष्यं येन सः । अत्रेदं बोध्यम्—नन्दात्मजस्वयंभगवत्परतया ब्रह्मसूत्रार्थनिर्णयं परैः पृष्टो भाष्यकृततया तन्निर्णयस्याकरणत्वादतिखिन्नो बभूव, तदतिखेदमसहिष्णुः स भगवान् श्यामसुन्दरः पीताम्बरो यज्ञोपवीती धृतोर्ध्वपुण्ड्रो धम्मिल्ली स्वापे त्रिरादिदे-

श्रीगोविन्दः स्वप्ननिर्दिष्टभाष्यो
राधाबन्धुर्बन्धुराङ्गः स जीयात् ॥ ३१ ॥
यद्ब्रह्मसूत्रेषु विभाति भाष्यं
कृष्णात्मकं व्यक्तनवप्रमेयम् ॥
तस्योपवेशाय सुवर्णपीठं
सिद्धान्तरत्नं न भवेत् किमेतत् ॥ ३२ ॥
सिद्धान्तरत्नकिरणात् किल भाष्यचन्द्रा—
दद्वैतशार्वरहरादमलप्रकाशात् ॥

---

श। प्रथमे कुर्विति, द्वितीये कुरु तव भविष्यतीति, तृतीये ब्रह्मसूत्राणि व्याचक्ष्व तद्भाष्यं ते संसेत्स्यतीत्येवं भाष्यसिद्धये यो मां त्रिर्निरुक्तवानिति। इदमप्रकाश्यमप्युक्तं स्वामिकृपाया गेयत्वात् स्वकर्तृताभ्रान्तेः परिहार्यत्वाच्च ॥ ३१ ॥

भाष्यं स्तुवन् पीठकस्य तत्पोषकतामाह—यदिति। कृष्ण आत्मा वर्ण्यो यत्र तत्, पक्षे कृष्णवत्पूज्यत्वं भाष्यस्योक्तम्। व्यक्तानि हरिपारतम्यादीनि नवैव प्रमेयाणि यत्रेति माध्वत्वं स्वस्योक्तम्। उपवेशाय सुखस्थितये। एतदुक्ताः श्रुतियुक्तीर्विना भाष्यस्यापोषात्। सुवर्णं कनकम्। पक्षे शोभनान्यक्षराणि सिद्धान्ता रत्नानि यत्र तत्। एतन्नामकं पीठमासनम् ॥ ३२ ॥

तच्च भाष्यं तत्त्वविवित्सूनां परमोपकारि। हरिगुरुभक्तिमद्भिश्च तैरधीतं सत्तत्त्वानि प्रकाशयति न तु जीविकार्थकपाण्डि-

दृष्टं न किं किमिह तत्त्वमुदग्रधीभिः
श्रीमन्मुरारिचरणाम्बुजभक्तिभाग्भिः ॥ ३३ ॥
विजयन्ते श्रीराधादामोदरपादपङ्कजद्युतयः ॥
याभिः सकृदुदिताभिर्विनिर्मितो मे महान् मोदः ॥ ३४ ॥

इति सिद्धान्तरत्नाख्यभाष्यपीठके अष्टमः पादः ।

---

त्यकामनयाऽधीतं सत्तथेति भावेनाह सिद्धान्तेति । सिद्धान्तरत्नं पीठकमेवामृतवर्षिणः किरणा यस्य तस्मात् । अद्वैतं निर्गुणचिदैक्यवादस्तदेव शार्वरं तिमिरं तद्धरात्तद्विनाशकात् । अमलो विशदः प्रकाशो वस्तुसाक्षात्कारलक्षणः प्रभामण्डलो यस्य । तस्मात् किं किं तत्त्वं परेशस्वरूपं जीवस्वरूपं तद्धामतद्भक्तिस्वरूपं प्रकृत्यादिस्वरूपं वा न दृष्टमपि तु सर्वं तत्त्वं दृष्टमित्यर्थः । मुरारिर्नन्दसूनुः स्वयंभगवान् । पक्षे स्वपूर्वचतुर्थश्च ॥ ३३ ॥

अथ स्वमन्त्रदेशिकोत्कर्षं मङ्गलमन्ते प्रदर्शयति—विजयन्त इति । राधादामोदरः कान्यकुब्जविप्रवंशावतंसः स्वस्य मन्त्रोपदेष्टा महत्तमो विद्वदग्रणीस्तस्य पादपङ्कजद्युतयः महत्तमतां द्योतयितुम्। सकृदिति । मोदः परतत्त्वावगतिहेतुकः सत्सभानुकम्पाभाजनताहेतुको नृपेन्द्रसभाजनहेतुकश्च । पक्षे श्रीराधा च श्रीदामोदरश्च कृष्णः, तयोः पादपङ्कजद्युतयः । महान् मोदस्तदेकान्तिताहेतुकः ॥ ३४ ॥

इति श्री गोविन्दभाष्यपीठकटिप्पण्यामष्टमः पञ्चपादो व्याख्यातः ।

# ERRATA

| Page | Line | Read | For |
|---|---|---|---|
| 12 | 15 | वाक्यं च | वाक्य च |
| 23 | 2 | भेदप्रतिनिधिर्वि-शेषः | 'भेदप्रतिनिधिवि-शेषः |
| 87 | 14 | स्वमूर्तिं | स्वमूर्ति |
| 103 | 6 | 'माधुर्य्यम् | 'माधूर्य्यम् |
| 107 | 7 | लोकं वैकुण्ठ' | लोकवैकुण्ठ' |
| 108 | 21 | मुण्डके | मुण्ढके |
| 109 | 2 | 'त्यादिवपुषा | 'त्यादिवषा |
| 119 | 1 | 'तत्तल्लीला' | 'तत्तलीला' |
| 121 | 5 | "कलामुहूर्त्तादि' | कलामुहूर्त्तादि' |
| 127 | 11 | विद्यते | विद्यतेः |
| 128 | 16 | वैष्णवाचार' | वैक्ष्यवाचार' |
| 129, 131, 133, 137, 139, 141 | —Head Line | तृतीयः पादः | द्वितीयः पादः |
| 151 | 9 | केशवानां | केशवाना |
| 156 | 8 | 'त्यादिना | 'त्यादीना |
| 162 | 7 | नान्विति | न त्विति |
| 162 | 18-19 | स्वेच्छयेति । आत्मेच्छया | स्वेच्छयेति आत्मेच्छया । |



# INDEX.

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvalī Bhāskara, a Commentary on Udayana's Kiraṇāvali, Dravya section, by Padmanābha Miśra.
Ed. with Introduction and Index by Gopināth Kavirāj, M.A. Rs. 1-12

No. 2—The Advaita Chintāmaṇi, by Raṅgoji Bhaṭṭa, Ed. with Introduction etc. by Nārâyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-12

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvati. Edited with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya. Rs. 1-12

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj, M.A, Rs. 2-0

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-4

No. 6—(Pārt I)-The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka.
Ed. with Introduction etc. by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)-Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra.
Ed. with Introduction etc. by Gopīnath Kaviraj, M.A. Rs. 1-4

No 7—( Part II ) Ditto Rs. 1-8

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra.
Ed. with Introduction etc. by Jagannātha S'āstri Hoshing Sāhityopādhyāya, Rs. 0-10-6

No. 9—(Part 1)-The Bhakti Chandrikā, a Commentary on Sāṇḍilya's Bhaktisūtras, by Nārāyaṇa Tīrtha.
Ed. with a Prefatory Note by Gopināth Kavirāj, M.A. Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, by Baladeva Vidyābhūṣaṇa.
Ed. with a Prefatory Note by Gopinath Kaviraj, M.A.Rs.1-2

No 10-(Part-II)-The Siddhāntaratna by Baladeva Vidyābhūṣaṇa.
Ed. with Introduction by Gopinath Kaviraj, M. A.

No. 11-The S'rī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by Saṅkarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa S'āstrī Khiste Sāhityāchārya. Rs. 0-9

No. 12-The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa S'āstri Khiste Sāhityāchārya. Rs. 1-2

No. 13-The Siddhasiddhānta Saṅgraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M. A. Rs. 0-14

No. 14-The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 0-14

No. 15-(Part I)-The Tripurārahasya, ( Jñāna Khaṇḍa)
Ed.with a Prefatory Note by Gopinath Kaviraj,M.A. Rs.0-14

No. 15-( Part-II )-The Tripurārahasya ( Jñānakhaṇḍa ) Ed. by Gopinath Kaviraj, M. A.

No. 16-The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha S'armā Sāhityopādhyāya, M. A. and Jagannātha S'āstri Hoshing Sāhityopādhyāya. Rs. 1-2

No. 17-The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānātha Jhā, M. A., D. Litt. Rs. 0-14

No. 18-(Part I)-The Gorakṣa siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs, 0-14

No. 19-( Part. I )-The Prākṛita Prakāśa by Vararuchi with the Prākṛita Sañjivani by Vasantarāja and the Subodhini by Sadānanda.
Ed. with Introduction etc. by Batuk Nath Sharma, M. A. and Baladeva Upādhyāya, M. A.